# सम्प्रदायपद्धतिग्रन्थस्य अनुशीलनात्मकं सम्पादनम्

## ( A CRITICAL EDITION OF SAMPRADĀYA-PADDHATI )



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
विद्यावारिधि-( DOCTOR OF PHILOSOPHY )-शोधोपाधये
प्रस्तुतः शोधप्रबन्धः


निर्देशकः
प्रो० युगलकिशोरमिश्रः
आचार्यः, एम० ए०, पीएच० डी०
आचार्योऽध्यक्षश्च-वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

अनुसन्धाता
सुरेशप्रसादपाण्डेय
वेदाचार्यः
शोधच्छात्रः, वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी
पञ्जीकरणसंख्या-१९८१/३२८२



जुलाई १९९३

# सम्प्रदायपद्धतिग्रन्थस्य अनुशीलनात्मकं सम्पादनम्

## ( A CRITICAL EDITION OF SAMPRADĀYA-PADDHATI )




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
विद्यावारिधि-( DOCTOR OF PHILOSOPHY )-शोधोपाधये
प्रस्तुतः शोधप्रबन्धः

निर्देशकः
प्रो० युगलकिशोरमिश्रः
आचार्यः, एम० ए०, पीएच० डी०
आचार्योऽध्यक्षश्च-वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

अनुसन्धाता
सुरेशप्रसादपाण्डेय
वेदाचार्यः
शोधच्छात्रः, वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी
पञ्जीकरणसंख्या-१६८१/३२८२

जुलाई १९९२

## प्रतिज्ञप्तिः

"सम्प्रदायपद्धतिग्रन्थस्यानुशीलनात्मकं सम्पादनम्" इत्याख्यः शोध-प्रबन्धोऽयं मया सम्पूर्णानन्द-संस्कृत विश्वविद्यालयस्य वेदविभागेऽध्यक्षाणाम् आचार्य डा० श्री युगलकिशोर मिश्र महोदयानां निर्देशने ।681/3282 संख्यया पञ्जीकरणमवाप्य यथा नियमं शोधकार्यं कृत्वा विरचितः । अस्य विरचयिता-ऽहं प्रतिजाने यदिदं मदीयं शोधकार्यं मौलिकमस्ति शोधकार्यरूपेण चास्य प्रस्तुति-रितः पूर्वं कुत्राऽपि पूर्णतोऽशतो वा न कृतेति च ।

सुरेशप्रसादपाण्डेय

( सुरेशप्रसादपाण्डेयः )

अनुसन्धाता

## अग्रसारणा

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये श्री सुरेशप्रसादपाण्डेयः अनुसन्धाता पञ्जीकरणमवाप्य मदीय निर्देशने "सम्प्रदायपद्धतिग्रन्थस्य अनुशीलनात्मकं सम्पादनम्" इति विषयमधिकृत्य यथा नियमं शोधकार्यं विधाय शोधप्रबन्धमिमं मन्निर्देशने समार्पितवान् विद्यावारिधिः (पी-एच०डी०) इत्युपाध्यै प्रस्तुतः प्रबन्धोऽयं विश्वविद्यालयीयाध्यादेशापेक्षां पूरयतीति परीक्षणार्थमग्रेसारयामि ।

युगलकिशोर मिश्र

( डा० युगलकिशोरमिश्रः ) 29/7/93

निर्देशकः

Professor & Head
Deptt. of vedic studies
Sampurnanand Sanskrit University
Varanasi

## आत्मनिवेदनम्

अकारणकरुणावरुणालयस्य परमकारुणिकस्य भगवतः श्रीविश्वनाथस्य कृपात्वेन शोधप्रबन्धोऽयं पूर्णतामगात्ततः तमहं सादरं प्रणमामि।

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य वेदविभागेआचार्योऽध्यक्षपदम-धिष्ठितानां सौम्यमूर्तीनां वेदशास्त्रोदध्यवगाहननिपुणानाम् प्रातःस्मरणीय-गुरुवर्याणां डा० युगलकिशोरमिश्रमहोदयानां चरण कमलेषु सततं नौमि, येषांनि-र्देशनेनाहमुपकृतः।

काशी हिन्दूविश्वविद्यालयस्य संस्कृत विभागे उपाचार्य पदमधिष्ठिताः गुरुवर्याः श्रीमन्तः डा० श्रीकिशोरमिश्र महोदयाः मम श्रद्धेयाः सन्ति, येषां सत्परामर्शेन सदाहमनुगृहीतः। सम्पूर्णानन्द-संस्कृतविद्यालयस्य वेदविभागे उपाचार्यपदमधिष्ठिताः गुरुवर्याः डा० कुबेरनाथ पाठकमहाभागाः सुहृद्वरा-वेदविभागस्यैव प्राध्यापकपदमधिष्ठिताः गुरुवर्याः डा० राममूर्ति चतुर्वेदी महाभागाः शासकीय वेंकट संस्कृतमहाविद्यालयस्य वेदविभागे आचार्योऽध्यक्ष पदमधिष्ठिताः गुरुवर्य डा० श्री विनायक त्रिपाठि महोदयाः प्रणम्याः सन्ति यैः काले काले अनुसन्धानार्थमहं प्रेरितः। शासकीय संस्कृतमहाविद्यालयस्य वेद-विषयस्य व्याख्यातृपदमधिष्ठिताः गुरुवर्याः श्री केदारनाथ द्विवेदि महाभागाः तान सौम्यमूर्तीन् सततं नौमि। परमपूज्यानां सनातनधर्ममूर्ति स्वरूपाणां पितामह श्रीतीरथप्रसाद पाण्डेय महाभागानां चरण कमलेषु सततं नौमि। पूज्यानां पितृ चरणानां श्रीमतां पाण्डेयो पाह्वानां सौम्यमूर्तीनां ज्योतिर्विदां श्रीरामसजीवन पाण्डेय महोदयानां पादपङ्कजेषु, जनन्याः श्रीमत्याः सत्यवती देव्याः चरण-कमलेषु च सादरं, सश्रद्धं कोटिशः प्रणमाञ्जलीन् समर्पयामि।

यद्यपि प्राचीनग्रन्थसम्पादनेऽस्मिन् मातृकाणां पाण्डुलिपिनाञ्चत्रुटित भ्रष्टपाठानां संशोधनम् पाठभेद निर्धारणम् सम्प्रदायपद्धत्युक्तानामाकरग्रन्थानां कात्यायनश्रौतादिसूत्राणामुद्धरण प्रदर्शनम्, विवृत्तियोग्येषु स्थलेषु टिप्पणीकरणम् पद्धत्युक्त विषयाणां स्फुटीकरणम्। भूमिकाभागेनालंकरणम्। सम्प्रदायपद्धत्याः कालस्थानादि रतिह्यस्यप्रमाणादीनामन्वेषणम्। पाण्डुलिपीनामुपलब्धये निष्फलं

पत्राचरणम्। इत्यादिषु महान् श्रमो मया विहितः । अथाऽपि "आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानमित्यार्ष वचनेन प्रबन्धेऽस्मिन् किमस्ति रुचिरं किन्चानुचितमित्यत्र गुणैकपक्षपातिनः सहृदया विद्वांस एव प्रमाणम् ।

शोधप्रबन्ध टंकणेऽनुपलब्धेभ्यः सन्धिविरहितेभ्यस्त्रुटितेभ्यश्चाक्षरेभ्यो भीतोऽहं प्रबन्धान्तर्वर्तिनीनां ज्ञाताज्ञातानां त्रुटीनां कृते क्षमां प्रार्थयामि, यत्--

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥
दूरात् सूर्वां निर्धूय कृपां कृत्वा ममोपरि ।
विलोक्यो मत्प्रबन्धोऽयं बुधैः मद्भिर्द्विजोत्तमैः ॥

इत्या वेदयति -

सुरेशप्रसादपाण्डेय
( सुरेश प्रसाद पाण्डेय )

विषयसूची

(संक्षिप्ता)

विषय सूची

(विस्तृता)

उत्तरार्ध:

## विषयप्रवेश:

सम्प्रदायपद्धतिपरिचय: --

सम्प्रदायपद्धत्याख्योऽयं ग्रन्थः याज्ञिक सम्प्रदायानुसारं कर्मजातं निरूपयतीति ग्रन्थाभिधानेनैव स्फुटं ज्ञायते । तत्राप्यमाध्वर्यव प्रतिपादको वर्तते, तस्यैव कर्मस्वरूपज्ञापकत्वात्। ग्रन्थोऽयं कात्यायन सम्प्रदायमाश्रयति श्रौतकर्मस्वरूपप्रतिपादने । सत्स्वपि श्रौतसूत्रग्रन्थेषु बहुषु प्रयोगसरणिनिर्देशकत्वात् पद्धतिग्रन्थानां याज्ञिकेषु समादरविशेषो दृश्यते । यथा हि अग्निष्टोमाध्वर्य-वाहिपद्धतेः पठनपाठनादौ वैशिष्ट्यमनुभूतचरम्। तथैवे यं सम्प्रदायपद्धतिरपि याज्ञिकानां मोदाया सम्भवति। इयं निबन्धनदृशा पूर्णतः कात्यायनश्रौतसूत्र-मनुकरोति। परमत्र न सूत्रकृता समुक्तानां विविधपक्षाणां पूर्वोत्तर नयेन विमर्शः। अपितु सूत्रकृतः पदार्थक्रम एव संगृहीतः । अतोऽस्याः पद्धतेः साहाय्येन कर्मानु-ष्ठापने महत् सौकर्य भवेदिति अस्य ग्रन्थस्य वैदिकानुसन्धानक्षेत्रे महत्त्वं स्फुटम्।

ग्रन्थविषया: --

सम्प्रदायपद्धतिग्रन्थोऽयं विषयदृशा कात्यायनसूत्रमनुगच्छतीति प्रतिपादितचरम्। अत्रापि कात्यायनश्रौतकल्पस्य द्वितीयाध्यायमारभ्य पञ्च-विंशाध्यायं यावत् ये ये समुक्ता विषयास्ते यथाक्रमं पद्धतिविधया निरूपिताः । षड्विंशाध्यायस्य प्रवर्ग्यविषयः सोमयागान्तर्गतमुक्तः । सम्प्रदायपद्धताविमे विषयाः क्रमशः समुक्ताः --

दर्शपूर्णमासेष्टिः, पिण्डपितृ यज्ञः, आग्रयणम् , प्रवासादागतस्यो-पस्थानम्, अग्निहोत्रम्, चातुर्मास्ययागः, निरूढपशुबन्धः, ज्योतिष्टोमः, दीक्षणीयेष्टिः, सोमक्रयः, प्रवार्ग्यः, रौहिणहोमः, उपसदिष्टिः, वयाभिघा-रणम्, पत्नीकादर्शनां, ग्रहग्रहणम्, चमसभक्षणम्, उदयनीयेष्टिः, द्वादशाहः, गवामयनम्, वाजपेयः, बृहस्पतिसवः, राजसूयः, अग्निचयनम्, सौत्रामणी,

अश्वमेधः, पुरुषमेधः, व्रात्यस्तोमः, सत्राणि, प्रायश्चित्तानि चेति।

ग्रन्थकारपरिचयः —

सरस्वतीभवनग्रन्थागारे विद्यमानस्य मातृकाग्रन्थस्यास्य सम्प्रदायपद्धतेः लेखकः सूचीपत्रानुसारेण श्रीमान् सम्प्रदायशर्मा विद्यते । परमिदं नामैवास्य विदुषः स्यादित्यत्र ममास्ति विचिकित्सा। इदं प्रसिद्धिनामेति मयावधार्यते । यतो हि मूलं नाम भगवत्परमूलं नाम भगवत्परमेव पण्डितानां भवतीति परम्परायां दृश्यते। अतो मूलं नामास्य मृग्यमेव ।

ग्रन्थरचनाकालः —

सम्प्रदायशर्मा कदा जात इति न पुस्तकमातृकावलोकनेन ज्ञातुं शक्यते । न कुत्रापि समयोल्लेखोऽत्र दृश्यते। अथापि मातृका ग्रन्थस्य 129 पृष्ठे लेखकेन काश्चन पंक्तयो न लिखिताः, तत्र स्थानं च रिक्तं दृश्यते। अनेनेदं ज्ञायते यल्लेखक द्वारा यो ग्रन्थः प्रतिलिपिकरणे आदर्शरूपेण प्रयुक्तः सोऽपि त्रुटितः कीटदष्टो वाऽसीत् । प्रतिलिपिकालश्च 1903 ईशवीयवत्सरः विद्यते । अतः ततः पूर्वम् अष्टादशशतके ततोऽपि पूर्वं वा ग्रन्थरचनाकालः इति फलति।

कर्तुर्देशादिविमर्शः

सम्प्रदायशर्मा श्रीमालवंशीयो ब्राह्मण आसीदिति सम्प्रदायपद्धति-ग्रन्थस्यान्त्यपुष्पिकयैव ज्ञायते । श्रीमालीवंशीयास्तु गुर्जरप्रदेशनिवासिनो भवन्ति। राजस्थानेऽपि केचन श्रीमालीब्राह्मणाः सन्ति । अतोऽयं राजस्थाना-भिजनः गुर्जराभिजनो वा ग्रन्थकृदिति फलति ।

अस्य निवासस्तु काश्यामपि भवितुमर्हति । यतो हि काश्यां बहवो गुर्जर-राजस्थानाभिजनाः श्रीमालवंशीयाः सहस्राधिकवर्षेभ्यो निवसन्ति । तेषां

शाखां च शुक्लयजुषां माध्यन्दिनीयाप्यस्ति ।

अयं सम्प्रदायशर्मा वाजपेय्युपनामक आसीदिति तल्लिखितेन ज्ञायते। अतश्चास्य पूर्वपुरुषैर्वा अनेन वा स्वयं वाजपेययागः अनुष्ठित इत्यनुमीयते। यतो हि श्रीमालीब्राह्मणाः उपनामरूपेण श्रीमालीपदमेवो पाददते । अतो वाजपेयी इत्यस्य कर्मानुगुणः उपाधिः ।

ग्रन्थलिपिकालः —

सम्प्रदायपद्धतिग्रन्थस्य मातृका या सरस्वतीभवनग्रन्थालये समुपलब्धा सा कर्गदपत्रेषु विलिखिता वर्तते । तत्र पृष्ठेषु बहुत्र प०नं० 03735 25-11-1903 जी•बी•पी•एन• इति मुद्रितं दृश्यते । अतः ग्रन्थलिपिकालः 25-11-1903 दिनाङ्•कादर्वाचीन एवेति ज्ञायते ।

अस्मिन पाण्डुग्रन्थे 56 संख्याकं पृष्ठं वारद्वयं वर्तते । मन्ये प्रतिलिपि-करणे पृष्ठसंख्योल्लेखे भ्रमवशात् 56 संख्या पुनरङ्•कतेति ।

सम्प्रदायपद्धतिग्रन्थस्य सम्पादनकर्मणि गृहीतहस्तलेखस्य विवरणम्--

सम्प्रदायापद्धतिग्रन्थस्य सम्पादनकर्मणि मया यो हस्तलिखितग्रन्थः समुपयुक्तः स सम्पूर्णानन्दसंस्कृत विश्वविद्यालयीये सरस्वतीभवनग्रन्थालये वाराणसेये समुपलब्धः । अस्य विवरणं निम्नांकितरूपेणास्ति —

| | | |
|---|---|---|
| प्रवेशसंख्या | - | 40348 |
| पुस्तक संख्या | - | 1552 |
| क्रमसंख्या | - | 180 |
| पुस्तक नाम | - | सम्प्रदायपद्धतिः |
| पत्रसंख्या | - | 1 ततः 56, 56 तः 141 पर्यन्तम् । |

आकार - 11·4×4·2

पङ्क्तयः - प्रतिपृष्ठं नव प्रायशः

अक्षराणि - प्रायशः पंक्तौ 56

लिपिः - प्राचीन देवनागरी

प्रतिलिपिकालः- 25/11/1903 ततः अर्वाचीनः ।

आदिपाठः - ।।श्रीगणेशाय नमः ।। अथ कात्यायनश्रौत-सम्प्रदायपद्धतिलिख्यते ।। हेरम्ब संहर विभो ........।

अन्त्यपाठः - इति सम्प्रदेय-(दाये) प्रायश्चित्ताध्यायः समाप्तः ।। इति श्रीमालवशावतंसवाजपेययु-पनामकसम्प्रदायशर्मकृता कात्यायनश्रौतसूत्र सम्प्रदायपद्धतिः समाप्ता: ।।

सम्प्रदायपद्धतिग्रन्थस्य मातृकायाः आद्यमन्तिमं च पृष्ठद्वयमत्र छायाप्रतिकृति द्वारा समुपस्थाप्यते ।

॥श्रीगणेशाय नमः॥ अथ कात्यायनश्रौतसंप्रदाय पद्धतिर्लिख्यते॥ हेरंबसंस्तवविभो तरसां तरायवर्गेन भर्गतनयात्र तवोपचारः॥ प
द्धिप्रमूलखननाय विषाणहस्तः संतर्कितोसि भगवन् त्वयमुपतस्थे॥१॥ कृताधानस्य प्रथमपौर्णमास्यां मातृपूर्विकं श्राद्धं। ततो न्वा
रंभणीया। पुनः स्वस्थानेनिर्लेपः। पुनः पंचभूसंस्काराः॥ उद्धरणं वैकल्पिकपदार्थावधारणं। वद्धशीलः कुशोपग्रहः। पद्समिधो
गृहीत्वा अग्न्यन्वाधानं आहवनीयगार्हपत्यदक्षिणाग्निषु। आहुतिपक्षे गार्हपत्यदक्षिणाग्न्याहवनीयेषु। तूष्णींपक्षे गार्हपत्याहव
नीयदक्षिणाग्निषु युगपच्च समिदाधानं मंत्राभावात्। यजमानो वैतत्कुर्यात्॥ यजमानस्य मांसमैथुनसंकल्पः। अशितव्यप
जंक्षिकं अपराह्णे कृतोपायमनीयाधानं॥ व्रतग्रहणामत्र वेत्सस्य वत्सनियमः॥ असिन्नेवो द्धरणोत्सवमेवाग्निहोत्रहोमः
॥ आवरणपक्षांतं वा। अन्यतरागारेशयनं। प्रातः स्वयमेवाग्निहोत्रहोमं हुत्वा ततउदिते ब्रह्मवरणादि। सपक्षेत्स्प्रतिपयेवान्वा
रंभणीया॥ पुनरुद्धरणं। अग्न्यन्वाधानं॥ मांसमैथुनसंकल्पः। वपनं वा। पाक्षिकं व्रतग्रहणं। सस्यवत्सनियमः। ततो एम
ब्रह्मवरणादि। व्रतजपः गोपायमम्प्रैषो यजमानस्यैव। अपरेणाहवनीयमतिक्रमणं वा॥ आसनेक्षणं। तृणनिरसनं त १

त्पश्चाद्वेदिसंस्काराः कार्याः। ततो स्रुतः वाग्यमनं प्रैषः॥ अनुज्ञानस्य प्रणयनं॥ आहवनीयमुत्तरेणाहंप्रतिनिधानं॥ आह
वनीयगार्हपत्यदक्षिणाग्नीनां परिस्तरणं। पात्रासादनं। गार्हपत्यस्य पश्चिमेणास्तं स्यैव पश्चादुत्तरतो वा। आहवनीयस्य विण
स्तस्यैवोत्तरतः। शूर्पादिद्वयगणः। ततो नः पात्रीवा। पवित्रच्छेदनानि च। अनन्यक्षेपवित्रेपात्रीच। पात्रीयक्षेपवित्रेउपवे
षश्च। आज्यस्थाल्युपसर्जनीपात्रं च। कुशमुष्टिरन्वाहार्यपात्रं च। वेदित्तृणमभ्रिश्च॥ योक्त्रं स्रुवश्च॥ जुहूपभृ ध्रु
ध्रुवासमूहनावद्यानानि च॥ यक्षेपरिधायो विधृत्यौच॥ आज्यपुरोडाशपात्रीव॥ होतृषदनं स्रुतावदानं च कुशधं
प्राशित्रहरणंच॥ अन्वाहार्यतंडुलाश्वंतरश्वानकटश्च। पूर्णपात्रंपक्षेसमिद्ध॥ इध्माबर्हिर्वारूपकल्पनं॥ गार्हपत्यस्य
पश्चाद्दनस्योषधं कृत्वा पूर्णाग्निहोत्रहवण्योरादानं॥ वाग्यमनं प्रतपनं॥ उदकोपस्पर्शनं॥ अतः प्रतिगमनं॥ धूरभि
मर्शनं भेदनं॥ इषामालभ्य जपः आरोहणं दक्षिणा चक्रेण॥ हविः प्रेक्षणं। अप द्रव्यनिरसनं। उदकोपस्पर्शनं॥ अवि
धमानेभिमर्शनं॥ आलंभनं प्रतिदेवत गृहणं॥ चतुर्थं तूष्णीं॥ दोषाभिमर्शनं॥ माऽवेक्षणं॥ अवरोहणं गमनं

सं॰प॰ ९६०॥ एकपक्षेमरणांतकर्म ॥५३॥ सात्रिकेसत्रेपजमानस्मरणेचेत्कालाहुतिः।सोपल्करातास्याग्निात्माधृताद्दह्नं।नेदिष्ठिनः
समोत्सेशाद्दवसापनिर्मथ्यविहृत्सनात्वनिकृंतनायुद्धासनानंतसा।त्रिपातिकं।दपत्स्वप्रार्थनं।अग्निसंसर्गः।समान
जनपदसंसेवमहारात्रेप्रातरनुवाकोपाकरणं।स्त्रग्रेणाग्नतेरणकर्मप्रवर्तनं।सुसमिद्धहोमः।उत्तरादुत्ताकार्पो।वृ
एवत्तोप्रतिपद्धिणानुवाचनंवा।वृहद्रथंतरपृष्ठ्यः।कार्यः।माध्यंदिनेपवमानेत्तौएत्रवसेऽयत्ते।अभीकादीनि
चैके।प्रातःसवनेनिपत्तकालेसंवेद्यायसाहुतिः।त्रिष्टुभेजगत्साउत्सुतरयोःसवनयोः।वाहवोपादीनिहोताध्र॰
संतिसारवमरणाद्ध्यापन्नतिसवनंपथाम्‌त्रितांहोमः।सर्वमरणेद्ध्यासर्वेषां।गिरिमित्रयंतेरसंसवःगिरौ।त्या
ह्यंतेस्च।अविद्विषाणपोर्वाविद्विषाणयोर्वाविद्विषेतोपि।सोमहादेकालाहुतिपूर्वमग्निनिधायत्ततएवयज्ञःस याय
मापनं।पंचगावोदक्षिणा।प्राग्बूदघाहात्पुनर्यज्ञः।सत्रेप्यतदेवाह्लावर्तते।प्रमादास्तोपिकर्मणापत्वाऽदानींका ९६८

स॰प॰ ५६५॥ ल्लाहुतिवसिष्ठेननिमित्तेनपद्धतीसर्वेषांप्रज्ञाप्रेरोहिणी॥५४॥ ॥ इतिसंग्रहेप्रायश्चित्ताध्यायःसमाप्तः॥ इति
श्रीमालववंशावतंसवाजेपय्युनामकसंप्रदायधर्मकृत्ताकात्सायनश्रौतसूत्रसंप्रयपपद्धतिःसमाप्ताः॥

पद्धतिग्रन्थशैली —

सम्प्रदायपद्धतिग्रन्थोऽयं संक्षिप्तशैल्यां प्रणीतः । अत्र न क्रियापदप्रयोगः प्रतिवाक्यं दृश्यते । अपितु कर्मजातस्य क्रमनिरूपणार्थं पदार्थक्रमस्यैवात्र उपदेशः । मूलग्रन्थः प्रायशः शुद्धो वर्तते । परं लेखकप्रमादेन यत्र तत्र स्खलनमपि दृश्यते ।

अत्र ग्रन्थे विभजनक्रमो न रुचिरः । केवलं प्रथमाध्याये, द्वितीयाध्याये, सप्तमाध्याये च समाप्तिरङ्कता ग्रन्थकृता । परन्तु एतेन मात्रमिदमेव प्रतीयते यदस्मिन् ग्रन्थे अध्यायविभागो ग्रन्थप्रणेत्रा अभिमत आसीत् । अन्याध्यायानामनुल्लेखात् अध्यायक्रमेणास्य विभागो नास्माभिः कृतः । क्वचिदन्यत्र "पशुबन्धः यज्ञः समाप्तः, द्वादशाहः समाप्तः, वाजपेयः समाप्तः, राजसूयः समाप्तः, इत्यादिरूपेण यज्ञीयविषयसमाप्तिरप्युटङ्कता दृश्यते । परं न तापि सर्वत्र । बहुषु यज्ञ कर्मसु इयं समाप्तिसूचना नास्ति । अतः प्रकरणदृशापि ग्रन्थकृदुक्तं विभजनं न पूर्णम् । अतोऽस्माभिः ग्रन्थस्य विभजनं न स्वेच्छया कृतम् । तथात्वे मूलग्रन्थे स्वेच्छया परिवर्तन-परिवर्धनदोषः समापतेद् । अतो विषयानुक्रमणिकायामस्माभिर्विषया एव ग्रन्थोक्ताः सूचिताः । न तु विभागः ।

ग्रन्थस्य भाषादिकं न विचारपथमारोहति । यतो हयं पद्धतिग्रन्थो न साहित्यादिदृशा परीक्षणमर्हति । सरलसंस्कृते श्रौतपदघटिते पारिभाषिकबहुले वाक्यजाते संरचितोऽयं ग्रन्थः ।

पद्धतिग्रन्थसम्पादनकृत्यम् —

भारतीयवाङ्मये सन्ति प्राचीनतमा वेदाः । वेदचतुष्टये यजुर्वेदो गणनायां द्वितीयोऽपि श्रौतस्मार्तकर्मप्रकाशकत्वात् विशिष्टं स्थानं लभते । प्रत्येकं वेदे श्रौतस्मार्तरूपेण द्वैविध्यं कर्मणामस्ति । तत्र श्रौतानि कर्माणि साम्प्रतिके युगे विशेषरूपेणानुसन्धेयकोटिं भजन्ते, यतो हि तेषां परम्परा अत्यन्तं दुर्बला सञ्जाता।

तत्रापि श्रौतकर्मसु आध्वर्यवस्य प्राधान्यात् याजुषश्रौतकल्पस्य विशिष्टं स्थानं वर्तते । यजुर्वेदानुयायिबाहुल्येन सम्पूर्णे भारते प्रसारेण च कात्यायनसूत्रस्य महत्त्वपूर्णं पदमस्ति । अतो मया कात्यायनसूत्रानुसारेण प्रणीतस्य सम्प्रदायपद्धति-ग्रन्थस्यानुशीलनात्मकं सम्पादनमस्माभिः शोधकार्यरूपेणाङ्गीकृतम् ।

अनेन कार्येणाप्रकाशितस्य मातृकाग्रन्थस्योद्धारस्तस्य समीक्षणं च चिकीर्षितम् । तदर्थमस्माभिः प्रथमतो ग्रन्थस्य त्रुटितभ्रष्टपाठानां समन्वयो विहितः । पद्धतिग्रन्थे केवलं कर्मणां परिगणनेन क्वचिदप्रामाणिकता प्रसज्येत । अतोऽत्र सर्वत्र प्रमाणनिर्देशार्थं कात्यायनश्रौतसूत्राणामुद्धरणं प्रदर्शितम् ।

<u>प्रबन्धयोजना</u>

सम्प्रदायपद्धतौ ये श्रौतयज्ञा वर्णितास्तेषां समीक्षणार्थं शोधप्रबन्धस्य पूर्वार्धे ऐष्टिक-पाशुक-सौमिकयागानां विमर्शः अध्यायत्रये निबद्धः । अनेन विविध-कल्पानां तुलनात्मकदिशा विशेषतश्च कात्यायनसूत्रानुशीलनेन श्रौतयज्ञानां स्वरूप-मुपवर्णितम् । उत्तरार्धे च मूलग्रन्थस्यानुशीलनात्मकं सम्पादनं विद्यते ।

—

---

अथ वैदिकयज्ञानां हविर्याग-सोमयागानाम् इष्टिपशु-सोमात्मकानां नित्यतया विज्ञायमानानां संक्षेपेण प्रतिपादनं क्रियते, नित्यानां वैदिकयज्ञानामेव मुख्यतयाऽऽत्मज्ञान-सम्बद्धतायाः प्रतीयमानत्वात् ।[1]

नित्यतया विहिता वैदिकयज्ञाश्च अग्न्याधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणे, चातुर्मास्यानि, निरूढपशुबन्धः, अग्निष्टोमश्चेति कात्यायनश्रौतसूत्र-वसिष्ठधर्मसूत्र-गौतमधर्मसूत्रादिवचनानां विचारणाद् विज्ञायते।[2]

---

1- "नित्यकर्मभिः श्रेयः स्याच्छ्रौतैः स्मार्तैश्च" - इति वैखानसश्रौतसूत्रे 20/1; बौ०ध०सू० 2/2/4/23.

2- यद्यपि सत्याषाढश्रौतसूत्रे "तेषामग्निहोत्रं दर्शपूर्णमासौ च नियतौ, सोमोज्या ब्राह्मणस्य" इति प्रोक्तम् (3/1), वैखानसश्रौतसूत्रे च "अध्ययनमग्न्याधेयं तयोर्गुप्तिरग्निहोत्रं दर्शपूर्णमासावग्निष्टोमः प्रजन इति"(20/1) इति इति नित्यानि कर्माणि उक्तानि; अग्निहोत्रायणिनश्च स्वतन्त्रे आग्रयणे अपि न भवतः (का०श्रौ०सू० 4/6/12-13; स०श्रौ०सू० 3/8/23; वै०श्रौ०सू० 8/2);

"नानिष्ट्वा नवसस्येष्ट्या पशुना चाग्निमान् द्विजः ।
नवान्नमद्यान् मांसं वा दीर्घमायुर् जिजीविषुः ॥
नवेनाऽनर्चिता ह्यस्य पशुहव्येन चाग्नयः ।
प्राणानेवात्तुमिच्छन्ति नवान्नामिषगर्धिनः ॥"

इति मनुस्मृतिवचनात् (4/27-28) अवैधमांसवर्जित्वे निरूढपशुबन्धस्य चाऽनावश्यकत्वं प्रतीयते, "उपक्रमादितरे नियम्येरन्" इति सत्याषाढः

क्रमशः ......

तथा हि कात्यायनश्रौतसूत्रे - "फलयुक्तानामारम्भे यथाकामी फलार्थित्वात्, न नियम-निमित्ता-ऽग्निहोत्र-दर्शपूर्णमास-दाक्षायणा-ऽऽग्रयण-पशुषु प्रवृत्तेः, सोमे चैके, चातुर्मास्येषु चसुर्मुखश्रुतेः, नियतसहपाठात्, दर्शनाच्च, नोत्सर्गयोगात्, स्यात् त्रिंशद्वत्"[1] इति ।

वसिष्ठधर्मसूत्रे च - "अवश्यं च ब्राह्मणोऽग्नीनादधीत, दर्शपूर्णमासा-ऽऽग्रयणेष्टि-चातुर्मास्य-पशु-सोमैश्च यजेत, नैयमिकं ह्येतदृणसंस्तुतं च, विज्ञायते हि त्रिभिर् ऋणैर् ऋणवान् ब्राह्मणो जायत इति यज्ञेन देवेभ्यः प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्य इति, एष वा अनृणो यज्वा यः पुत्री ब्रह्मचर्यवानिति"[2] इति ।

बौधायनधर्मसूत्रेऽपि - "अग्न्याधेयप्रभृत्यथेमान्यजस्राणि भवन्ति यथैतदग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणमुदगयनदक्षिणायनयोः पशुश्चातुर्मा-

---

.... सूत्रयतीति(3/1) अशक्तौ चातुर्मास्यानामप्यनारम्भः प्रतीयत इति चाऽऽहिताग्नेरग्निहोत्रं दर्शपूर्णमासौ चैव नित्यतया विहितत्वेन प्रतीयन्ते; मनुस्मृतावपि शिलोञ्छवृत्तेरग्निहोत्रपरायणस्य गृहस्थस्य तु पार्वायणान्तीयेष्टिमात्रनिर्वापोऽनुमतो दृश्यते(4/10); तथापि कात्ययनश्रौतसूत्रवसिष्ठधर्मसूत्रबौधायनधर्मसूत्रादिमहाग्रन्थसंवादाद्, धर्ममीमांसासूत्रे(6/2/31) च "ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगाद्" इति दर्शनाच्चैते नित्यतया विहिता वैदिकयज्ञा इत्याश्रीयते ।

1- 1/2/10-17.

2- 1/41-43.

स्यानि ऋतुमुखे षे षड्ढोता वसन्ते ज्योतिष्टोम इत्येवं क्षमप्रायणम्"।
इति ।

पुरुषसंस्कारत्वेनोल्लिखितत्वान् नित्यतया प्रतिपादितत्त्वेनाऽवगम्यमानाः "अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणम्, निरूढपशुबन्धः, सौत्रामणी, दर्विहोमाः (पिण्डपितृयज्ञादयः) (इति सप्तहविर्यज्ञसंस्थाः), अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्यामः(इति सप्तसोमसंस्थाः)"[2] इत्येते वैदिकयज्ञा गौतमधर्मसूत्रेऽप्युक्ताः ।

मनुस्मृतौ च --

"अग्निहोत्रं च जुहुयादाद्यन्ते द्यु-निशोः सदा ।
दर्शेन चार्धमासान्ते पौर्णमासेन चैव हि ।।
सस्यान्ते नव- सस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः ।
पशुना त्वयनस्यादौ समान्ते सौमिकैर्मखैः [3] ।।" इति

याज्ञवल्क्यस्मृतौ च -

"त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद् द्विजः ।
प्राक्सौमिकीः क्रियाः कुर्याद् यस्यान्नं वार्षिकं भवेत् ।।"[4]

---

1- 2/2/4/23.
2- 1/8/18.
3- 4/25-26.
4- मनुस्मृतावपि -

"यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ।।
अतः स्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ।
स पीतसोमपूर्वोऽपि न तस्याप्नोति तद् फलम् ।।"

इति (11/7-8 )

प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ।
कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ।।

एषामसम्भवे कुर्यादिष्टिं वैश्वानरीं द्विजः ।[1]
हीनकल्पं न कुर्वीत सति द्रव्येऽफलप्रदम्[2] ।।" इति

शङ्खश्च -

"त्रैवार्षिकाधिकान्नस्तु पिबेत् सोममतन्द्रितः ।
इष्टिं वैश्वानरीं कुर्यात् तथैवाल्पधनो द्विजः[3] ।।" इति

मुण्डकोपनिषदपि च -

"यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च ।
अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति[4] ।।"
इति

एवं च सति कात्यायनश्रौतसूत्रे नित्यतयोक्तानामेव वैदिकयज्ञानां विशेषतया संक्षेपेणात्र स्वरूपाणि प्रदर्श्यन्ते तेषामेव प्राथमिकत्वात् ।

सोमयागविशेषरूपाणां पुरुषमेध-सर्वमेधा-ऽश्वमेधानां सोमयागाङ्गभूतस्याऽग्निचयनस्य च विशेषतोऽध्यात्मसम्बद्धतायाः प्रतीयमानत्वात्

---

1- मनुस्मृतौ च -

"इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे ।।" इति(11/27)

2- 1/124-126.

3- कात्यायनश्रौतसूत्रदेवयाज्ञिकभाष्ये 1/2/12; शङ्खस्मृतौ 5/16-17.

4- 1/2/3.

तेषामपि समुल्लेखोऽत्र प्रबन्धे करिष्यते। अन्येषां वैदिकयज्ञानां तु प्रासङ्गिकत्वेन सत्येवाऽनुपेक्षणीयत्वे परमसंक्षेपेणोल्लेखो विधास्यते ।

तत्रापि अग्निहोत्रस्य, पूर्णमासेष्टेः, अग्निष्टोमस्य च सर्वेषामेव वैदिकयागानां स्वरूपस्य परिचयाय परमोपयोगित्वात्[1] तेषां कियताऽपि विस्तरेण परिचय उपस्थापयिष्यतेऽन्येषां तु संक्षेपेणैव ।

अग्न्याधानाधिकारः

श्रौताग्न्याधानं यद्यपि न स्वतन्त्रो यागस्तथापि सर्वश्रौतयागशेषत्वात् प्राथमिकत्वाच्चाऽत्र प्रथमं तदेव वर्ण्यते ।

अग्न्याधानं च गार्हपत्या-ऽऽहवनीया-ऽन्वाहार्यपचन-सभ्याग्नीनां सम्पादनाय तत्तत्स्वरे यथाविधि अग्नीनां स्थापनमेव ।

तत्र "ब्रह्मैव वसन्तः क्षत्रङ्ग्रीष्मो विडेव वर्षाः । तस्माद् ब्राह्मणो वसन्त आदधीत ब्रह्म हि वसन्तः । तस्मात्क्षत्रियो ग्रीष्म आदधीत क्षत्रं हि ग्रीष्मः । तस्माद् वैश्यो वर्षास्वादधीत विड्ढि वर्षाः"[2] इत्यादिकाद् वचनजाताद् ब्राह्मण-क्षत्रिय-वैश्यानामाधाते-

---

1- "सा च यज्ञक्रियैकविंशतिसंस्थारूपा । तत्र प्रकृतिस्त्रिविधाऽग्निहोत्रं दर्शपूर्णमासावग्निष्टोम इति । अन्या विकृतिरूपा" इति आधानपद्धतिभूमिकायां वामनशर्मण उक्तरपि विमृश्या । "पौर्णमासेनेष्टि-पशुसोमा उपदिष्टाः" इति आश्वलायनः (2/1/1) ।

2- मा०श०प०ब्रा० - 2/1/3/5.

ऽधिकारः । शूद्रस्याऽपि रथकारस्याऽऽधानेऽधिकारोऽस्ति, विशेषवचनसामर्थ्यात्।[1] ब्राह्मणादीनामपि शरीरकारत्स्न्यवतां संस्कृतानपम्[2] अधीतवेदानां श्रोत्रियाणां[3] कृतदाराणां[4] धनवतामेव[5] आधानेऽधिकारो विज्ञायते ।

तत्र प्राचीनानां वैदिकद्विजानामियं प्रथा विज्ञायते यत् प्रायः सर्वेऽपि द्विजकुमारा आचार्यमुपयाय वेदानधीयते स्म[6] ।

किन्तु छान्दोग्योपनिषदो वचनात् केषुचन कुलेषु जाता केचन द्विजा वेदाननधीत्य ब्रह्मबन्धव इव भवन्ति स्मेति च विज्ञायते ।[7] तत्र इव शब्दस्य प्रयोगात् केचन खलु आचार्यमुपयायाऽऽचार्याद् गायत्र्युपदेशं लब्ध्वा

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ०सू० 1/1/8, ध०मी०सू० 6/1/44.

2- ध०मी०सू० 6/1/33-39, आ०ध०सू० 1/1/5.

3- "अङ्गहीनाऽश्रोत्रियषण्ढशूद्रवर्जम्" - इति का०श्रौ०सू० 1/1/5; "विद्यावतश्चाधानाधिकारः समर्थत्वात् - इति शाबरभाष्ये 6/8/12; "न ह्यविद्वान् विहितोऽस्ति" - इति च ध०मी०सू० 3/8/18.

4- "क्षौमे वसानौ जायापती अग्निमाङ्धीयाताम्" - इति आप०श्रौ०सू० 5/4/10; "आधानं च भर्यासंयुक्तम् - इति ध०मी०सू० 6/8/13.

5- "तेषामेव ब्राह्मणविहिता यज्ञा येषु यज्ञकारत्स्न्यमविप्रतिषिद्धं द्रव्यवत्ता शरीरकारत्स्न्यं च" - इति स०श्रौ०सू० 3/1.

6- पा०गृ०सू० 2/2/1-4, 2/5/36-43, 2/6/1-8; आ०ध०सू० 1/1/1/19-1/1/2/10.

7- "श्वेतकेतुर्हारुणेय आस । तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यम्, न वै सोम्यास्मत् कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति" - इति छा० 6/1/1.

त्रिरात्रं गायत्रीव्रतं कृत्वैवाऽपि समावर्तन्ते स्मेति प्रतीयते । आश्रमोपनिषदि-त्याख्ये ग्रन्थे "य उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रतीमन्त्रे स गायत्रः"[1] इति वचनं प्राप्यते । कात्यायनस्मृतावप्ययमर्थः प्रतिपादितोऽस्तीति तद्-वचनोद्धरणपूर्वकं माधवेनाऽपि पराशरस्मृतिव्याख्यानेऽयमर्थः प्रतिपादितोऽस्ति।[2] "अश्रश्रोत्रिया गृहमेधिन उपसमेता भवन्ति"[3] इति माध्यन्दिनीयशतपथश्रुति-लिङ्गाच्चैषोऽर्थोऽवगम्यते। "उपनीतमात्रो व्रतानुचारीवेदानां किंचित्तदधीत्य ब्राह्मणः"[4] इति प्रतिपादयद् बौधायनगृह्यसूत्रमपि एतदनुमन्यत एव । पराशर-स्मृतौ च -

"तस्माद् वृषल(वार्षल्य ?) भीतेन ब्राह्मणेन विशेषतः ।
अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते[5] ।।"

इति वचनमुपलभ्यते । कण्वस्मृतावपि -

"अनधीतैकवेदोऽपि तत्क्रियामन्त्रमात्रतः ।
कृत्वा कर्माणि नित्यानि ज्योतिष्ठोममुखानि वै ।।
ब्रह्मणो ब्रह्मसायुज्यं ी लभते नाऽत्र संशयः[6] ।" इति;
"कलौ तु केवलं तिष्ठेद् गायत्रीवर्णमात्रतः ।
तदेकदेशतश्चापि क्रियानुकरणादपि ।।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- उपनिषत्संग्रहे - पृ० 65।.
2- द्वितीयाध्यायव्याख्यानान्ते ।
3- 13/4/3/3.
4- 1/11.
5- 12/32.
6- श्लो० 431-432.

ब्राह्मण्यं तच्च पूज्यं स्यान्न विचार्य प्रयत्नतः ।
न निषेध्यं विशेषेण गोपनीयतमं भवेत्[1] ।।"

इति च वचनं प्राप्यते ।

एवं च प्राचीने कालेऽपि निर्धनकुटुम्बे जाता अलब्धसदाचार्या-दुर्भिक्षदेशस्थिता मन्दा व्यङ्गा विकलाङ्गा वाऽपि द्विज कुमारा गायत्री-व्रतमात्रेणापि समावर्तन्ते स्मैव । एतादृशा गायत्रीव्रतमात्रं कृत्वा समावृत्ता गार्हस्थ्यकं प्रपन्ना आश्रमान्तरालस्था वाऽपि पुरुषा नूनं वार्तावृत्तयो[2] भवन्ति स्म । न चैवाऽमी श्रौताग्न्याधानादिकं कर्तुं पारयन्ति स्म[3]।

ये तु निर्धनकुटुम्बे जाता अपि लब्धसदाचार्याः सुभिक्षदेशस्थिता वा मेधाविनो वा द्विजकुमारास्ते खलु वेदान् वेदौ स्वमेव वेदं वा सम्पूर्णतया-

---

1- श्लो0 268-270.

2-(क) "गृहस्था अपि चतुर्विधा भवन्ति वार्ताकवृत्तयः शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति । तत्र वार्ताकवृत्तयः कृषिगोरक्ष्य-वाणिज्यमगर्हितमुपयुन्जानाः" इति आश्रमोपनिषदि पराशरस्मृति-द्वितीयाध्यायान्तव्याख्यास्य-माधवधृतकात्यायनस्मृतौ च, "वार्तावृत्तिः कृषिगोरक्ष्यवाणिज्योपजीवी" इति वैखानसधर्मसूत्रे ।/5

(ख) "षट्कर्मैको भवत्येषाम्" - इति मनुस्मृतावपि (4/9) वार्तावृत्ति-र्गृहस्थ उक्तः ।

3- शालीनवृत्तीनां गृहस्थानामेव अग्न्याधान-दर्शपूर्णमासयाग- चातुर्मास्य-याग-पशुबन्धयाग-सोमयागान् विशेषेण प्रतिपादयद् वैखानसधर्मसूत्रं (1/5) वार्तावृत्तीनां गृहस्थानां श्रौताग्न्याधानाद्यभावमवगमयति ।

ऽधीयते स्म । ततो विद्यां व्रतं च सम्पूर्य समावर्तन्ते स्म । केचन तु पूर्णविद-ग्रहणव्रताः समाप्तवेदाः प्राप्तसमावर्तनकाला अपि दारिद्र्यसीदत्कुटुम्बादि-दर्शनादिसंजातवैराग्याः सन्तः स्नाता अपि गृहमप्रत्यावृत्य गुरुणानुज्ञाता नैष्ठिकब्रह्मचर्य[1] लब्धशाब्दाद्यात्मज्ञानप्रकाशाः संजीततीव्रवैराग्याश्च[2] ब्राह्मणास्तु[3] खलु प्रव्रज्यां वाऽपि प्रपद्यन्ते स्म । वैराग्याभावे तु निर्धनाः स्नातका धनागमे गार्हस्थ्यं कर्तुकामाः स्नातकधर्मान्[4] यथासम्भवं पालयन्तः स्वाध्यायमधीयानां धनागममुदीक्षमाणाः स्वकर्मस्थिता आश्रमान्तरालस्थाः कन्यालाभाय स्पृहयन्ति स्म ।[5] (विधुरादीनां द्रव्यादि-सम्पद-रहितानां चाऽन्यतमाश्रमप्रतिपत्तिरहितानामन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- गौ०ध०सू० 1/3/1-8; व०ध०सू० 7/1-17; आ०ध०सू० 2/9/1-6; महाभारते - 12/234/4 , 12/321/25.

2- "स होवाच याज्ञवल्क्यो ब्रह्मचर्य समाप्य गृही भवेतद् गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद वा वनाद् वा । अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्स-न्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति जालाबालो पनिषदिचतुर्थे खण्डे ।

3- "ब्राह्मणस्याश्रमाश्चत्वारः क्षत्रियस्याद्यास्त्रयो वैश्यस्य द्वावेव । तदाश्र-मिणश्चत्वारो ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुरिति" - इति वखानसधर्मसूत्रे 1/1.

4- स्नातकधर्माश्च गृहस्थसाधारणा गौतमधर्मसूत्रे प्रोक्ताः 1/9/2-74; बौ०ध०सू० 1/3.

5- "अलाभे कन्यायाः स्नातकव्रतं चरेदपि वा क्षत्रियायां पुत्रमुत्पादयीत शूद्रायां वेत्येके" - इति पैठीनसिवचनं पराशरमाधवीये प्रथमे भागे, पृ० 494.

किं वा नास्ति श्र" इति शङ्काामनुवदन् शङ्करभगवत्पादोऽपि द्रव्य-पत्न्यादिरहितानामन्तरालवर्तित्वं सम्भवति स्मेति मन्यते स्मेति प्रतीयत एव। एतादृशा अपि स्नातका धनागमे कन्यालाभे च जाते सति तु गार्हस्थ्यं प्रतिपद्य खलु यथाधनं गृह्याग्निधारणयुतान् तद्रहितान्[1] अनुकल्पकाग्नि-सम्पाद्यान्[2] वा पन्चमहायज्ञान्, अन्यान्, यथाकालं यथाविभवं श्रौताग्न्या-धानम्, हविर्यज्ञान्, पशुयागान्, सोमयागांश्च कुर्वाणा गार्हस्थ्यं निर्वहन्ति स्म ।

ये तु समृद्धकुटुम्बे जाता मेधाविनो द्विजकुमारास्ते तु यथाविधि व्रतानि कृत्वा वेदं समाप्तवन्तः सन्तो लब्धशाब्दाद्यात्मज्ञानप्रकाशत्वेन यदापि विरक्तास्तदापि लोकसंग्रहाय समावर्तनपूर्वकं दारानुपसंगृह्य गृह्या-ग्निमाधाय गृह्याग्निसाध्यानि कर्माणि[3] कृत्वा पुत्रे जाते केशेषु कृष्णेष्वेव[4] सत्सु श्रौताग्नींश्चाधाय तत्साध्यानि नित्यानि नैमित्तिकानि यथाकामं काम्यानि च कर्माणि कुर्वाणा गार्हस्थ्यं निर्वहन्त स्म ।

---

1-(क) "औपासनं वा धारयमाणो ब्रह्मौदनं कृत्वोत्सृज्य कर्मणि कर्मण्येवैनं पुनः संस्कृत्याहरति" - इति बौधायनगृह्यपरिभाषासूत्रे 1/10/7.

(ख) "औपासनं धार्य कर्तुमशक्तोऽध्वानं गमिष्यन् वाऽपि अयन्ते योनिरित्य-रण्यां समारोप्य पुनर्ज्जातवेद इत्यहरहर्मथित्वा जुहुयात्" - इति च तत्रैव 6/16.

2- केशान्तादूर्ध्वमपत्नीक उत्सन्नाग्निरनग्निको वा प्रवासीवा ब्रह्मचारी वाऽन्वग्निरिति ग्रामादग्निमाहृत्य पृष्ठ्ठो दिवीत्यधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वाल्य तां सवितुस्तत्सवितुर्विश्वानि देव सवितरिति पूर्व-वदक्षतैर्हुत्वा पाकं पचेत् । तत्र वैश्वदेवः।" - इति कातीयपरिशिष्टपृष्ठ्को-दिविसूत्रे ।

3- "भार्यादिरग्निस्तस्मिन् कर्मकरणं प्रागग्न्याधेयात्" - इति बौ०ध०सू० 2/2/4/22

4- "कृष्णकेशोऽग्नीनादधीतेति श्रुतिः" - इति बौ०ध०सू० 1/2/6.

उपर्युक्तार्थसमर्थनसमर्थाऽग्न्याधानादिपर्याप्तधनसद्भावासद्भावादि-निमित्ताऽग्न्याधानाऽनाधानादिव्यवस्था चाथो निर्दिष्टवचनादिभिः प्रतीयते । तथा हि —

(अ) "श्रद्धाशीलोऽस्पृह्यालुरलमग्न्याधेयाय नाऽनाहिताग्निः
स्यात् । अलं च सोमपानाय नाऽसोमयाजी स्यात् ।
युक्तः स्वाध्याये प्रजनने यज्ञे च ।"

– इति वसिष्ठधर्मसूत्रे ।

(ब) "यः शक्नोति यष्टुं तस्य यजेतेति वाचको भवति ।
यो न कथंचिदपि शक्नोति यागमभिनिर्वर्तयितुं तं
नाधिकरोति यजेतेति शब्दः ।यस्तु केनचित् प्रकारेण
शक्नोति न तं वर्जयित्वा प्रवर्तते ।"

– इति शाबरभाष्ये[2] ।

(स) "ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ।
दममेव महाराज धर्ममाहुः पुरातनम् ॥
स्वाध्यायाभ्यसनं चैव तत्र कर्म समाप्यते ।
तं चेद् धनमुपागच्छेद् वर्तमानं स्वकर्मणि ॥
अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् ।
कुर्वीता[3]ऽपत्यसन्तानमथो दद्याद् यजेत च ॥

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- 8/9-11.

2- धर्मी०सू० 6/1/40.

3- "तदस्माऽएतत्प्रजामेव परोवक्षमाशास्ते । यस्य हि प्रजा भवत्यमुं लोकमात्मनैत्यथास्मिंल्लोके प्रजा यजते तस्मात्प्रजोत्तरा देवयज्या" इति माध्यन्दिनीयशतपथब्राह्मणवाक्यमप्यत्र पर्यालोचनीयम् – 1/8/1/31.

"संविभज्य च भोक्तव्यं धनं सद्भिरितीर्यते ।
परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः ।।
कुर्यादन्यन् वा कुर्यान् मैत्रो ब्राह्मण उच्यते ।।"

– इति महाभारते।[1]

(द) "याज्यतः शिष्यतो वापि कन्याया वा महद् धनम् ।
यादागच्छेद् यजेद् दद्यान् नैकोऽश्नीयात् कथन्चन ।।"

– इति च महाभारते।[2]

(अ) "आधानादीनि कर्माणि शक्तिमान च करोति यः ।
सर्वाण्येतान्यकार्याणि प्राहुर्धर्मविदो जनाः ।।"

– इति च महाभारते ।[3]

(इ) "आहिताग्निर्हि धर्मात्मा यः स पुण्यकृदुत्तमः ।
वेदा हि सर्वे राजेन्द्र स्थितास्त्रिष्वग्निषु प्रभो ।।
स चाप्यग्न्याहितो विप्रः क्रिया ह्यस्य न हीयते ।
श्रेयो ह्यनाहिताग्नित्वमग्निहोत्रं न निष्क्रियम् ।।"

– इति च महाभारते ।[4]

(उ) "यस्य पशवो भवन्ति तस्मिन्नग्निनराधीयते" –

इति मा०श०ब्राह्मणे।[5]

(ऊ) "योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ।।"

– इति महाभारते[6]मनुस्मृतौ[7]च।

---

1- 12/60/8-12.
2- 12/234/11.
3- 12/34/12-13.
4- 12/292/20-21.
5- 6/2/1/12.
6- 12/165/9.
7- 11/14.

(ऋ) "द्रव्यादानं विवाहसिद्ध्यर्थं धर्मतन्त्रसंयोगे च शूद्रात् ।
अन्यात्रापि शूद्राद् बहुपशोर्हीनकर्मणः ।
शतगोरनाहिताग्नेः ।
सहस्रगोश्चासोमपात् ।
सप्तमीं चाभुक्त्वाऽनिचयाय ।
अप्यहीनकर्मभ्यः ।"

– इति गौतमधर्मसूत्रे[1] ।

(लृ) "अनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
सुरापो वृषलीभर्ता ब्रह्महा गुरुतल्पगः ।।
असत्प्रतिग्रहे युक्तः स्तेनः कुत्सितयाजकः ।
अदोषस्त्यक्तुमन्योन्यं कर्मसङ्करनिश्चयात् ।।"

– इति कौटलीयेऽर्थशास्त्रे।[2]

(लॄ) " न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नाऽनाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः"
इति छान्दोग्योपनिषद्वाक्यव्याख्याने "न अनाहिताग्निः
शतगुः" इति शङ्करभगवत्पादोऽपि पेरयति स्म।[3]

(ए) "यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ।
अतःस्वल्पीयसि द्रव्ये यः सोमं पिबति द्विजः ।
स पीतसोमपूर्वोऽपि न तस्याप्नोति तत् फलम् ।।"

– इति मनुस्मृतौ।[4]

---

1– 2/9/24–29.

2– 3/14/143–144.

3– 5/11/5.

4– 11/7–8.

(ऐ) "त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद् द्विजः ।
प्राक्सौमिकीः क्रियाः कुर्याद् यस्यान्नं वार्षिकं भवेत् ।।"
– इति याज्ञवल्क्यस्मृतौ।[1]

(ओ) "पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथन्चन ।।
इन्द्रियाणि यशः स्वर्गमायुः कीर्ति प्रजाः पशून् ।
हन्त्यल्पदक्षिणो यज्ञस् तस्मान् नाल्पधानो यजेत् ।। "
– इति मनुस्मृतौ ।[2]

(औ) "आनन्त्यमत्र बुद्धयेव कर्मणां तद् ब्रवीमि ते ।
अनागममनैतिह्यं प्रत्यक्षं लोकसाक्षिकम् ।।
धर्म इत्येव ये यज्ञान् वितन्वन्ति निराशिषः ।
उत्पन्नत्यागिनोऽलुब्धाः कृपासूयाविवर्जिताः ।
धनानामेष वै पन्थास्तीर्थेषु प्रतिपादनम् ।"
– इति महाभारते।[3]

(अं) "वित्तसाध्यं न यः कुर्याद् धर्ममाद्योपि हि द्विजः[4]।
न तत्फलमवाप्नोति प्रलोभाक्रान्तमानसः ।।"

---

1- 1/124.

2- 11/39-40.

3- 12/270/3-5.

4- अस्य श्लोकार्धस्य "अवित्तसाध्यमेवाद्यो धर्मं कुर्यात् तु यो द्विजः" इत्येवार्थः प्रतीयते "न तत्फलवाप्नोति प्रलोभाग्रान्तमानसः" इति वाक्यशेषात् ।

तस्माद् त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं च धर्मार्थमनित्यं जीवनं यतः ।।"

– इति भविष्यपुराणवचनं गृहस्थरत्नाकरे।[1]

(अः) "धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।
पन्चधा विभजन् वित्तकमहामुत्र च मोदते ।।"

– इति भागवते ।[2]

(क) "अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः ।
अच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः ।।"

– इति च भागवते ।[3]

(ख) "देवानृषीन् नृभूतानि पितृनात्मानमन्वहम् ।
स्ववृत्त्यागतवित्तेन यजेत पुरुषं पृथक् ।।
यह्यर्ात्मनोऽधिकाराद्याः सर्वाः स्युर्यज्ञसम्पदः ।
वैतानिकेतन विधिना अग्निहोत्रादिना यजेत् ।।"

– इति च भागवते।[4]

(ग) "यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ।
धनेनापीड्यन् भृत्यान् न्यायेनैवाहरेत् क्रतून् ।।"

– इति च भागवते ।[5]

(घ) "नास्तिक्यादथवालस्याद् योग्नीन् नाधातुमिच्छति ।
यजेत् वा न यज्ञेन स याति नरकान् बहून् ।।

---

1 – पृ० 475.

2– 8/19/37.

3– 10/84/37.

4– 7/14/15-16.

5 – 11/17/51.

तस्मात् सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः ।
आधायाग्नीन् विशुद्धात्मा यजेत परमेश्वरम् ।।"

– इति कूर्मपुराणवचनं पराशरमाधवीये।[1]

(ङ॰) "पाकसंस्था हविस्संथाः सोमसंस्थाश्च संस्थिताः ।
धने यतो मनुष्याणां यतेतातो धनार्जने ।।"

– इति विष्णुपुराणवचनं गृहस्थरत्नाकरे।[2]

(च) "धमार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनादि पङ्कस्य दूरादस्पर्शनं वरम् ।।"

– इति व्यासवचनं सुभाषितरत्नभाण्डागारे[3]

(छ) "वेदोदितं स्वकं कर्मनित्यं कुर्यादतन्द्रितः ।
तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम् ।।"

– इति मनुस्मृतौ।[4]

(ज) "यो वैदिकमनादृत्य कर्म स्मार्तेतिहासिकम् ।
मोहात् समाचरेद् विप्रो न स पुण्येन युज्यते ।।
प्रधानं वैदिकं कर्म गुणभूतं तथेतरत् ।
गुणनिष्ठः प्रधानं तु हित्वा गच्छत्यधोगतिम् ।।"

– इति गर्गवचनं पराशरमाधवीये।[5]

---

1– प्रथमेऽध्याये – पृ0152.
2– पृ0 474.
3– सप्तमसंस्करणे – पृ0 163 श्लो0 4622.
4– 4/14.
5– प्रथमेऽध्याये, आचारकाण्डे, पृ0 292-293.

(ञ) "श्रौत कर्तुं न चेच्छक्तः कर्म स्मार्तं समाचरेत् ।
तत्राप्यशक्तः करणे सदाचारं लभेद् बुधः ॥"

– इति व्यावसवचनं पराशरमाधवीये।[1]

(न) "यथा सन्ध्या यथा स्नानं वेदस्याध्ययनं यथा ।
तथैवोपासनं दृष्टं न स्थितिस्तद्वियोगतः ॥
योऽगृहीतविवाहाग्निगृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

– इति प्रथमयज्ञपार्श्वे[2]

(ञ) "कृतदारो न तिष्ठेत क्षणमप्यग्निना विना ।
यदि तिष्ठेद् द्विजो व्रात्यस्तथा च पतितो भवेत् ॥"

– इति च प्रथमयज्ञपार्श्वे।[3]

(ठ) "आलस्यादथवा लोभाद योऽग्निं नाधातुमिच्छति ।
न यजेत् पाकयज्ञैस्तु स याति नरकान् बहून् ॥"

– इति च प्रथमयज्ञपार्श्वे।[4]

(ड) "सर्वेण च गृहस्थेन पन्च महायज्ञा निर्वत्या:"

– इति पाणिनीयव्याकरणभाष्ये।[5]

(ढ) "अनिर्वर्त्य महायज्ञान् यो भुङ्क्ते प्रत्यहं गृही ।
अनातुरः सति धने कृच्छ्रार्धेन विशुद्ध्यति ॥"

– इति बृहस्पतिवचनं पराशमाधवीये ।[6]

---

1– प्रथमेऽध्याये, आचारकाण्डे, पृ० 293.

2– श्लो० 34–34; पराशरमाधवीये प्रथमेऽध्याये पृ० 292 च द्रष्टव्यम् ।

3– श्लो० 37; पराशरमाधवीये पथमेऽध्याये गर्गवचनं च, पृ० 292.

4– श्लो० 39

5– प्रायश्चित्तकाण्डे, पृ० 443.

6– 4/1/33.

(ण) "पञ्चैव महायज्ञास्तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति । अहरहर्भूतेभ्यो बलिं हरेत्तथैतम्भूतयज्ञं समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतम्मनुष्ययज्ञं समाप्नोत्यहरहः स्वधा कुर्यादोदपात्रात्तथैतम्पितृयज्ञं समाप्नोत्यहरहः स्वाहा कुर्यादा काष्ठात्तथैतन्देवयज्ञं समाप्नोति।"

— इति माध्यन्दिनीयशतपथब्राह्मणे।[1]

(त) "अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद् देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् ।"

— इति पारस्करगृह्यसूत्रे।[2]

(थ) "यस्य नित्यानि लुप्तानि तथैवाऽऽगन्तुकानि च ।
विपद्यपि न स स्वर्गं गच्छेत् तु पतितो हि सः ।।
तस्माद् कन्दैः फूलैर्मूलैर्मधुनाज्यरसेन वा ।
नित्यं नित्यानि कुर्वीत न तु नित्यानि लोपयेत् ।।"

— इति बौधायनवचनम्।[3]

(द) "सभार्यो योऽगृहीताग्निर्विधुरः स्नातकोऽपि वा ।
व्याहृतिभिः समस्ताभिर्व्यस्ताभिश्च ततः परम् ।।
हुत्वा तु शाकलैर्मन्त्रैः प्राजापत्यं तु तत्परम् ।
स्विष्टकृच्च हुनेदन्ते दैवयज्ञोयमीरितः ।।

---

1- 11/5/6/1-2.

2- 2/9/16.

3- वामनशास्त्रिकृतायामग्निहोत्रचन्द्रिकायाम्, पृ० 7.

भूतयज्ञं ततः कुर्यात् पर्जन्यादित्रिकं विना ।
नित्यं श्राद्धं निरग्नेः स्यात् साग्नेः पित्र्यो बलिः स्मृतः ।।
पितृयज्ञोयमाख्यातोऽनग्नेर्वा पैतृको बलिः ।
निर्णिज्य ब्रह्मयज्ञः स्याद् पन्चमो मानुषो मतिः ।।
अग्निर्वाग्निमान् कुर्यादिमांस्तु प्रत्यहं सकृत् ।
अन्यथा प्रत्यवायी स्याद रौरवं नरकं व्रजेत् ।।
अकृत्वा वैश्वदेवं तु भुन्जते ये द्विजातयः ।
तेन मिथ्याविपाकेन काकयोनिं व्रजन्ति ते ।।"

– इति प्रथमयज्ञपार्श्वे।[1]

(ध) "अनहिताक्सथ्याग्निरादायान्नं घृतप्लुतम् ।
शाकलेन विधानेन जुहुयाल् लौकिकेऽतले ।।"

–इति वेदव्याससमृतौ।[2]

(न) "अथ सम्राडिति होवाच– भगवन् याज्ञवल्क्य, उत्सन्ना-
ग्नीनां को विधिः स्यात्। स होवाच– देवपितृ-
मनुष्याणां निर्वपणार्थं पाकयज्ञश्रपणं प्रसवविधिं वक्ष्यामि ।
अनेन विधानेनाग्निमुपसमाधाय ब्राह्मणानां न वृथा-
पाको भवति। केशान्तादूर्ध्वमपत्नीकस्योत्सन्नाग्ने-
रनग्निकस्य ग्रामादन्वग्निरित्यग्निमाहृत्य पृष्ठतो
दिवीत्यधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वाल्य
तत्सवितुस्तां सवितुर्विश्ववानि देव सवितरिति ।
एवं प्रणीतो भवति । पूर्ववदक्षतैर्हुत्वा पाकयज्ञं श्रपयेत् ।
ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायाऽनुमतये इति

---

1- 11-16.

2- 3/31-32.

पूर्ववद् बलिं हरेन् न वृथापाकं श्रपयेन् न वृथापाकमश्नीयात् । तस्मादेवं न वृथापाको भवति।" – इति कातीयप्रसवोत्थानपरिशिष्टे।[1]

(प) "अग्नयस्त्रिविधाः प्रोक्ताः श्रौतस्मार्तानुकल्पकाः ।
स्वर्गापवर्गदः श्रौतः स्मार्तस्त्वाश्रमधर्मदः ।।
आचारधर्मदश्चानुकल्पकोर्वीदिवौकसाम् ।।"

– इति काण्वपरिशिष्टे[2]

(फ) "यत् फलं सोमयागेन प्राप्नोति धनवान् द्विजः ।
सम्यक् पन्चमहायज्ञैर् दरिद्रस्तदवाप्नुयात् ।।"

– इति पुराणवचनं पराशर-माधवीये।[3]

(ब) "वर्धयित्वा धनं यस्तु तस्माद् ग्रासमपीह च ।
न खादेद् सङ्ग्रहपरो धनिकः स उदाहृतः ।।
पोषणीयकुटुम्बस्य निर्वाहो यावता भवेत् ।
तावदेव सुखं यस्तु लभते प्रतिवार्षिकम् ।
ऋणं यस्य तु नास्त्येव मध्यमः स उदाहृतः ।।
धनं पूर्वापरं यस्य वर्तते बहुसंख्यया ।
अधिकस्यार्जको यः स्यात् स महाधन उच्यते ।।
सदाचाररतो विप्रो धनार्जनपराङ्मुखः ।
कुटुम्बयत्नमतिकः स दरिद्र इति स्मृतः ।।

---

1– वाराणसीस्थसरस्वतीभवनपुस्तकालयस्थवैदिकपुस्तकेषु 4436 इतिसंख्यके हस्तलिखितपुस्तके ।

2– तेष्वेव पुस्तकेषु 4096 इतिसंख्यके हस्तलिखितपुस्तके– 2/36/37.

3– आचारकाण्डे (1/50), पृ० 363.

यस्य स्यादशनाभाव: सदाचाररतस्य हि ।
महादरिद्र: स भवेद् वासोधान्यविवर्जित: ।।"

– इति वाराहपुराणवचनानि संस्कारभास्करे।[1]

(भ) "स होवाच याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेद् गृही भूत्वा वनी भवेद् वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद् वा वनाद् वा । अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत् ।।"

– इति जाबालोपनिषदि ।[2]

(म) "हविर्भिरेके स्वरित: सचन्ते सुन्वन्त एके सवनेषु सोमान् ।
शचीर्मदन्त उत दक्षिणाभिर् नेज् जिह्मायन्त्यो नरकम्पताम् ।।"

– इति ऋग्वेदखिलमन्त्र:[3] ।

(य) "अहमप्यत्र मुह्यामि ममाप्येष मनोरथ: ।
न च सन्निश्चयं यामि बहुद्वारे त्रिविष्टपे ।।
केचिन् मोक्षं प्रशंसन्ति कचिद् यज्ञफलं द्विजा: ।
वानप्रस्थाश्रया: केचिद् गार्हस्थ्यं केचिदास्थिता: ।।
राजधर्माश्रयं केचित् केचिदात्मफलाश्रयम् ।
गुरुधर्माश्रयं केचित् केचिद्वाक्संयमाश्रयम् ।।
मातरं पितरं केचिच्छुश्रूषन्तो दिवं गता: ।
अहिंसया परे स्वर्गं सत्येन च तथा परे ।।

---

1- श्रीवेङ्कटेश्वरसंस्करणे, पृ० 15.

2- चतुर्थे खण्डे ।

3- निरूक्ते, 1/11.

आहवेऽभिमुखा: केचिन् निहतास्त्रिदिवं गता: ।
केचिदुन्छवृतै: सिद्धा: स्वर्गमार्ग समाश्रिता: ।।
केचिदध्ययने युक्ता वेदव्रतपरा: शुभप: ।
बुद्धिमन्तो गता: स्वर्ग तुष्टात्मानो जितेन्द्रिया: ।।
आर्जवेनाऽपरे युक्ता निहता नार्जवैर् जनै: ।
ऋजवो नाकपृष्ठे वै शुद्धात्मान: प्रतिष्ठिता: ।।
एवं बहुविधैर्लोके धर्मद्वारैरनावृतै: ।
ममापि मतिराविग्ना मेघलेखेव वायुना ।।"

– इति महाभारते।[1]

(र) "अवश्यं ब्राह्मणोऽग्नीनादधीत, दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्य पशुसोमैश्च यजेत्, नैयमिकं ह्येतदृणसंस्तुतं च । विज्ञायते हि त्रिभिर् ऋणैर् ऋणवान् ब्राह्मणो जायत इति । यज्ञेन देवेभ्य: प्रजया पितृभ्यो ब्रह्मचर्येण ऋषिभ्य इति । एष वा अनृणो यज्वा य: पुत्री ब्रह्मचर्यवानिति ।"

– इति वशिष्ठधर्मसूत्रे।[2]

(ल) "सर्वयज्ञाधिकारी स्यादाहिताग्निर्धने द्विज:।।

– इति प्रजापतिवचनं पराशरमाधवीये।[3]

(व) "कृतदारोऽग्निपत्नीभ्यां कृतवेश्मा गृहे वसेत् ।
स्वकृतं वित्तमासाद्य वैतानाग्नीन् न हापयेत् ।।

---

1- 12/354/9-16.

2- 11/41-43.

3- आचारकाण्डे, पृ0 152.

स्मार्त वैवाहिके वह्नौ श्रौतं वैतानिकाग्निषु ।

कर्म कुर्यात् प्रतिदिनं विधिवत् प्रतिपर्व च ।।"

– इति वेदव्यासस्मृतौ।[1]

(श) "वर्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः ।

इष्टीः पार्वायणान्तीयाः केवला निर्वपेत् सदा ।।"

– इति मनुस्मृतौ ।[2]

(ष) "अप वा एष स्वर्गाल् लोकाच् छिद्यते यो दर्शपूर्णमासयाजी

सन् पौर्णमासीममावास्यां वाऽतिपातयेत् ।"

– इति श्रुतिः शाबरभाष्ये।[3]

(स) "यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं

च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तथा लोकान्

हिनस्ति ।"

– इति मुण्डकोपनिषदि।[4]

(ह) "तस्माद्यदैवैनङ् कदा च यज्ञ उपनमेदथाग्नी आदधीत,

नश्वः श्वमुपासीत को हि मनुष्यस्यश्वो वेद ।"

– इति माध्यन्दिनीयशतपथब्राह्मणे।[5]

उपर्युक्तेषु वचनेषु सम्यक् पर्यालोचितेषु सत्सु च प्रतिवर्षसम्पादनीय-सोमयागालम्भावसम्पादके न्यायागते धने सति सर्वेऽपि द्विजा अवश्यं श्रौताग्नी-नादधीरनः द्विजाग्न्यास्तु प्रतिवर्षसम्पउदनीयसोमयागालम्भावसम्पादके धनेऽनु-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- 2/16-17.

2- 4/10.

3- 6/3/3.

4- 1/2/3.

5- 2/1/3/9.

पस्थितेऽपि तस्य न्यायेनोपागमनमुदीक्षमाणा अग्न्याधानाग्निहोत्रदर्श-पौर्णमासादिमात्रालम्भावसम्पादके क्षने सत्यपि श्रौताग्नीनादधीरन्निति व्यवस्था वेदविदां सम्मतेत्यवगम्यते ।

"यस्य नित्यानि लुप्तानि"[1] इत्यादिकं वचनमपि कथन्चिदग्न्याधानाग्निहोत्रपौर्णमासदर्शयागसोमयागादिकमभिनिर्वर्तयितुं शक्तं प्रत्येव प्रवर्तते। अथवा एतद् वाक्यं द्रव्यान्तराभावे जलपात्रमात्रस्य दानेनापि काष्ठखण्डमात्रस्य हवनेनापि गृहस्थमात्रेणावश्यं निर्वर्तनीयान् पन्चमहायज्ञानेव नित्यानीत्युक्त्या विषयीकरोतीति निश्चीयते; बौधायनगृह्यपरिभाषासूत्र एव च "अथाप्युदाहरन्ति —

"यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ।।" इति

औपासनो वा नित्यो धार्य इति न दुर्ब्राह्मणो भवति"[2] इति अशक्तस्य श्रौताग्न्याधानाभावेऽपि दोषाभावस्य प्रतिपादितत्वात् ।

यच्च "त्रैवार्षिकाधिकान्नो यः"[3] इत्यादीनि वाक्यानि विश्वरूपमेधातिथि-विज्ञानेश्वर-कुल्लूकभट्ट-त्रिकाण्डमण्डनापराभिधभास्कर-मिश्रप्रभृतिभिः काम्यसोमयागविषयतया नीतानि तदप्यश्रद्धेयम्, तत्प्रकरण एवं मनुस्मृतौ —

"इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसंभवे ।।

---

1- वामनशास्त्रिकृतायामग्निहोत्रचन्द्रिकायाम् - पृ० 7.

2- 1/10/5-6.

3- याज्ञवल्क्य० 1/125-126; मनु० 11/7-8.

आपत्कल्पने यो धर्मं कुरुतेऽनापदि द्विजः ।
स नाप्नोति फलं तस्य परत्रेति विचारितम्[1] ।।"

इति त्रैवार्षिकान्नकैः प्रतिवर्षं कर्तुमुपक्रान्तस्य सोमस्य कस्मिंश्चिद् वर्षे खलु आपदि आगतायां सोमयागेऽसंभविनि सति तन्निष्कृत्यर्थं तस्मिन् वर्षे गते वैश्वानरेष्टेर्निर्वपणीयतायाः प्रतिपादितत्वात्, निर्धनत्वे सोमयागस्याकरणीयतायाः मनुस्मृतावेव —

"वर्तयंस्तु शिलोञ्छाभ्यामग्निहोत्रपरायणः ।
इष्टीः पार्वायनान्तीयाः केवला निर्वपेत् सदा[2] ।।"

इति स्फुटमुक्तत्वात्, तदुपोद्बलकानां वचनानां गौतमधर्मसूत्र[3]-- महाभारत[4]-कौटलीयार्थशास्त्रेषु[5] च[6] दर्शनात्, काम्यस्य निष्कृतिविषयताया अभावात्, नित्यस्याऽपि प्रत्यवायपरिहाररूपस्य फलार्थाम्रच्छायानिभस्यान्यस्य वाऽपि आनुषङ्गिकस्य फलस्य सत्त्वात्, "यस्याग्निहोत्रमदर्शम्"[7] इत्यादिकायां श्रुतौ सोमयागस्याऽनुपादानात्, "सोमे चैके"[8] इति कात्यायनसूत्रस्वरसाच्च[9] सोमे यथाकामित्वाभावस्याऽनवबोधात्, देवयाज्ञिकभाष्ये धृतेने—

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1- 11/27-28.
2- 4/10.
3- 2/9/24-29.
4- 12/165/9.
5- 3/14/143-144.
6- मनु0 11/14
7- मुण्डकोपनिषदि 1/2/3    8- कात्य0श्रौ0 सू0 1/2/12.
9- यद्यपि "सोमे चैके" इति कात्यायनसूत्रे एकेग्रहणं पूजार्थं मतान्तरस्यात्राभावादिति कर्कदेवयाज्ञिकादयो मन्यन्ते तथापि अन्यत्र पूजार्थं नाम्न एव ग्रहणस्य पूजाद्योतकपदस्य वा ग्रहणस्य दर्शनात् यस्याग्निहोत्रमित्यादिश्रुतौ सोमस्याग्रहणाच्चान्येषां मते चातुर्मास्येष्विव कात्यायनमते सोमेयाथाकाम्यं प्रतीयते ।

"त्रैवार्षिकाधिकान्नस्तु पिबेत् सोममतन्द्रितः ।
इष्टिं वैश्वानरीं कुर्यात् तथैवाल्पधनो द्विजः[1]।।"

इति शङ्खवचनेन स्फुटं त्रैवार्षिकाधिकान्नकर्तृकसोमस्थानीयाया अल्पधनकर्तृकवैश्वानरेष्टेर्विधानात्, विष्णुधर्मसूत्रे च --

"गृहाश्रमी वैवाहिकाग्नौ पाकयज्ञान् कुर्यात् ।
सायम्प्रातश्चाग्निहोत्रं देवताभ्यो जुहुयात् ।
चन्द्रार्कसन्निकर्षविप्रकर्षयोर्दर्श-पूर्णमासाभ्यां यजेत।
प्रत्ययनं पशुना।
शरद्-ग्रीष्मयोश्चाग्रहायणेन ।
व्रीहि-यवयोर्वा पाके ।
त्रैवार्षिकाभ्यधिकान्नः प्रत्यब्दं सोमेन ।
वित्ताभाव इष्ट्या वैश्वानर्या[2]।"

इति स्फुटे नित्यप्रकरणे स्पष्टतया त्रैवार्षिकाभ्यधिकान्नस्यैव प्रत्यब्दं नियतस्य सोमस्याऽनुविधानाच्च ।

"आदध्यान्निर्धनोऽप्यग्नीन्"[3] इत्यत्र निर्धनशब्दोऽपि सर्वाङ्गसम्पूर्णाग्न्याधानादिनित्यकर्मसम्पादनार्थकपुष्कलधनरहितार्थको यथाकथञ्चिदग्न्याधानादिनित्यकर्माभिनिर्वर्तनशक्तपर एवेति विज्ञायते, सर्वथा निर्धनत्वेन गृहक्षेत्रपत्नीपश्वादिरहितत्वेऽग्न्याधानाग्निहोत्राद्यसम्पादनस्याऽसम्भवात्;

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- कात्यायनश्रौतसूत्रभाष्ये - 1/2/12; शङ्खस्मृतौ - 5/16/17

2- ऊनषष्टितमेऽध्याये ।

3- पराशरमाधवीये आचारकाण्डे प्रजापतिवचनम्, पृ0 15।.

ब्राह्मणानामश्वमेधकाण्डाध्ययनादिव निर्धनत्वादिना तत्तत्क्रतुसम्पादनेऽशक्तानां द्विजानां तत्तत्क्रतुकाण्डाध्ययनादेव तत्तत्क्रतुज्ञानादेव च तत्तत्क्रतुफलसिद्धेः श्रुतत्वाच्च।[1] एवं च सति यदपि -

"सूर्यग्रहे कुरुक्षेत्रे मेषीकृष्णाजिनादिकम् ।
चण्डालात् प्रतिगृह्यापि यजेतावश्यकैर्मखैः[2] ।।"

इति त्रिकाण्डमण्डनापरनामधेयेनाऽऽपस्तम्बसूत्रध्वनितार्थकारिकाकारेण भास्करमिश्रेणोक्तमन्यच्चैवज्जातीयकं तदपि सति धने नित्यानामत्यावश्यकताया बोधन एव तत्परं विधिप्ररोचनार्थार्थवादरूपमेवेति मन्तव्यतः, यथाश्रुतस्यार्थस्य खलु --

"न यज्ञार्थं धनं शूद्राद् विप्रो भिक्षेत कर्हिचित् ।
यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते ।।"[3]

"ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ।
ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिताः ।।
तेषां सततमज्ञानां वृषलाग्न्युपसेविनाम् ।
पदा मस्तकमाक्रम्य दाता दुर्गाणि सन्तरेत्[4] ।।"

इत्यपरदिभिर्वचनैः[5] सर्वथा विरुद्धत्वात्; एतद्विषये शास्त्रसम्मतायाः --

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा०श०प०ब्रा०- 11/5/7/3; याज्ञवल्क्यस्मृतौ, आचाराध्याये- श्लोक 47
तै०ब्रा० - 3/8/18/6, 3/11/8/6; पा०व्या०भाष्ये, प्रथमाह्निके।

2- त्रिकाण्डमण्डने- 1/109/110.

3- मनु० - 11/24.

4- मनुस्मृतौ 11/42-43.

5-(क) "चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात्" इति याज्ञ० 1/127.
(ख) "शूद्रान्नं यागे परिहरेत्" - इति विष्णुधर्मसूत्रे एकान्नषष्टितमेऽध्याये

क्रमशः .....

"ये शूद्रादिति शूद्रार्थेनाधानं तु निषिध्यते ।
प्रवृत्तकर्मणो नित्यकमार्थं न निषिध्यते[1] ।।"

इति व्यवस्थाया रेणुकदीक्षितेन प्रदर्शितत्वाच्च ।

रेणुकदीक्षितोक्तव्यवस्थायाः शास्त्रसम्मतत्वं च गौतमधर्मसूत्रे[2], मनुस्मृतौ[3], महाभारते,[4], त्रिकाण्डमण्डन एव चापि[5] उपक्रान्तस्याविकल्पेनाविच्छेदेन च निर्वहणायैव कस्यचिदेवाङ्गस्य शूद्रादपि आदानस्य विधानात् स्फुटं भवति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

··(ग) "न भिक्षेत धनं शूद्रात्" - इति शङ्खस्मृतौ 5/17.

(घ) "ऋत्विगात्मा धनं जाया शुद्धं यस्य चतुष्टयम् ।
तस्याग्निहोत्रं स्वर्गाय नरकायेतरत् स्मृतम् ।।"
-इति मातृदत्ताचार्यधृता स्मृतिः (सत्याषाढश्रौतसूत्रव्याख्याने 19/7

1- कातीयगृह्यकारिकायाम् - 1/56.

2- "द्रव्यादानं विवाहसिद्ध्यर्थं यज्ञतन्त्रसंयोगे च शूद्रात्" - इति 2/9/24.

3- "यज्ञश्चेत् प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ।।
यो वैश्यः स्याद् बहुपशुर्हीनक्रतुरसोमपः ।
कुटुम्बात् तस्य तद् द्रव्यमाहरेद् यज्ञसिद्धये ।।
आहरेत् त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।
न हि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ।।"
-इति 11/11-13.

4- 12/165/8.

5- "आवश्यके तु सोमादौ सर्वसंभारसंभृते ।
सुवर्णव्यतिरिक्ताङ्गद्रव्यालाभे हि चोरयेत् ।।"
- इति 1/111-112.

अथाग्न्याधानस्वरूपम्

तत्राग्न्याधाने संक्षिप्तः पदार्थक्रम एव भवति –

1– यजमानकर्तृकमृत्विग्वरणम्, 2– अध्वर्युकर्तृकमरणिकरणम्, 3– यजमानकर्तृकं सम्भारसम्भरणम् (सम्भाराश्च हिरण्यशकलानि, ऊषाः, आखूत्कराः, शर्करा इत्यादयः), 4– सयजमानर्त्विक्कर्तृकमग्न्यागारकरणम् (गार्हपत्यागारकरणम्, आहवनीयागारकरणम्, दक्षिणाग्निखरकरणम्, सभ्याग्निखरकरणं च), 5– यजमानस्य वपनं नखनिकर्तनं पत्न्या नखनिकर्तनम्, उभयोः स्नानं क्षौमवासः परिधानं च, 6– अध्वर्युकर्तृकमग्निमन्थनम्, 7–(पञ्चभूसंस्कारपूर्वकं) गार्हपत्यखरे अग्नेराधानं च, 8– यजमानस्य दिवा भोजनमेव रात्रौ चेच्छया, 9– यजमानकर्तृकं देवपित्राह्वानम्, 10– यजमानस्य पूर्वेणाहवनीयद्वारेण प्रवेशः, पत्न्या दक्षिणेन गार्हपत्यद्वारेण प्रवेशः, 11– यजमानस्य पत्न्याश्चाग्नेः पश्चादुपवेशनम्, 12– अध्वर्युकर्तृकमरणिप्रदानम्, 13–वागयमनप्रैषः, 14– चातुष्प्राश्यौदनार्थस्तण्डुलनिर्वापः, 15–चातुष्प्राश्यपचनम्, 16–समिदाधानम्, 17– चतुर्णामेवर्त्विजां चातुष्प्राश्यौदनाशनम्, 18–यजमानकर्तृकं चातुष्प्राश्यपचनदक्षिणादानम्, 19– यजमानस्य पत्न्याश्च जागरणमग्निधारणं च, 20–अरुणोदयकालेऽध्वर्युकर्तृकमग्न्युपशमनम्, दक्षिणतः संहरणं वा, 21–गार्हपत्यखरे (पञ्चभूसंस्काराः) सम्भारावापाः, 22– आहवनीयखरे (पञ्चभूसंस्काराः) सम्भारावापाः, 23– दक्षिणाग्निखरे (पञ्च भूसंस्काराः) सम्भारावापाः, 24– अश्वानयनप्रैषः, अग्नीत्कर्तृकमश्वानयनं च, 25–यजमानकर्तृकमग्निमन्थनयन्त्रधारणम्, पत्न्या अध्वर्योश्च क्रमेण मन्थनम्, 26– अग्नौ जाते यजमानकर्तृकं वरप्रदानम्, 27– यजमानस्याग्निं प्रत्यभिश्वसनमग्नेरुच्छ्वशनं च, 28–अध्वर्युकर्तृकं गार्हपत्याधानम्, 29– आहवनीयाधानम्, 30– यजमानकर्तृको जपः, 31–उपस्थानम्, 32– अध्वर्युकर्तृकं दक्षिणाग्न्याधानम्, 33– अश्वानयनप्रैषः, 34– अग्नीत्कर्तृकमश्वस्यानयनम्, 35– यजमानकर्तृकमग्निमन्थनयन्त्रधारणम्,

पत्न्या अध्वर्योश्च क्रमेण मन्थनम्, 36- अग्नौ जाते यजमानकर्तृको गोदेवनप्रैषः, 37- अग्निं प्रति अभिश्वसनम्, अग्नेरुच्छ्वशनं च, 38- ऋत्विक्कर्तृकं गोर्देवनम्, 39- यजमानकर्तृकं गोदानम्, 40- अध्वर्युकर्तृकं सभ्याग्न्याधानम्, 41-अग्नीन्-कर्तृकः अश्वोत्सर्गः, 42- अध्वर्युकर्तृकः पूर्णाहुतिहोमः, 43- यजमानस्य वाग-विसर्गः, 44- अध्वर्युकर्तृकमग्निहोत्रहवनम्, 45-यजमानकर्तृकं क्षौमवासः प्रदानम् इति ।

अथाग्निहोत्रस्वरूपम्

अमावास्यादिषु होमपूर्वाग्न्याधानं कृतवान् यजमानः साङ्गा-ग्न्याधानसंस्थितिदिनसायंकालात् प्रभृति सायम्प्रातर्नित्यमग्निहोत्रं[1] कुरुते। पौर्णमास्यामिष्टिपूर्वाधानं कृतवान् यजमानस्तु साङ्गाग्न्याधानसमाप्ति-दिने साङ्गाग्न्याधानसमाप्तिसमनन्तरमेवान्वारम्भणीयेष्टिं विधाय नित्याग्निहोत्रं प्रारभमाणः सायमग्निहोत्रं कृत्वा श्वोभूते प्रातरग्निहोत्रं च हुत्वा विहृतावग्नी अपवृज्य[2]पूर्णमासेष्ट्यर्थमग्न्युद्धरणान्वाधानादिकं सद्यः पौर्णमासेष्टिं कुरुते । सोमपूर्वाग्न्याधानं कृतवान् यजमानस्तु साङ्गाग्न्या-धानसमाप्तिसमनन्तरं[3] सोमयागमुपक्रम्य सोमयागसमाप्तिसायङ्कालात् प्रभृत्येव सायम्प्रातर्नित्यमग्निहोत्रं प्रारभते।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- आप०श्रौ०सू० 5/22/2, 10, 13; 5/24/9.

2- तत्रैव - 5/24/9 - 5/25/1; अग्निहोत्रचन्द्रिकाया इष्टिपूर्वाधान-निरूपणप्रकरणं च(पृ० 211-220) द्रष्टव्यम्; देवयाज्ञिकभाष्यधृतकठसूत्रे तु- "पौर्णमास्यामादधानः पूर्वामुपोष्याधायाग्न्याधेयेष्टिभिरिष्ट्वा जुह्वदग्निहोत्रमुपतिष्ठमानो वसति श्वोऽन्वारम्भणीया पौर्णमासं च" इति 4/7/1.

3- का०श्रौ०सू०- 7/1/2-3; ध०मी०सू०- 5/4/6.

सायमग्निहोत्रस्य संक्षिप्तः प्रयोग एवं भवति

यदि यजमानस्य समृद्धत्वेनाऽशक्तत्वेन वा यजमानादन्योऽध्वर्युः पुत्रो श्रोता शिष्यादिको वाऽग्निहोत्रस्य तर्हि यजमानोऽनस्तमित एव सूर्ये तं कर्तारम् "उद्धर" इति प्रेष्यति । ततः कर्ता गार्हपत्यादाहवनीयं यथावश्यकं दक्षिणाग्निं चोद्धरति ।(ततः कर्ता सायंसन्ध्यामुपास्ते)। यजमाने एव कर्तरि सति तु प्रैषो न भवति ।

ततो यजमानो दक्षिणेन द्वारेण प्रविश्य[1] गार्हपत्यदक्षिणाग्न्यारन्तराले स्थितेन मार्गेण तयोर्दक्षिणतः स्थितेन मार्गेण वा[2] आहवनीयं प्रति गत्वाऽऽहवनीयमप्रदक्षिणं[3] परीत्याऽऽगत्य स्वस्थान उपविशति[4]। पत्न्यपि यजमानवदेव सन्चरेण प्रविश्याहवनीयमप्रदक्षिणं परीत्य गार्हपत्यात् प्रत्यग् दक्षिण ऐशान्यभिमुखी उपविशति ।

ततोऽध्वर्युः पुत्रादिकों वा यजमान एव वाऽऽहवनीयात् पश्चात् प्रागग्रमुदगग्रं वा बाहुमात्रमासनपट्टसदृशं कूर्चं निधाय दर्भैराहवनीयस्य परिस्तरणं प्रादक्षिण्येन कुरुते। तत्र प्रथमं प्रागुदगग्रैर्दर्भैः, ततो दक्षिणतः प्रागग्रैर्दर्भैः, ततः पश्चादुदगग्रैर्दर्भैः, तत उदक् प्रागग्रैर्दर्भैः परिस्तरणं कुरुते। तदनन्तरमेवमेव गार्हपत्यस्य परिस्तरणं कुरुते, ततो दक्षिणाग्निरप्युद्धृतश्चेत् तस्यापि परिस्तरणं कुरुते। ततः प्रथममाहवनीयस्य पर्युक्षणमैशान्यादिकमुदक्संस्थं कुरुते, तत आहवनीयादारभ्य गार्हपत्यं यावत् प्रतीचीमुदकधारां सन्ततां निनयन् गच्छति,

---

1- का०श्रौ०सू० 4/15/28.

2- तत्रैव, 4/13/12-13.

3- प्रातरग्निहोत्रे तु गार्हपत्यं प्रदक्षिणं परीत्योपविशति यजमानः ।

– का०श्रौ०सू० 4/15/2

4- अतः परं प्रातरग्निहोत्र एव यजमानः समन्त्रमप आचायमतीति प्रतीयते ।

– का०श्रौ०सू० 4/21

ततो गार्हपत्यस्य प्रदक्षिणं पर्युक्षणं कुरुते।[1] ततो यदि दक्षिणाग्निरपि उद्धृतस्तर्हि तस्यापि पर्युक्षणं कुरुते।

ततोऽध्वर्युर्यजमानादिको वाऽग्निहोत्रस्य कर्ताऽग्निहोत्रीं धुक्ष्वेति कंचनाऽशूद्रं दोग्धारं प्रेष्यति।

ततो यजमानो वाचं यच्छति[2]।

दोग्धा चाग्न्यागारस्य दक्षिणतः प्राङ्मुखीमुदङ्मुखीं वा पुंवत्सामग्निहोत्रीं गामवस्थाप्य वत्सं संसृज्याऽपनीयाऽशूद्रघटितायामूर्ध्व-कपाल्यां मृन्मय्यां पयस्थाल्यां गां पयो दोग्धि।[3]

ततोऽग्निहोत्रस्य कर्ताऽध्वर्युर्यजमानादिको वा गोः समीपे गत्वा पयस्थालीमादायाऽऽहवनीयं पूर्वेणाहृत्य गार्हपत्यात् पश्चादुपविश्य गार्ह-पत्यस्योत्तरतोऽङ्गारान् निरूह्य तेष्वङ्गारेषु पयस्थालीमधिश्रयति। ततो दर्भतृणमेकं ज्वालयित्वा तेन स्थालीस्थं पयोऽवज्यात्य स्रुवेणाऽपः प्रत्यानीय पुनस्तथैवाऽवज्योत्य हस्ताभ्यां पयस्थालीं समादायोदगुद्वासयति, हस्तौ विसृज्य पुनः पयस्थालीं हस्ताभ्यां समादाय पुनरुत्तरत उद्वासयति; पुनरपि हस्तौ विसृज्य पुनः पयस्थालीं हस्ताभ्यां समादाय पुनरप्युत्तरत उद्वासयति।

---

1- प्रातरग्निहोत्रे तु प्रथमं गार्हपत्यस्य पर्युक्षणं गार्हपत्यात् प्रभृत्याहवनीयं यावदुदकधाराया निनयनं तत आहवनीयस्य पर्युक्षणमिति क्रमो भवति।
— का०श्रौ०सू० 4/15/7.

2- का०श्रौ०सू०- 4/14/3। (अध्वर्युरेव वाचं यच्छतीति कर्कानुसारी विद्याधर

3- तत्रैव- 4/14/1.

ततः सूर्येऽस्तमिते[1] वैकङ्कतं स्रुक्स्रुवं गार्हपत्ये प्रतप्य हस्तेनैव सम्मार्ष्टि । ततः पुनः प्रतपति ।

ततोऽध्वर्युर्यजमानादन्यो वाऽग्निहोत्रस्य कर्ता "उन्नेष्यामि"[2] इति यजमानस्थाऽनुज्ञां प्रार्थयते।[3] यजमानश्च तिष्ठन् "ओउमुन्नय"[4] इत्यनुजानाति ।

ततोऽध्वर्युरन्यो वाग्निहोत्रस्य कर्ता सव्येन पाणिनाऽग्निहोत्र-हवणीं वैकङ्कतीं स्रुचमादाय दक्षिणेन वैकङ्कतं स्रुवमादाय पयस्थालीतोऽग्नि-होत्रहवण्यां चतुर्वारं[5] पय उन्नयति । ततः स्रुवं पयस्थाल्यामेव निदधाति । ततः प्रादेशमात्रीं वार्क्षीं समिधं स्रुग्-दण्डोपरि अङ्गुल्याद्यन्तरितां धारयंस्तां स्रुचं गार्हपत्यस्योपरि समीप एव नीचैः कृत्वा ततो मुखमात्रे स्रुचमानीय तां तत्रैव धारयन्नाहवनीयं प्रतिहरति। तत्र गार्हपत्याहवनीययोर्मध्यं देशं प्राप्य स्रुचं नीचैः (नाभिदघ्ने) कृत्वा पुनरप्युद्धृत्य मुखमात्रे एव धारयित्वाऽऽहवनीयं गत्वा तत्समीपे वायव्यां दिशि प्राङुपविश्य दक्षिणं जान्वाच्य सव्येन पाणिना स्रुचं गृहीत्वा दक्षिणेन पाणिना "अग्निज्ज्योतिषन्त्वा वायुमतीम्प्राणवतीं "स्वर्ग्ग्यां" स्वर्ग्गायोपदधामि भास्वतीम्"[6] इति मन्त्रेण[7] समिधमाहवनीये आदधाति। ततो दक्षिणेन पाणिना स्रुच मादायाग्निं प्रदीप्तं समिधि समिधो

---

1- का०श्रौ०सू० 4/14/6.

2- तत्रैव, 4/14/8.

3- यजमानः स्वयमेवाग्निहोत्रं कुरुते तर्हि अनुज्ञाप्रार्थनाऽनुज्ञा च न भवतः ।

4- का०श्रौ० सू० 4/14/9.

5- पन्चावत्तिनः पन्चवारं पय उन्नयन्ति ।

6- का०श्रौ०सू० 4/14/13.

7- प्रातरग्निहोत्रेऽप्ययमेव मन्त्रः, नापि तत्राग्निपदस्थाने सूर्यपदप्रयोगः ।

मूलाद् द्वावङ्गुलौ त्यक्त्वा समिध उपर्याहुतिम् "अग्निर्ज्ज्योतिरग्निः स्वाहा"[1] इति मन्त्रेण[2] "सजूर्द्देवेन सवित्त्रा सजू रात्र्येन्द्रवत्त्या। जुषाणो-ऽअग्निर्व्वेतुस्स्वाहा"[3] - इति मन्त्रेण[4] वा[5] "इदमग्नये न मम" इति त्यागं कृत्वा[6] स्रुचि उन्नीतस्य पयसश्चतुर्थांशमेव जुहोति। ततः[7] प्रजापतिं मनसा ध्यायन् "इदं प्रजापतये न मम" इति त्यागं कृत्वा[8] तूष्णीमेवोत्तराहुतिं पूर्वाहुतितो-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा०वा०शु०य०वे०म०सं० - 3/9.

2- प्रातरग्निहोत्रे तु "सूर्य्यो ज्ज्योतिज्ज्योतिः सूर्य्यः स्वाहा" इति वा "ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा" इति वा मन्त्रः - (मा०वा०शु०य०वे०सं० 3/9, का०श्रौ०सू० 4/15/8/10, मा०श०प०ब्रा० 2/3/1/30, 33, 35)

3- मा०वा०प०शु०य०वे०म०सं०- 3/10.

4- प्रातरग्निहोत्रे तु "सजूर्द्देवेन सवित्त्रा सजूरुषसेन्द्रवत्त्या। जुषाणः सूर्य्यो वेतु स्स्वाहा" इति (मा०वा०शु०य०वे०म०सं० 3/10) मन्त्रः ।

5- ब्रह्मवर्चसकामस्य तु "अग्निर्व्वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा" इति (मा० वा०शु०य०वे०म०सं० 3/9) सायमग्निहोत्रे पूर्वाहुतेर्मन्त्रः, "सूर्य्यो वर्च्चो ज्ज्योतिर्व्वर्च्चः स्वाहा" इति(तत्रैव) प्रातरग्निहोत्रे मन्त्रः (का०श्रौ०सू० 4/14/15; मा०श०प०ब्रा० 2:/3/1/31)

6- त्यागविधानं श्रुतौ सूत्रे च न दृश्यते; स्मृत्यन्तरबलात् पद्धतिकारैस्त्याग-प्रकारः प्रतिपादितः ।

7- पुष्टिकामत्वेन (का०श्रौ०सू० 4/14/22-25)
यदि गार्हपत्येऽपि होष्यन् भवति तर्हि स्रुचं कूर्चे निधाय हस्तं विसृज्य गार्हपत्यमवेक्षते, तत उत्तरामाहुतिं जुहोति (का०श्रौ०सू०- 4/14/16-17)

8- अनिरुक्तस्य प्रजापतेः कृते स्मार्तोऽपि त्यागो मानस एवोचितः प्रतीयते, न वाचिकः ।

ऽधिकामग्नेरुत्तरभागे पूर्वाहुत्या संसर्गं कुर्वन् जुहोति। द्वितीयाहुतितोऽपि भूयिष्ठं पयः स्रुचि परिशेषयति। ततः स्रुचमुदीचीं द्विरुद्धृत्य कूर्चे निदधाति। ततः स्रुगग्रमधोमुखेन हस्तेन प्रत्यक्संस्थमुपमृज्य "नमो देवेभ्यः"[1] इति मन्त्रेण कूर्चस्योत्तरभागे पयोलेपं निमार्ष्टि । तत उत्तानेन हस्तेन स्रुगग्रं प्रत्यक् संस्थमुपमृज्य कूर्चस्य दक्षिणतो भूमौ "नमः पितृभ्यः"[2] इति मन्त्रेण उत्तानमेव हस्तं निदधाति। ततो दक्षिणहस्तेनाप उपस्पृशति ।

ततोऽग्निहोत्रस्य कर्ता स्रुचमादाय भक्षार्थमग्निहोत्रशालातो बहिर्गत्वोपविश्याऽनामिकया स्रुक्स्थं पयो गृहीत्वा प्राश्य पुनरनामिकयैव पयो गृहीत्वा प्राश्नाति।[3] ततः स्रुक्स्थं सर्वं पयो मुखे संयोज्य जिह्वयैव निर्लेढि[4]।

ततोऽग्निहोत्रस्य कर्ता आचम्याग्निहोत्रशालां प्रविश्य[5] आहवनीय-समीपे समुपविश्य दक्षिणहस्तेनोदस्थालीमादाय स्रुचमुदकेन पूरयित्वा "देवान् जिन्व

---

1- का०श्रौ०सू०- 4/14/20.

2- तत्रैव ।

3- मा०श०प०ब्रा०- 2/3/1/21; का०श्रौ०सू०- 4/14/26-27.

4- "अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः" इति आदित्यपुराणे कलिवर्ज्यपाठादिदानीन्तना अग्निहोत्रहवणीं न निर्लिहन्ति ।

5- "उत्सृप्याचामति निर्लेढि" इति (मा०श०प०ब्रा० 2/3/1/21, का०श्रौ०सू० 4/14/27) वचनाद् बहिर्गतस्य प्रवेशोऽर्थसिद्धः ।

6- का०श्रौ०सू० 4/14/27.

इति मन्त्रेणाहवनीयस्योत्तरतः स्रुचैवोदकमुत्सिञ्चति। ततः पुनः स्रुचमुदकेन पूरयित्वा "पितॄन् जिन्व"[1] इति मन्त्रेणाहवनीयस्य दक्षिणतः स्रुचैवोदकमुत्सिञ्चति । ततः पुनः स्रुचमुदकेन पूरयित्वा "सप्तऋषीन् जिन्व"[2] इति मन्त्रेणाहवनीयात् प्रागुदीच्यां दिशि स्रुचैवोदकमूर्ध्वमुत्क्षिपति ।

ततः पुनः स्रुचमुदकेन पूरयित्वा कूर्चस्थाने प्राक्संस्थमुदक्संस्थं वा "अग्नये पृथिवीक्षिते स्वाहा"[3] इति मन्त्रेण प्रथमं स्रुगुदकतृतीयभागं भूम्यां निषिञ्चति; ततः "पृथिव्याममृतञ्जुहोमि स्वाहा"[4] इति मन्त्रेण द्वितीयं स्रुगुदकतृतीयभागं निषिञ्चति; ततः "अमृतेऽमृतन् जुहोमि स्वाहा"[5] इति मन्त्रेण तृतीयं स्रुगुदकतृतीयभागं निषिञ्चति ।

ततोऽग्निहोत्रस्य कर्ता स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति ।

ततोऽग्निहोत्रस्य कर्ता पर्युक्षणक्रमेण सर्वेषु अग्निषु[6] "समिदसि समिद्धो मेऽग्ने दीदिहि समेद्धातेऽग्ने दीद्यासम्"[7] इति मन्त्रेण[8] तिस्रस्तिस्रः समिध आदधाति[9]।

---

1- का०श्रौ०सू० - 4/14/27.

2- तत्रैव

3/4/5- तत्रैव, 4/14/28.

6- माध्यन्दिनीयशतपथब्राह्मणानुसारं ये नित्याग्निहोत्रे दक्षिणाग्निविहरणं न कुर्वत( 2/3/2/6-8) तेषां नित्याग्निहोत्रे दक्षिणाग्निसम्बद्धाः सर्वाः क्रिया लुप्येरन् ।

7- का०श्रौ०सू०- 4/14/30.

8- एकैकेन वाक्येनैकैकां समिधमादधीत सर्वेण मन्त्रेण सहैव तिस्रः समिधो वादधीतेति देवयाज्ञिकः, द्वितीय एव पक्ष इति कर्कः ।

9- एतदनन्तरं वात्सप्रोपस्थानं विहितमपि तस्य वैकल्पिकत्वात् (का०श्रौ०सू० 4/12/1-12) त्यक्तम् ।

ततोऽग्निहोत्रस्य कर्ता येन क्रमेण यथा च पूर्वं पर्युक्षणं कृतं तेनैव क्रमेणे तथैव च सर्वेषामग्नीनां पर्युक्षणं करोति।[1]

ततोऽग्निहोत्रस्यकर्ता वाग्विसर्ग[2] कुरुते[3]

ततोऽग्निहोत्रस्य कर्ता आहवनीयस्य समीपे आस्ते[4], "इन्द्रायाहवनीयाय नमः[5]" इति तमुपास्ते च । ततो गार्हपत्यस्य समीपे गत्वा शेते, आस्ते वा[6], "यमाय राज्ञे नमः"[7] इति तमुपास्ते च।

ततो यजमानो यथाप्रविष्टं निष्क्रामति[8]। यदापि अपराग्नी अन्तरेण प्रविष्टस्तदापि अपराग्नी दक्षिणेनैव निष्क्रामति[9]; निष्क्रामंश्च"नडाय

---

1- का०श्रौ०सू० - 4/13/19.

2- तत्रैव, 4/13/31.

3- प्रातरग्निहोत्रे वाग्विसर्गानन्तरं मन्त्रेणाचामति(का०श्रौ०सू० 4/15/5), एतस्याचमनस्य प्रातरग्निहोत्रप्रकरणे पाठस्य प्रयोजनान्तरस्याऽनवगम्यमानत्वादिदमाचनं प्रातरग्निहोत्र एवेति प्रतीयते ।

4- का०श्रौ०सू० 4/15/29.

5- एष मन्त्रो देवयाज्ञिकेन पद्धतौ प्रोक्तः, सूत्रव्याख्याने पद्धतौ चैवापि तूष्णीमाहवनीयस्योपस्थानमित्यपि उक्तं तेनैवेति वस्तुत एष मन्त्रोऽनावश्यक एव विज्ञायते, श्रुतावपि(मा०श०प०ब्रा० 2/3/2/1-2) मन्त्रविधानं नास्ति ।

6- का०श्रौ०सू० - 4/15/30.

7- एषोऽपि मन्त्रो देवयाज्ञिकेन प्रोक्तो वस्तुतोऽनावश्यक एव प्रतीयते ।

8- एष निष्क्रमणविधिर्देवयाज्ञिकेन पद्धतौ प्रोक्तः ।

9- एषोऽपि विशेषस्तेनैव तत्रैवोक्तः ।

नैर्ऋत्यायान्वाहार्यपचनाय नमः"[1] इति मनसैव दक्षिणाग्निमुपस्मरति[2]।

इति सायमग्निहोत्रप्रयोगः संक्षेपेण प्रदर्शितः । प्रातरग्निहोत्रगता विशेषास्तु सायमग्निहोत्रपदार्थटिप्पणीषु सायमग्निहोत्रप्रयोगटिप्पणीषु च प्रदर्शिता एव । तस्मान्न पृथक् प्रातरग्निहोत्रप्रयोगः प्रदर्श्यते ।

अथ पूर्णमासेष्टि[3]- स्वरूपम्[4]

तत्र पूर्णमासेष्टौ पदार्थक्रम एव भवति -

1- अग्न्युद्धरणम्, 2- अग्न्यन्वाधानम्, 3- मांस-मैथुन-वर्जन-

---

1- एषोऽपि मन्त्रो देवयाज्ञिकेनैव प्रोक्तो वस्तुतोऽनावश्यक एवावगम्यते ।

2- का०श्रौ०सू० 4/15/31; म०श०प०ब्रा० 2/3/2/4.

3- यद्यपि श्रुतौ दर्शपूर्णमासपदस्यैव प्रयोगस्तथापि स लघुनः प्रातिपदिकस्य पूर्व प्रयोगात् तथाभूतः, प्रयोगे तु पूर्णमासेष्टेरेव प्राथम्यम् आधानसमनन्तरं पूर्णमासेष्टेर्विधानात् (आप०श्रौ०सू० - 5/24/9-5/25/1)

4- यद्यपि "अन्वारम्भणीया .... दर्शपूर्णमासारम्भे(का०श्रौ०सू० 4/5/21) इत्यादिकाद् वचनात् पूर्णमासदर्शयागयोः प्रथमात् प्रयोगात् प्राक्, अन्यासामपि दर्शपूर्णमासप्रकृतिकानामिष्टीनां पशुबन्धानां च प्रथमात् प्रयोगात् प्राक् (तत्रैव कर्कभाष्ये) अन्वारम्भणीयेष्टिं कुर्वते; तत्र च पूर्णमासेष्टेर्द्र्य-हसम्पादनीयत्वे(मातृकापूजाभ्युदयिकश्राद्धानन्तरं) पौर्णमास्यामेव, सद्यः सम्पादनीयत्वे तु प्रतिपदि एवान्वारम्भणीयेष्टिं कुर्वते; अग्न्युद्धरणादिकमपि वर्गान्ताऽन्वारम्भणीयेष्टिश्च पूर्णमासेष्टिरिवैव भवति; किन्तु अर्थवत् पात्रमसादनम्, आग्नावैष्णव एकादशकपाल पुरोडाशः सरस्वत्यै चरुः, सरस्वते द्वादशकपालः पुरोडाश इति त्रीणि हवींषि, विंशतिकाष्ठ इध्मः, अन्वाहार्यस्थाने षष्ठौ ही मिथुनौ गावौ वेति विशेषाः, तथापि सा पूर्णमासेष्टिज्ञाने सुज्ञानेति न पृथक् प्रदर्श्यते ।

सङ्कल्पः, 4-वपनं न वा, 5- नखनिकर्तनम्[1], 6- व्रतोपायनीयाशनम्[2],

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- दर्शेष्टौ तु नखनिकर्तनाद् नित्याद् वैश्वदेवाच्च पश्चादमावास्यायाम-
पराह्णे पिण्डपितृयज्ञो भवति। तत्र च सङ्कल्पः, दक्षिणाग्नेः परिस्तरणम्
दक्षिणाग्निमपरेण दक्षिणसंस्थमेकशः पात्राणामासादनम्, चरुकरणम्, मेक्षणेन
"अग्नये कव्यवाहनाय स्वाहा" इति चरोर्दक्षिणाग्नौ हवनम्, "सोमाय
पितृमते स्वाहा" इति पुनश्चरोर्हवनम्, दक्षिणाग्रया रेखायाः करणम्,
रेखाग्रे उल्मुकस्य निधानम्, अवनेजनदानम्, सकृदाच्छिन्नानां दर्भाणां
रेखायामवस्थापनम्, चरोस्त्रीन् विभागान् कृत्वा तैस्त्रीन् पिण्डान् सम्पाद्य
यजमानपितृ-पितामह-प्रपितामहेभ्यो दानम्, जपः आत्मनादुदङ्भूत्वाऽऽ-
सनम्, पुनर्दक्षिणामुखो भूत्वा जपनम्, पिण्डमूले पूर्ववदवनेजनदानम्, नीवीं
विस्रंस्याञ्जलिकरणम्, जलः पिण्डेषु सूत्रदानम्, उदपात्रजलशेषस्य पिण्डेषु
निषेचनम्, पिण्डानां यजमानाय दानम्, पिण्डानामवघ्राणम्, सकृदाच्छि-
न्नकुशानामग्नौ प्रहरणम्, उल्मुकस्य चाग्नौ प्रहरणम्, पत्नी पुत्रकामा चेत्
तस्यै अनवघ्रातस्यैव मध्यमपिण्डस्य प्रदानम्, तस्याः समन्त्रपाठं तत्प्राशनम्,
पिण्डयोः पिण्डानामेव वाऽग्नौ आधानम्, ब्राह्मणेन भक्षणम्, अप्सु
प्रक्षेपणं वेति पदार्था भवन्ति।

2- दर्शे तु सान्नाय्यवति व्रतोपायनीयाशनानन्तरं पलाशशाखाछेदनादिकं
भवति ।

7–व्रतोपायनम्, 8– सायमग्निहोत्रहोमः[1], 9–वृक्षफलाद्यशनं न वा[2], 10–आहवनीयागारे गार्हपत्यागारे वापि यजमानस्य शयनम्, 11–प्रातरग्निहोत्रहोमः, 12–षण्णामासनानामुपकल्पनम्, 13–ब्रह्मवरणम्, 14–ब्रह्मणो जपः, 15– वाचस्पतिप्रैषः[3], 16–ब्रह्मसदनं प्रतिगमनम्, ब्रह्मसदनेक्षणम्, तृणस्य प्रासनम्, ब्रह्मसदने समुपवेशनं च, 17–अध्वर्युकर्तृका प्रणीताप्रणयनानुज्ञा प्रार्थना, 18–ब्रह्मकर्तृकाऽनुज्ञा, 19–अध्वर्युकर्तृकं प्रणीताप्रणयनम्, 20–आहवनीय–गार्हपत्य–दक्षिणाग्नीनां परिस्तरणम्, 21–पात्रासादनम्, 22–शूर्पाग्निहोत्रहवण्योः प्रतपनम्, 23–हविर्ग्रहणम्, 24–हविरासादनम्, 25–पवित्रकरणम्, 26–अग्निहोत्रहवण्यामप आसेचनमुत्पवनं पवित्रनिधानमुदीङ्गनं च, 27–हविः प्रोक्षणायानुज्ञायाः प्रार्थना, 28– ब्रह्मकर्तृकानुज्ञा, 29–अध्वर्युकर्तृकं हविः प्रोक्षणम्, 30–पात्रप्रोक्षणम्, 31–प्रोक्षणीनिधानम्, कृष्णाजिनस्यादानवधूननमास्तरणं च, 32– उलूखलनिधानम्, 33–हविरावापः, कण्डनप्रारम्भश्च, 34– हविष्कृदाह्वानम्, 35–अग्नीत्कर्तृकं दृषद उपलायाश्च कुट्टनम्, 36– पत्न्या अग्नीधो वा हविषः कण्डनम्, 37–अध्वर्युकर्तृकं शूर्पस्यादानम्, हविषो निष्पवनम्,

---

1– सान्नाय्यवति दर्शे सायमग्निहोत्रानन्तरं वत्ससंसर्जनपूर्वकवत्सापाकरणादिकं दोहन–श्रपणातन्चनपिधानरक्षणवत्सापाकरणशाखोद्गूहनान्तं कर्म भवति ।

2– सद्यस्कालायां पौर्णमास्यां तु व्रतोपायनानन्तरं सायमग्निहोत्रहोमवृक्षफलाद्यशनाग्न्यगारशयनप्रातरग्निहोत्रहोमा न भवन्ति, ब्रह्मवरणादिकमेव भवति ।

3– वाचस्पतिप्रैषो यजमानकर्तृक इति कर्कानुसारिणि कातीयेष्टिदीपके नित्यानन्दः, ब्रह्मकर्तृक इति देवयाज्ञिकः ।

तुषाणामुत्करे प्रासनं च, 38- हविषोभिमन्त्रणम्, 39- पत्न्या अग्नीधो वा हविष: फलीकरणम्, 40- अग्नीत्कर्तृकं कपालोपधानम्, अध्वर्युकर्तृकं हविष: पेषणं च, 41- अग्नीत्कर्तृकम् उपसर्जनीनामधिश्रयणम्, 42-कवोष्णानामुपसर्जनीनामानयनम्, 43- अध्वर्युकर्तृकं पिष्टसंयवनम्, 44-पिष्टगोलस्य करणं विभजनं च[1], 45- अग्नीत्कर्तृकमाज्यस्याधिश्रयणम्, अध्वर्युकर्तृकं पुरोडाशपिण्डयोरधिवृज्जनम्, पुरोडाशयो: प्रथनम्, अभिमर्शनं च, 46- अङ्गुलीनां पात्र्याश्च प्रक्षालनम्, 47-पर्यग्निकरणम्, 48- पुरोडाशश्रपणम्, 49 -पात्र्यङ्गुलिप्रक्षालनजलस्याप्त्येभ्यो निनयनम्, 49-अन्वाहार्याधिश्रयणम्, 50-वेदिमानम्, 51- स्फ्यादानम्, 52- स्तम्बयजुर्हरणम्, 53- अग्नीत्कर्तृकमुत्कराभिन्यसनं च, 54- अध्वर्युकर्तृका वेदिपूर्वपरिग्रहग्रहणानुज्ञा प्रार्थना, 55-ब्रह्मकर्तृका अनुज्ञा, 56- अध्वर्युकर्तृकं वेदिपूर्वपरिग्रहग्रहणम्, 57- अग्नीत्कर्तृकं[2] वेदिखननम्, वेदे: परिसमूहनम्, उत्करस्य करणं, च, 58- अध्वर्युकर्तृका वेद्युत्तरपरिग्रहग्रहणानुज्ञाप्रार्थना, 59- ब्रह्मकर्तृकानुज्ञा, 60- अध्वर्युकर्तृकं वेद्युत्तरपरिग्रहग्रहणम्, 61-अग्नीत्कर्तृकं[3] प्रोक्षणीधारणम्, 62- अध्वर्युकर्तृक:[4] प्रोक्षणीरासादयेत्यादिक: प्रैष: , 63- स्फ्यप्रहरणादिकम्, 64- प्रोक्षणीनामग्निहोत्रहवणीस्थानामासादनम्

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- असोमयाजिनो ब्राह्मणस्याग्नीषोमीयपुरोडाशस्याभावे (आप०श्रौ०सू० परिभाषाप्र०, ध०मी०सू० 5/4/4/(वदनं विभजननं न भवति।

2- वेदिखननमध्वर्युकर्तृकमिति कर्कानुसारिणि कातीयेष्टिदीपके नित्यानन्द: अग्नीत्कर्तृकमिति देवयाज्ञिक: ।

3- एतत् प्रोक्षणीधारणमध्वर्युकर्तृकमिति कर्क:, अग्नीत्कर्तृकमिति देवयाज्ञिक: ।

4- एष प्रैषोऽध्वर्युकर्तृकइति हरिस्वामिन:, अनन्तयाज्ञिक-देवयाज्ञिकादयश्च, धर्ममीमांसासम्मतश्चायं पक्ष:(3/8/23-24), कर्कस्तु प्रैषोऽग्नीत्कर्तृक: प्रैषार्थोऽध्वर्युकर्तृक इति वावदीति; प्रैषाभावपक्षे हि अध्वर्यो: प्रैषार्थकर्तृत्वं तस्याप्यन्यत्राव्यापृततत्वेनाविरोधात्, "स्वयमेवाद्ध्वर्युर्व्वेदिदमत:

क्रमश:....

65- इध्मस्य बर्हिषश्चासादनम्, 66- स्रुवस्य जुह्वा उपभृतः प्राशित्रहरणादीनां चाग्नीत्कर्तृकं[1] प्रतपनादिकम्[2] अध्वर्यवे समर्पणं च, 67-पत्नीसन्नहनम्, 68-आज्य-स्थाल्युद्वासनम्, 69-पत्न्या आज्यस्यावेक्षणम्, 70-अग्नीत्कर्तृकमाज्यस्थाल्या वेद्यामासादनम्, 71-अध्वर्युकर्तृकमाज्यस्योत्पवनम्, प्रोक्षण्याश्चोत्पवनम्, 72- आज्यस्यावेक्षणम्, स्रुवेण जुह्वामानयनं च, 73- जुह्वा अग्नीधे धारणाय दानम्, 74- उपभृति आज्यस्यानयनम्, अग्नीधे दानं च, 75-ध्रुवायामाज्य-स्यानयनम्, अग्नीधे दानं च, 76- आज्यस्थाल्या असञ्चरे निधानम्, 77-पूध्मप्रोक्षणानुज्ञाप्रार्थना, 78- ब्रह्मकर्तृकानुज्ञा, 79- अध्वर्युकर्तृकमिध्म-प्रोक्षणम्, 80-वेदिप्रोक्षणम्, 81-अध्वर्युकर्तृकाबर्हिः प्रोक्षणानुज्ञाप्रार्थना, 82-ब्रह्म-कर्तृकानुज्ञा, 83- अध्वर्युकर्तृकं बर्हिः प्रोक्षणम्, 84- प्रस्तरस्य ग्रहणं ब्रह्मणे प्रदानं च, 85- बर्हिस्सन्नहनस्य निधानमाच्छादनं च, 86- वेदेस्तृणकाष्ठादेरपासनम्, 87- बर्हिस्तरणम्, 88- ब्रह्मणो हस्तात् प्रस्तरस्यादानमाहवनीयस्य समिधा समर्थीकरणं च, 89- अनुयाजार्थमुल्मुकयोरुद्वहनम्, 90- परिधिपरिधानम्, 91- आहवनीये समिधोराधानम्, 92- जपः, 93- विधृत्योर्निधानम्, 94- प्रस्तरस्मरणम्, 95- प्रस्तराभिनिधानम्, 96- जुहूपभृद्ध्रुवाणां सादनम्,

- - - - - - - - - - - - - - - - - - - - - - - - -

.... कस्मकर्त्तव्यमिति" इति काण्वपाठाच्चेति केचिदिति देवयाज्ञिकः ।

1- स्रुवादिप्रतपनमग्नीत्कर्तृकमिति देवयाज्ञिकपद्धतौ, अध्वर्युकर्तृकमिति कातीयेष्टिदीपके ।

2- यद्यपि कातीयेष्टिदीपके जुह्वादिषु सम्मार्जनात् प्राक् प्रतपनं न प्रदर्शितं तथापि तदपि समन्त्रं करणीयमेवेति प्रतीयते ।

97- आज्यस्थालीं स्रुवं पुरोडाशपात्रीं वेदं चाऽऽदायाऽध्वर्योर्गार्हपत्यं प्रतिगमनम्, 98- पुरोडाशाभ्यां वेदेन भस्मनः पराकरणं तयोरभिधारणं पुरोडाशपात्र्यामाज्यस्योपस्तरणम्, पुरोडाशयोरुद्वासनम्, पात्र्यां स्थापन-मञ्जनं च, 99- कपालानां प्रत्यञ्जनम्, उद्वासनं च, 100- हविषां वेद्यामा-सादनम्, आलम्भनं च, 101- अध्वर्योरात्मन आलम्भनम्, 102- होत्रामन्त्रणम्, 103- होतुः प्रवेशो होतृषदनेऽवस्थानं च, 104- अध्वर्युकर्तृकः सामिधेन्यनुवचनप्रैषः, 105- होतृकर्तृका सामिधेन्यनुवचनानुज्ञा प्रार्थना, 106- ब्रह्मकर्तृकानुज्ञा, 107- होतृकर्तृको नमः कृन्दजपः, 108- यजमानकर्तृकः प्रैषः, 109- होतृकर्तृकं सामि-धेन्यनुवचनम्, द्विषद्भ्रातृव्याकबाधनरूपं यजमानकर्तृकं भूमेरधः पीडनम्, अध्वर्युकर्तृकं समिधामाधानं च, 110- सामिधेन्यनुवचनशेषरूपं होतृकर्तृकमार्षेयवरणम्, निविद-नुवचनं देवतावाहनं च, 111- अध्वर्युकर्तृकं वेदेनाहवनीयस्य त्रिरुपवाजनम्, पूर्वाधाराधारणं च, 112- अग्निसम्मार्जनप्रैषः, 113- अग्नीत्कर्तृकमाहवनीय-सम्मार्जनम्, 114- अध्वर्युकर्तृकमञ्जलिकरणम्, अपुषास्पर्शनं च, 115- जुहूपभृद्ग्रहणम्, यजतिदेशगमनम्, 116- उत्तराधाराधारणम्, 117- अध्वयुकर्तृकमाश्रावणम्, 118- अग्नीत्कर्तृकं प्रत्याश्रावणम्, 119- अध्वर्युकर्तृकं होतृवरणनम्, 120- होतृकर्तृको जपः, आत्मालम्भनं च, 121- होतृकर्तृकोऽध्वर्य्वग्नीदंससम्मर्शः, 122- अध्वयु-र्वग्नीदुपवेशनम्, 123- होतृकर्तृकं मुखसम्मार्जनम्, ऐन्द्रावृदन्वावर्तनम्, होतृष-दनतृणप्रासनम्, अबुपस्पर्शनम्, होतृषदन उपवेशनम्, उत्तरतः किन्चिच्चलनम्, विश्वेषां देवानां प्रार्थनम्, अग्ने प्रार्थनम्, स्रुगादापनपठनं च, 124- अध्वर्युकर्तृकं जुह्वध्यूहनम्, जुहूपभृदादानम्, यजतिदेशगमनं च, 125- प्रथमप्रयाजः समिद्यागः (अध्वर्युकर्तृकमाश्रावणम्, अग्नीत्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृकः समिद्यागप्रैषः

होतृकर्तृकः समिद्याज्यापाठः, वषट्कारानुमन्त्रणम्[1] आत्मालम्भश्च अध्वर्युकर्तृकं प्राच्या जुह्वा अवतारणं जुहूस्थाज्यतृतीयांशस्याहवनीये प्रक्षेपश्च, यजमानकर्तृकं प्रथमप्रयाजानुमन्त्रणम् ), ।26- द्वितीयप्रयाजस्तनूनपाठ्यागो नराशंसयागो वा, ।27- तृतीयप्रयाजइड्यागः, ।28- चतुर्थप्रयोजो बर्हिर्यागः, ।29- पन्चमप्रयोजाऽग्न्यादियागः, ।30- अध्वर्योरुदगृहविः समीपे गमनम्, प्रयाजशेषेण जुह्वैव ध्रुवायाः पुरोडाशयोरुभभृतश्चाभिधारणं च, ।3।- आग्नेयाज्यभागयागः (अध्वर्युकर्तृक आग्नेयाज्यभागपुरोनुवाक्याप्रैषः, होतृकर्तृक आग्नेयाज्यभाग पुरोनुवाक्यापाठः, अध्वर्युकर्तृकं ध्रुवाया आज्यस्य जुह्वामानयनं ध्रुवाया आप्यायनं यजतिदेशं प्रतिगनम् आश्रावणम्, अग्नीत्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृकोऽग्निं यजेतिप्रैषः, होतृकर्तृक आग्नेयाज्यभागयाज्यापाठः, वषट्कारानुमन्त्रणम्, आत्मालम्भः, यजमानकर्तृकस्त्यागः[2], अध्वर्युकर्तृक आहवनीये हविषः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

।- यद्यपि कातीयेष्टिदीपके नित्यानन्देन वषट्कारानुमन्त्रणं न प्रदर्शितम्, तथापि कातीयहौत्रपरिशिष्टे "वषट्कार मा म आयुः प्रमोषीर्व्वागोजः सहौजो मयि प्राणापानौ पातमिति वा वषट्कृत्य वषट्कृत्यानुमन्त्रयेतात्मानं चालभेत" इति विधानात्(5/4) वषट्कारानुमन्त्रणमावश्यकम्।

2- यजमानकर्तृकस्त्यागः श्रुतिषु श्रौतसूत्रेषु चाविहितत्वादनावश्यकोऽपि पद्धतिकारैः -

"आदौ द्रव्यपरित्यागः पश्चाद्धोमो विधीयते ।
प्रयोग इदमिन्द्राय न ममेति यथार्थतः ।।
अवत्तं तु त्यजेदन्नं मनसा वचसाऽपि च ।
ततश्च प्रक्षिपेदग्नाविति धर्मः सनातनः ।।
अत्यक्त्वा जुहुयाद् यस्तु मोहेनान्वितमानसः ।
देवा हव्यं न गृह्णन्ति कव्यन्च पितरस्तथा ।।
यत् किन्चिज्जुहुयादग्नौ तत् सर्वं त्यागपूर्वकम् ।
अन्यथा जुहुयाद् यस्तु नरकं स तु गच्छति ।।"

- इत्यादिस्मृतिबलात् प्रतिपादितः स्मार्त एव ।

प्रक्षेपश्च), 132- सौम्याज्यभागयाग:, 133- प्रधानयाग आग्नेययाग: (अध्वर्युकर्तृकं हवि: समीपे गमनम्, आग्नेययागपुरोनुवाक्याप्रैष:, होतृकर्तृक आग्नेययागपुरोनुवाक्यापाठ:, अध्वर्युकर्तृकं जुह्वामुपस्तरणम्, आग्नेयपुरोडाशाद्ववदानम्, प्रत्युपस्तरणम्, क्षताभ्यन्जनम्, यजतिदेशं प्रतिगमनम्, आश्रावणम्, अग्नीत्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृक आग्नेययागयाज्याप्रैष:, होतृकर्तृक आग्नेययागयाज्यापाठ:, वषट्कारानुमन्त्रणम्, आत्मालम्भ: अध्वर्युकर्तृक आहवनीये हविष: प्रक्षेप:), 134- प्रधानयागोऽग्नीषोमीयोपांशुयाग:[1], 135- प्रधानयागोऽग्नीषोमीय[2]पुरोडाशयाग:[3], 136- स्विष्टकृद्याग:, 137- अनुयाजार्थ सन्चराभ्युक्षणम्, 138- प्राशित्रावदानम्, 139- ब्रह्मणे प्राशित्रस्य प्रदानम्, 140- ब्रह्मकर्तृकं प्राशित्रस्य प्रेक्षणं प्रतिग्रहणं प्राशनं च, 141- अध्वर्युकर्तृकमिडावदानम्, 142- षडवत्तधान्यामाग्नीध्रभागावदानम्, 143- ब्रह्मभागावदानम्, 144- यजमानभागावदानम्, 145- इडाया होत्रे प्रदानम्, प्रदक्षिणीकरणम्, इडाप्रतिग्रहणम्, पर्वान्चनं च, 146- होतृकर्तृकभोष्ठ-

---

1- दर्शेष्टौ तु वैष्णवोपांशुयाजो भवति(का०श्रौ०सू० 3/3/24), असन्नयत: ।

2- दर्शेष्टौ तु असन्नयत ऐन्द्राग्न: पुरोडाशो भवति(का०श्रौ०सू० 4/2/36) सन्नयतस्तु ऐन्द्रो दधिपयोयागो माहेन्द्रो वा दधिपयोयागो भवति (का०श्रौ०सू० 4/2/37-39)

3- "नासोमयाजिनो ब्राह्मणस्याग्नीषोमीय: पुरोडाशो विद्यते" इति आपस्तम्बश्रौतसूत्रपरिभाषाप्रश्नवचनात्, "एकं वा शब्दसामर्थ्यात् प्राक्कृत्स्नविधानात्, पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात्, आज्यमपीति चेत्, न मिश्रदेवतत्वादैन्द्राग्नवत्" इति धर्ममीमांसासूत्र (5/4/18-21) वचनाच्चासोमयाजिनो ब्राह्मणस्याग्नीषोमीयपुरोडाशयागाभाव: प्रतीयते, कात्यायनश्रौतसूत्रे तु नायं विशेषोऽस्माभिरुपलब्ध: ।

निलेपनम्, 147- अध्वर्युकर्तृकम् अवान्तरेडावदानम्, होत्रे इडाया समर्पणं च, 148- ब्रह्माध्वर्यवग्नीत्कर्तृकमिडान्वारम्भणं होतृकर्तृकमिडोपह्वानं च, 149- अध्वर्युकर्तृकं पुरोडाशचतुर्धाकरणम्[1], भागानां बर्हिषि निधानम्, ऋत्विग्भ्य आदेशनम् यजमानकर्तृकं जपनम्, भागसमर्पणम्, षडवत्तसमर्पणम्, आशासानजपनम्, इडासमर्पणं च, 150- ऋत्विककर्तृकं चतुर्धाकरणभागभक्षणम्, 151-अग्नीत्कर्तृकं षडवत्तभागभक्षणम्, 152- ऋत्विककर्तृकमिडाभक्षणम्, 153- यजमानकर्तृकमिडाप्राशनम्, सर्वेषां मार्जनम्, 154- अध्वर्युकर्तृकं प्रस्तरे पवित्रयोर्निधानम्, 155- ब्रह्मभाग-यजमानभाग-समर्पणम्, 156- यजमानकर्तृकं स्वभागस्य बर्हिषि-निधानम्, 157- ब्रह्मकर्तृकं स्वभागस्य प्राशित्रपात्रे निधानम्, 158-अध्वर्युकर्तृकम् अन्वाहार्यस्योद्वासनं वेदिं प्रतिनयनम्, वेद्यां निधानम्, आलम्भनं च, 159- यजमानकर्तृकमन्वाहार्यदक्षिणादानम्, 160- ब्रह्मादिकर्तृकमन्वाहार्यदक्षिणाप्रतिग्रहणम्, 161-अध्वर्युकर्तृकमन्वाहार्यदीनामुदगुद्वासनम्, 162- अनुयाजार्थमुद्धृढयोरुल्मुकयोराहवनीये प्रक्षेपः, ब्रह्मणः प्रस्थानानुज्ञायाः प्रार्थनम्, अग्निसम्मार्जनायाग्नीत्प्रैषश्च, 163- ब्रह्मकर्तृकमनुज्ञानम्, 164- अग्नीत्कर्तृकं समिदाधानम्, 165- होतृकर्तृकं समिदनुमन्त्रणम्, 166- अग्नीत्कर्तृकमग्निसम्मार्जनम्, 167- प्रथमोऽनुयाजो बर्हिर्यागः (अध्वर्युकर्तृकमौपभृतस्याज्यस्य जुह्वामानयनम्, यजतिदेशगमनम्, आश्रावणम्, अग्नीत्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृको बर्हिर्यागयाज्यापाठार्थः प्रैषः, होतृकर्तृको बर्हिर्यागयाज्यापाठः वषट्कारानुमन्त्रणम्, आत्मालम्भः, अध्वर्युकर्तृको जुहूस्थाज्यतृतीयभागस्याहवनीये प्रक्षेपः), 168- द्वितीयोऽनूयाजो नाराशंसयागः, 169- तृतीयोऽनूयाजः स्विष्टकृद्यागः, 169- अध्वर्युकर्तृकमुदग्गमनम्, 170- औपभृतशेषहवनम्, 171- स्रुग्व्यूहनम, 172-परिध्यञ्जनम्, 173- आश्रावणम्, 174- अग्नीत्कर्तृकं प्रत्याश्रावणम्, 175- अध्वर्युकर्तृक सूक्तवाकप्रैषः, प्रस्तरादानादिकं च, 176- होतृकर्तृकः सूक्तवाकपाठः, 177- अध्वर्युकर्तृकं प्रस्तरस्याहवनीये प्रक्षेपणम्, 178- अग्नीत्कर्तृकोऽनुप्रहरणप्रैषः

---

1- आग्नेयस्यैव परोडाशस्य चतुर्धाकरणमिति( आप०श्रौ०सू० 3/3) धर्ममीमांसासूत्रे (3/1/27) च, कात्यायनश्रौतसूत्रे तु "उभौ वाऽविशेषात्" इत्युक्तम्(3/4/12) ।

179- अध्वर्युकर्तृकं प्रस्तरतृणानुप्रहरणम्, 180- अग्नीत्कर्तृकः, संवेदनप्रैषः, 181- अध्वर्युकर्तृकः प्रश्नः, 182- अग्नीत्कर्तृकमुत्तरम्, 183- अध्वर्युकर्तृकं श्रावणम्, 184-अग्नीत्कर्तृकं प्रतिश्रावणम्, 185- अध्वर्युकर्तृकाः शंयुवाकप्रैषः, 186- होतृकर्तृकं शंयुवाकपठनम्, प्रादेशस्य वदिश्रोणो निधानं च, 187-अध्वर्युकर्तृकं परिध्यनुप्रहरणम्, 188- संस्रवहवनम्, स्रुच्यनिधानम्, जुहूपभृन्निधानम्, वेद्यालम्भश्च, 189- ऋत्विजां पत्नीसंयाजार्थं गार्हपत्यं प्रतिगमनं तत्पश्चिमभागे उपवेशनं च, 190- सौम्ययागः(अध्वर्युकर्तृकः सोमपुरोनुवाक्याप्रैषः, होतृकर्तृकः सोमपुरोनुवाक्यापाठः, अध्वर्युकर्तृकं जुह्वा स्रुवेण स्थाल्या आज्यस्य चतुर्ग्रहणम्, आश्रवणम्, अग्नीत्कर्तृकं प्रत्याश्रावणम्, अध्वर्युकर्तृकः सोमयाज्याप्रैषः, होतृकर्तृकः सोमयाज्यापाठः, वषट्कारानुमन्त्रणम् आत्मालम्भः, अध्वर्युकर्तृको हविषो गार्हपत्येग्नौ प्रक्षेपः), 191- त्वाष्ट्रयागः, 192- अन्तर्धानकटप्रयोगः, 193- देवपत्नीयागः, 194- अन्तर्धानकटापनयनम्, 195- अग्निगृहपतियागः, 196- आज्येडावदानादिकम्, 197- अग्न्यदब्धाटवशीतमदेवताकः संस्रवहोमः, 198- दक्षिणाग्नौ अग्निसंवेशपतिहोमः, 199- सरस्वत्यै यशोभगिन्यै होमः, 200- पिष्टलेपहोमः, 201- पत्नीकर्तृको वेदविमोको योक्त्रविमोकश्च, 202- होतृकर्तृकं वेदस्तरणम्, आहवनीये समिध आधानं निर्गमनं च, 203- अध्वर्युकर्तृकः समिष्टयजुर्होमः, बर्हिर्होमश्च, 204- अध्वर्युकर्तृकं प्रणीतानिनयनम्, 205-कणप्रक्षेप 206- पूर्णपात्रनिनयनम्, 207- यजमानकर्तृकं पूर्णपात्रनिनीतजलग्रहणं मुखमार्जनं च, 208- यजमानकर्तृकं विष्णुक्रमक्रमणम्, 209- यजमानकर्तृकमेव स्वभागावेक्षणम्, भूम्यवेक्षणम्, प्राच्यवेक्षणम्, सूर्येक्षणम्, सूर्यावृद्धावर्तनम्, गार्हपत्योपस्थानम्, पुनः सूर्यावृदावर्तनम्, प्राचीगमनम्, आशीः प्रार्थनम्, व्रतविसर्जनम्, स्वभागप्राशनम्, च, 210- ब्रह्मकर्तृकं स्वभागप्राशनं , 211- अध्वर्युकर्तृकोः ब्राह्मणतर्पणप्रैषः,

यजमानकर्तृकं ब्राह्मणतर्पणम्, 2।2- ब्रह्मकर्तृकं कर्मापवर्गसमिदाधानम्[1], इति।

अथाग्रयणेष्टिस्वरूपम्[2]

आग्रयणेष्टिर्नाम यवानां वेणुयवानां श्यामाकानां व्रीहीणां वा नव्यानां भोजनात् पूर्वं तेन तेनान्नेनाहिताग्निना विधेया इष्टिः।[3] तत्र वसन्ते यवाग्रयणेष्टिः[4], ग्रीष्मे वेणुयवाग्रयणेष्टिः[5], वर्षासु शामाकाग्रयणेष्टिः,

---

1- परिसमुह्योपलिप्योल्लिख्य उद्धृत्याभ्युक्ष्याग्निमुपसमाधाय"(पारस्कर-गृह्यसूत्रे 1/1/2) इत्युक्ताः पन्च भूसंस्काराः "अग्न्यर्था इति कर्कोपाध्यायाः । तेन यत्रयत्राग्नेः स्थापनं तत्र तत्रैते कर्तव्याः, अतः श्रौताग्निस्थापनेऽपि कर्तव्याः" इति गदाधरः । वस्तुतस्तु अग्नि-विहरणे पन्चभूसंस्कारा अनावश्यकाः प्रतीयन्ते ।

2- "दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन, ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके, प्रागपि सोमेनैके" इतिह आश्वलायनः(4/1); तस्माद् दर्शेष्टेः पूर्णमासेष्ट्यैव विशेषटिप्पणीसाहाय्येन निरूपितत्वाद् प्रथमा विकृतीष्टिराग्रयणेष्टिरियं निरूप्यते ।

3- "अथाग्रयणेष्टस्तयानिष्ट्वा न वान्नं नाश्नाति" इति वैखानसश्रौतसूत्रे (8/1), "इष्टिश्च राज्ञः, सर्वेषां चैके" इति(1/2/9) आश्वलायन-वचनादन्येषामाग्रयणेष्ट्यनुकल्पाः, राज्ञस्तु नियमेनाग्रयणेष्टिरेवेति तन्मतं विज्ञायते, कात्यायनेन तु नायं विशेष उक्तः ।

4- "अपि वाऽक्रिया यवेषु" इति(1/2/9) आश्वालयानवचनाद् यवाग्रयणे-ष्टिवैकल्पिकी तन्मतेः कात्यायनेन त्वयमपि विशेषो नेवोक्तः ।

5- "सौमी श्यामाकेष्टिः, वेणुयवी च" इति शाङ्खायनः ।
- 3/12/1-2.

शरदि व्रीह्याग्रयणेष्टिः । तत्र श्यामाकाग्रयणेष्टिर्वानप्रस्थस्येति केचित्।[1] कात्यायनश्रौतसूत्रे तु एतत् स्फुटं नास्ति ।

तत्र "बह्वृचब्राह्मणे श्रवणाद् आग्रयणं पौर्णमास्याममावास्यायां वा भवति, शुक्लपक्षे पुण्ये वा नक्षत्रे भवति । यदि पूर्वाह्णे पर्वान्तस्तदा सद्यस्काल-पूर्णमासेष्टेः पूर्वमाग्रयणेष्टिः । ततः पौर्णमासेष्टिः । अमावास्येष्ट्यनन्तरं चाग्रयणेष्टिः । तदा च वचनादमावास्येष्टिरमावास्यामध्य एव समापनीया"[2] इति देवयाज्ञिकः ।

तत्र च यवाग्रयणेष्टौ[3] व्रीह्याग्रयणेष्टौ च प्रधानानि हवींषि एतानि भवन्ति । ऐन्द्राग्नो द्वादशकपालः पुरोडाशः, वैश्वदेवश्चरुः[4], द्यावापृथिवीय एककपालः पुरोडाश आज्यं वा[5]।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-"श्यामाको वनिनः स्मृतः" इति कर्मप्रदीपे( 3/9/7), का0श्रौ0सू0 4/7/17.

2- देवयाज्ञिकपद्धतौ ।

3- "वसन्ते यवैर्यजेत्, तेषां व्रीह्याग्रयणवत् कल्पः" इति वैखानसश्रौतसूत्रे 8/2.

4- "पयसि वा पुराणानां वा" इति कात्यायनवचनात्(4/6/4, 4/6/8) अयं चरुर्दुग्धे वा अप्सु वा पच्यते, नवानां पुराणानां वा यवानां व्रीहीणां वा यथायर्थ भवति ।

5- "तस्मात्माद्याज्ज्यस्यैव यजेत्" इति मा0श0प0ब्रा0 2/4/3/10; तस्मान् माध्यन्दिनीयानामज्येनैव द्यावापृथिवीययागो नैककपालेन पुरोडाशेनेति विज्ञायते ।

एवं चाग्रयणेष्टाविमे विशेषा भवन्ति --

अग्न्युद्धरणे यवाग्रयणेष्ट्यर्थं व्रीह्याग्रयणेष्टयर्थमित्यादि यथायर्थं प्रयोजनम्।

ब्रह्मवरणे यवाग्रयणेष्ट्या वयं यक्ष्यामहे तत्रेत्यादि यथायथं प्रयोज्यम् ।

पात्रासादने द्वादश कपालानि, एका चरुस्थाली, एकं कपालं पाणिसम्मितम्[1], द्वितीया दुग्धोपसर्जनी[2], प्रथमजो वत्सः[3], विंशतिकाष्ठ इध्मः, द्वे पात्र्यौ एकैव वा पात्री, शृतावदानानन्तरं मेक्षणम् ।

हविर्ग्रहणे इन्द्राग्निभ्यान्त्वा जुष्टम्, विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्, द्यावापृथिवीभ्यान्त्वा जुष्टमित्यादि यथायथं प्रयोज्यम्। हविः प्रोक्षणेऽपि तथैव ।

कणनिधानान्ते चरोस्तण्डुलान् पृथक्कृत्यालम्भ इदमिन्द्राग्न्योर् द्यावापृथिव्योश्च[4], इदं विश्वेषां देवानामिति ।

कपालोपधाने ऐन्द्राग्नस्य द्वादशकपालान्युपधाय तस्योत्तरतश्चरुस्थानं कृत्वा तस्योत्तरत एककपालस्य[5] प्रथमकपालधर्मेणोपधानम् ।"तपसा तप्यस्व" इत्यभ्यूहनम् ।

वैश्वदेवचरोः पयसि श्रपणे पयस उपसर्जनीमधिश्रित्योद्वास्य चरुस्थाल्यां निनयति । तत्र प्रतिग्रहे "सम्पय ओषधीभिः समोषधयो रसेन । स रेवतीर्ज्जगतीभिः पृच्यन्तां सम्मधुमन्न्मधुमतीभिः पृच्यताम्" इत्यूहः। उदकेन श्रपणे

---

1- आज्येनैव द्यावापृथिवीयागे एतदनावश्यकम् ।

2- अप्सु एव वैश्वदेवचरोः श्रपणे एतस्या आसादनं न भवति ।

3- "ये प्राचीनमेकाष्टकाया वत्साजायन्ते तेषां प्रमजं ददाति" इति श्रौतपदार्थनिर्वचने - पृ० 75.

4- द्यावापृथिवीयपुरोडाशयागपक्षे, एवम्, द्यावापृथिवीयाज्ययागपक्षे तु द्यावापृथिवीयहविर्ग्रहणादिकं किमपि न भवत्येव ।

5- एतदेककपालोपधानमपि द्यावापृथिवीयपुरोडाशयागपक्षे एव ।

प्रकृतिवत् ।

चरूसम्पादने पेषणम्, संयवनम्, पात्र्यां संवपनम्, उपधानम्, भृगूणा-मित्यादिना तापनम्, प्रथनम्, अद्भिरभिमर्शनम्, ज्वालयोपरिश्रपणम्, अभि-वासनम्, उद्धृत्य पात्र्यामवधानमिति पदार्था न भवन्ति, अन्यत्सर्वं पुरोडाश-सम्पादनवद् भवति।

पिष्टानामीक्षणं कृत्वा चरोस्तण्डुलानामीक्षणम् । पिष्टानि पात्र्यामोप्य सपवित्रायां चरूस्थाल्यां तण्डुलनामावापः । ततः त्रिः प्रक्षालनम् तत उपसर्जन्यानयनम्, पिष्टेषूपसर्जनीर्निनीय तण्डुलेषु निनयति। पिष्टसंयवनानन्तरं विभज्य पुरोडाशार्थपिण्डयोः[1] आलम्भः। पुरोडाशयोर्मध्ये चरोः श्रपणम् ।

प्राणादाने इन्द्राग्नी गच्छ, विश्वान् देवानन्गाच्छ, द्यावापृथिव्यौ गच्छेति यथायथं प्रयोगः । द्यावापृथिवीयस्य प्राणदानं कृत्वा लौकिकेनाज्येन तस्यान्तावच्छादनम्।[2]

अत्र सप्तदश सामिधेन्यो भवन्ति । तस्मादवबाधने सप्तदशेन वृज्रेणेति प्रयोगः ।

उत्तमे प्रयाजे "इदमग्नये सोमायेन्द्राग्गिनभ्यावँ विश्वश्वेभ्यो देवेभ्योद्द्यावापृथिवीभ्यान्देवोभ्य आज्यपेभ्यः" इति त्याग इति देवयाज्ञिकः ।

आज्यभागयागानन्तरं प्रधानयागे "इन्द्राग्निभ्यामनुब्रूऽहि"

---

1- द्यावापृथिवीयपुरोडाशयागपक्षे "इदमिन्द्राग्न्योरिदन् द्यावापृथिव्योः" इति विभक्त्योरालम्भः, आज्ययागपक्षे तु न भवत्येवायमालम्भस्तत्पूर्वो विभागश्च ।

2- का०श्रौ०सू०- 4/6/6.

"इन्द्राग्नी यज"(उपांशु) विश्वेभ्यो देवेभ्यः (उच्चैः) अनुब्रूहि", "उपांशु(विश्वान् देवान्(उच्चैः) यज", "उपांशु) द्यावापृथिवीभ्याम् (उच्चैः) अनुब्रूहि, "(उपांशु) द्यावापृथिव्यौ(उच्चैः) यज" इति प्रयोगः । चरोर्मेक्षणेनावदानम् । द्यावापृथिवीयपुरोडाशयागपक्षे सकृदुपस्तीर्य सर्वमपि एककपालं पुरोडाशमखण्डमेव जुह्वां निधायोपरिष्टाद द्विरभिघार्य हवनम्*[1] द्यावापृथिवीयाज्ययागपक्षे उपांशुयाजवद् ध्रुवायाश्चतुरवदाय द्यावापृथिवीय-यागः कर्तव्यः । ततः स्विष्टकृदादि।

दक्षिणाभूर्ग्गसीत्यस्य स्थाने प्रथमजो गौरस्स्यूर्जमित्यादिकः प्रयोगः । "अस्या इष्टेः समृद्ध्यर्थं प्रथमजं गां दक्षिणां ब्रह्मणे होत्रेऽध्वर्यवेऽग्नीधे च सम्प्रददे ओन्तत् तन्न मम, ब्राह्मणा अयं वः प्रथमजो गौः प्रतिगृह्णीतः"। इति यजमानः, "द्यौस्त्त्वा ददातु" इत्यादिना मन्त्रेण ऋत्विजः प्रतिगृह्णन्ति इति च देवयाज्ञिकः ।

स्रुग्व्यूहने "इन्द्राग्नयोर्व्विश्वेषान्देवानान्द्यावापृथिव्व्योरु-ज्जितिम्" इति "इन्द्राग्नी विश्वे देवा द्यावापृथिव्व्यौ तमपनुदन्तु" इति यथायथं प्रयोगः ।

प्रस्तरत्यागे "इदमग्नये सोमायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो द्यावपृथिवीभ्यान्देवेभ्यः" इत्यादिकः प्रयोगः ।

कर्मापवर्गान्तमन्यत् सर्वं प्रकृतिवत् ।

---

1- एककपालात् पुरोडाशात् " प्राशित्रेडाव्यतिरिक्तं किमपि न भवति । कर्ममते चतुर्धाकरणवर्जं सर्वं भवत्येव" इति देवयाज्ञिकपद्धती ।

अथ चातुर्मास्यनिरूपणम्[1]

चतुर्षु चतुर्षु मासेषु प्रयोज्याः[2] श्रौतयज्ञविशेषाश्चातुर्मास्यानि। "अक्षय्यं ह वै सुकृतं चातुर्मास्यैर्भवति"[3] इति वैखानसश्रौतसूत्रे पठ्यते । एवमेव

---

1- यद्यपि "दर्शपूर्णमासभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन" इत्याश्वलायन-वचने(1/4/1) चातुर्मास्येभ्यः पूर्वं पशुबन्धस्यावसरः प्रतिपादितः, वसन्तेऽग्नीनादधातो ब्राह्मणस्य ग्रीष्मेऽग्नीनादधतः क्षत्रियस्य च चातुर्मास्यारम्भात् प्रागेव निरूढपशुबन्धस्य कालः समागच्छति च, तथापि "त एतान्न्यज्ञक्रतूँस्तेनिरेऽग्निहोत्रन्दर्शपूर्णमासौ चातुर्म्मास्यानि पशुबन्धं सौम्म्यमद्ध्वरम्" इति श्रुतौ (मा०श०प०ब्रा० 10/4/3/4) पशुबन्धात् प्राक् चातुर्मास्यानां श्रुतत्वात्, कात्यायनेन पशुबन्धात् प्राक् चातुर्मास्यानां निरूपितत्वात्, प्रयोगक्रमानुसारमेव अग्न्याधानाग्निहोत्रदर्शपूर्णमासाग्रयणादीनि कर्माणि निबध्नता विखनसा निरूढबन्धात् प्रागेव चातुर्मास्यानां निबद्धत्वात्, वसिष्ठधर्मसूत्रे(1/41-43) बौधायनधर्मसूत्रे च पशुबन्धात् प्राक् चातुर्मास्यानामवसरस्य प्रतीयमानत्वात्, आश्वलायनेनापि "ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके" इत्युक्त्वा(1/4/1) पशुबन्धात् प्रागपि चातुर्मास्यप्रयोगस्यानुमतत्वात्, चातुर्मास्यानि सकृत् प्रयुज्योत्स्रष्टुमिच्छुना शुनासीरीयेणेष्ट्वा सोमेन पशुना इष्ट्या वाऽपि यजनीयत्वाच्च(का०श्रौ०सू० 5/11/5) अस्माभिः खलु स्वश्रुतिसूत्रोक्तक्रमं बहु मन्वानैर्निरूढपशुबन्धात् प्राक् चातुर्मास्यानि निरूप्यन्ते ।

2- "चातुर्षचतुर्षु मासेषु यो यजते स चातुर्मास्य याजी, वसन्ते वैश्वदेवेन वर्षासु वरुणप्रघासैः शरदि साकमेधैर्यो यजते स ऋतुयाजी"
- इति वै०श्रौ०सू० 8/8.

3- 8/3, 5/1.

प्रायेण सत्याषाढश्रौतसूत्रेऽपि।[1] तत्र चातुर्मास्यानि पर्वचतुष्टयात्मकानि । पर्वसु च प्रथमं वैश्वदेवं पर्व । तच्च फाल्गुन्यां पौर्णमास्यां प्रयुज्यते।[2] तत आषाढ्यां पौर्णमास्यां[3] वरुणप्रघासाख्यं द्वितीयं पर्व । ततः कार्तिक्यां पौर्णमास्यां साकमेधाख्यं तृतीयं पर्व द्व्यहसम्पाद्यम्।[4] ततः शुनासीरीयाख्यं चतुर्थं पर्व तु सकृच्चातुर्मास्यानि कृत्वोत्स्रष्टुमिच्छोः समनन्तरमेव सोमेन पशुनेष्ट्या वा यक्ष्यमाणस्य फाल्गुनशुक्लप्रतिपदि भवति[5]; सोमेन पशुनेष्ट्या वाप्ययक्ष्यमाणस्य[6] चातुर्मास्यान्येव प्रतिवर्षमावर्तयितुमिच्छोस्तु फाल्गुन्युपवसथे भवति।[7] शाखान्तरे तु सप्ताहसाध्यानि पन्चाहसाध्यानि एकाहसाध्यानि च चातुर्मास्यानि प्रोक्तानीति श्रौतोल्लासकारः।[8] "सांवत्सरिकचातुर्मास्यकरणाशक्तौ सत्यां यदा सर्वाणि पर्वाणि उत्कृष्य शुनासीरीयकाले फाल्गुन्यां चैत्र्यां वा वसन्ते[9] वा तदा पौर्णमास्यां कार्याणि"[10] इति देवयाज्ञिकपद्धतौ च प्रोक्तम् । देवयाज्ञिकेन शाखान्तराश्रयेण पन्चाहिकानि एकाहिकानि च

---

1- 8/3/ 5/1.

3-6 का०श्रौ० सू० 5/1/1, 5/3/1, 5/6/1, 5/11/16.

7- "एवं प्रतिवर्षं कर्तव्यम् । आवृत्तिपक्षे इष्टिपशुसोमानामभावः" इति देवयाज्ञिकपद्धतौ ऐष्टिकशुनासीरीयप्रयोगान्ते ।

8- का०श्रौ०सू० 5/11/18.

9- "तत्र ऐष्टिकेषु संवत्सरानुष्ठानपक्षेण सह पन्चाहानुष्ठानपक्ष एकदिनानुष्ठानपक्षश्च बौधायनादिभिक्तः" इति यज्ञतत्त्वप्रकाशे - पृ० 52.

10- "अक्षय्यं ह वै सुकृतं चातुर्मास्यैर्भवति । तानि यक्ष्यमाणो वसन्ते प्राचीनप्रवणे वैश्वदेवेन यजते। फाल्गुन्यां चैत्र्यां पौर्णमास्यां वोदगयन आपूर्यमाणपक्षस्य पुण्याहे वा पंयुन्जीत" इति वै०श्रौ०सू० 8/2.

11- 201 पृ०(विद्याधरसंस्कृते संस्करणे), 195-200 पृ०

चातुर्मास्यानि प्रदर्शितानि च[1]। एतानि च चातुर्मास्यानि ऐष्टिकानि पाशुकानि सौमिकानि चेति त्रिविधानि श्रौतसूत्रेषु प्रोक्तानि[2]। कात्यायनेनापि ऐष्टिकानि[3] पाशुकानि[4] चेति द्विविधान्येव चातुर्मास्य प्रकरणे प्रतिपादितानि सौमिकानि चातुर्मास्यानि तु एकाहाध्याये निरूपितानि[5]।

---

1- विद्याधरसंस्कृते संस्करणे, 195-200 पृ0.

2- यज्ञतत्त्वप्रकाशे 52-53.

3- का0श्रौ0सू0 5/1/1-5/11/18, 5/11/19-30, 22/7/1/20.

4- तत्रैव.

5- तत्रैव.

पशुयज्ञविमर्शः

- - - - - - - - - - - - - - - - - - - - - - - - - -

अथ निरूढपशुबन्धनिरूपणम्[1]

निरूढपशुबन्धेन यक्ष्यमाणः प्रावृषि पौर्णमास्याम्[2] सूर्यायनावृत्तिसन्निहितायां पौर्णमास्यां[3] वाऽनुदित एव प्रातरग्निहोत्रं समाप्याऽनुदित एव निरूढपशुबन्धकर्म प्रारभते।[4] तत्र प्रथमम् "अमुकगोत्रामुकशर्मन् हविर्यज्ञविधेन[5]

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- निरूढपशुबन्धो नाम स्वतन्त्रतया निर्व्यूढः पशुयागो बोध्यः । नित्यः पशुबन्धो निरूढ पशुबन्ध इति सत्याषाढश्रौतसूत्रव्याख्याने (4/1, 399 पृ0) महादेवः ।

2- "पश्विज्या संवत्सरे संवत्सरे प्रावृषि" इति कात्यायनः( 6/1/1)

3- "आवृत्तिमुखयोर्वा" इति कात्यायनः(6/1/2), "ऐन्द्राग्नेन पशुना षाण्मास्ये षाण्मास्ये यजत आवृत्तिमुख आवृत्तिमुखे संवत्सरे संवत्सरे वा" इति सत्याषाढः (4/1), "ऐन्द्राग्नेन सौर्येण प्राजापत्येन वा निरूढपशुबन्धेन प्रतिसंवत्सरं प्रत्ययनं प्रतिषण्मासं वा यक्ष्यमाणः पौर्णमास्याममावास्यायामापूर्यमाणपक्षे पुण्ये नक्षत्रे वा यजेत" इति विखनाः (10/1)

4- निरूढपशुबन्धस्याग्निषोमीयप्रकृतिकत्वादाग्नीषोमीयारम्भे चान्वारम्भणीयायाः प्राप्तेरभावान्निरूढपशुबन्धारम्भेऽन्वारम्भणीया न भवतीति कर्को मन्यते; शाखान्तरे (सत्याषाढश्रौतसूत्रे 4/1; वैखानसश्रौतसूत्रे 10/1, अन्यत्र च) निरूढपशुबन्धारम्भे स्फुटमन्वारम्भणीयाया विहितत्वादन्वारम्भणीया विधेयैवेति देवयाज्ञिको मन्यते ।

5- द्विविधो हि निरूढपशुबन्धः, हविर्यज्ञविधः सवविधश्च।

- का0श्रौ0सू0 6/2/4.

ऐन्द्राग्नेन[1] पशुदक्षिणेन[2] निरूढपशुबन्धेनाहं यक्ष्ये तत्र त्वं मे ब्रह्मा भव" इति ब्रह्माणं वृणीते । ततस्तथैव होतारमध्वर्युं मैत्रावरुणं प्रतिप्रस्थातारम् अग्नीधं च वृणीते । ततस्तान् यथासम्भवमर्चयति।

ततोऽग्निसमारोहणं[3] कृत्वारणी आदाय प्राचीनप्रवणेऽवकाशवति गत्वा विहारं साधयति। ततोऽध्वर्युर्गार्हपत्यखरे पन्च भूसंस्कारान् कृत्वा अग्निं मथित्त्वा गार्हपत्यखरे स्थापयति। ततो "निरूढपश्वर्थमग्न्युद्धरणं करिष्यामि" इति सङ्कल्प्य आहवनीयदक्षिणाग्न्योरुद्धरणं करोति ।

ततो यजमानो यजनीयदेवताहविरादिकीर्तनपूर्वकं यथाविधि अग्न्यन्वाधानं कुरुते ।

---

1- पक्षान्तरे सौर्येणेति प्राजापत्येनेति वा प्रयोगः - का०श्रौ०सू० 6/3:26.

2- पक्षान्तरे धेनुदक्षिणेनेति वा वरदक्षिणेनेति वा प्रयोगः ।

- तत्रैव, 6/7/29.

3- "अत्रोद्वत्यानस्याविधानाद् गृहेष्वेव पशुबन्धः । गृहेष्विति कात्यायनः । दर्शपूर्णमासप्रकृतित्वाच्च गृहेष्वेवान्यत्र पाशुकं विहारं कल्पयित्वा, कृतस्य वाग्रे सति सम्भवे(पशुबन्धः)" इति सत्याषाढश्रौतसूत्रव्याख्याने महादेवः (4/1), तथापि श्रौतपदार्थनिर्वचने उद्वसानस्योक्तत्वात्, कर्केणाऽपि "एवं च कृत्वा समारोपोऽप्यत्र भवत्येव" इत्युक्तम् (का०श्रौ०सू० 6/2/3) इति चास्माभिः समारोहणं प्रतिपादितम्; "गृहेषु" इति सूत्रस्य(का०श्रौ० सू० 6/1/3) व्याख्यानेऽपि कर्केण समारोपणमुक्तम् । समारोपणाभावे गृहपरिसरस्थपाशुकविहारे सर्व गार्हपत्य कर्परे समुद्धृत्य नीत्वा स नवीनगार्हपत्यखरे स्थापनीयः । ततो विहरणम् ।

ततश्चतुर्णामासनानामुपकल्पनम्, ब्रह्मवरणम्, व्रतग्रहणं[1] च।

ततो यूपाहुत्यर्थमाज्यसंस्कारः। तत्राज्यं निरूप्य गार्हपत्येऽधिश्रयति। ततो दर्भैः स्रुवं सम्मृज्यं जुहूं सम्माविष्टं। अथाज्यमुद्वासयति। सग्राभ्यां दर्भाभ्यामाज्यमुत्पुनाति। आज्यमवेक्षते। जुह्वां स्रुवेण चतुर्वारमाज्यं गृहीत्वा[2] समिधमादायाहवनीयं प्रति गत्वा समीप उपविश्याहवनीयं परिस्तीर्योत्थाय प्रागग्रामुदगग्रां वा समिधमाधायोपविश्य "उरु विष्णो"[3] इत्यादिना मन्त्रेण जुहोति[4]।

ततस्तस्य यूप्यस्य वृक्षस्य दक्षिणतो ब्रह्मयजमानावुपविशतः। अध्वर्युश्च यूप्य वृक्षस्य पश्चिमतः प्राङ्मुख उपविश्य यूपमभिमृश्य "अत्यन्न्या-गाँऽअगाम्"[5] इत्यादिकं मन्त्रं जपति[6]। ततो यूप्यवृक्षस्य छेदनीयं देशं[7] साज्येन स्रुवेण "विष्णवेत्त्वा (उपस्पृशामि)[8]" इति मन्त्रेणोपस्पृशति।[9] ततः "ओषधेत्त्राय

---

1- "व्रतोपायन-प्रणीताऽऽज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान् कुर्याद हविर्यज्ञविधे" इति का०श्रौ०सू० 6/2/4.

2- "स्रुवेण वा होमः (अस्मिन् पक्षे जुह्वा सम्मार्जनमप्यत्र नैव क्रियते) (का०श्रौ०सू०- 6/1/4)

3- मा०वा०शु०य०वे०म०सं०- 5/41। (का०श्रौ०सू० 6/1/4)

4- का०श्रौ०सू०- 4/10/5.

5- मा०वा०शु०य०वे०म०सं०- 5/42। जुषन्तामित्यन्तो मन्त्रः।

6- प्राङ्मुखस्तिष्ठन्नेतेनैव मन्त्रेण यूप्यवृक्षमभिमन्त्रयते वा (का०श्रौ०सू० 6/1/7)

7- वृक्षस्य यत्र छेदनेन स्थाणुरथाक्षस्योपस्तम्भको न भवति स देशश्छेदनीयदेशो बोध्यः (का०श्रौ०सू० 6/1/14)

8- मा०वा०शु०य०वे०म०सं० - 5/42.

9- उपस्पर्शनेन परिरतश्चिह्नं कर्तव्यमिति देवयाज्ञिकपद्धतौ।

स्स्व"[1] इति मन्त्रेण कुशतरुणमन्तर्धाय "स्वधिते मैन हि सीः"[2] इति मन्त्रेणाज्याङ्किते प्रदेशे परशुना प्रहारं करोति । प्रथमं यूपच्छेदनशकलं सुगुप्तं स्थापयति। ततश्छेदनाय प्रहारान् करोति। छिन्नप्रायं यूप्यवृक्षं हस्तेन प्रेर्य प्राच्यामुदीच्यां वा पातयति। पतन्तं च यूपं "द्याम्मालेखीः"[3] इत्यादिनां मन्त्रेणाभिमन्त्रयते । ततस्तूष्णीं पर्णशाखादिपातनेन यूपं शोधयति।

ततोऽध्वर्युः स्थाणुं परिस्तीर्य जुह्वां सकृद्गृहीतमाज्यं गृहीत्वा "अतस्त्वम्"[4] इत्यादिना मन्त्रेण स्थाणौ जुहोति ।

ततो मूलाद् यूपं त्र्यरत्निं चतुररत्निं वा परिमायावशिष्टमग्रं छिनत्ति । पुनर्नैव छिनत्ति ।

ततस्तक्षा मूले पन्चममशं परित्यज्य तक्षणेन यूपमष्टाश्रिं करोति । तत्र तक्षणं मूलतः प्रभृति करोति। तदा पतितं प्रथमं प्रादेशमात्रं शकलं चाध्वर्युः सुगुप्तं स्थापयति। तक्षा च यूपस्याग्रं गोपुच्छवदानुपूर्व्येणाग्रतोऽणीयांसं[5] करोति। ततोऽवशिष्टाद् यूपाग्रभागात् पृथमात्रमष्टकोणं[6] मध्यसंगृहीतमूर्ध्वखातं[7] चषालं करोति।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा०वा०शु०य०वे०म०सं० - 5/42.

2- तत्रैव.

3-4- तत्रैव 5/43(सौभगायेत्यन्तो मन्त्रः) रुरुहेमेत्यन्तश्च मन्त्रः)

5- वैखानसश्रौतसूत्रे- 10/2.

6- "पृथशब्देनासङ्कुचिताङ्गुलिः पाणिरामणिबन्धादुच्यते" इति कर्कः (का०श्रौ०सू० - 6/1/27).

7- एतत् खातं तथा महत् कर्तव्यं यथा यूपे प्रतिमोचने यूपाग्रचूडा चषालच्छिद्राद् द्यङ्गुलं त्र्यङ्गुलं वा निष्क्रान्ता भवेत् (का०श्रौ०सू० 6/1/28).

ततो यूपं यागदेशसमीपे आनीय सुगुप्तं निदधाति ।

ततोऽध्वर्युर्विहारं प्रविश्य पुनराज्यं पूर्ववत् संस्कृत्य पञ्चगृहीतं गृहीत्वा परिस्तीर्य समिधमाधायाहवनीये "द्यौष्पृष्ठम्"[1] इत्यादिकं मन्त्रं मनसा पठित्वा जुहोति ।

ततोऽध्वर्योः "यजमान वाचय् यच्छ" इति प्रैषः, ततः श्रपणस्य पश्चिमत उत्तरतो वा अग्निहोत्रहवणी, स्फ्यः, पवित्रार्थौ कुशौ, पवित्रच्छेदनकुशाः, वेदितृणम्, द्वात्रिंशदङ्गुला वारणी शम्या चेति पात्राणामासादनम्, पवित्रच्छेदनम्, प्रोक्षणीनां संस्करणम्, स्रुग्वेदितृणशम्यानां प्रोक्षणं च। ततो गार्हपत्यस्य पूर्वतः प्रोक्षणीनां निधानम्।

ततः प्रथममाहवनीयस्य पूर्वतो रथमात्रया वेद्या मानं वरूणप्रघासवत्[2] क्रियते। ततो ब्रह्मयजमानौ तस्या वेद्या दक्षिणतो बुर्हिर्वेदि उपविशतः।ततो वेदिपरिसमूहनम्, उत्करकरणम्, सतृणवज्रादानादिकं सतृणपुरीषोत्करप्रक्षेपान्तं कर्म कृत्वा वेदिपूर्वपरिग्रहग्रहणम्, वेद्यां त्रिरूल्लेखनम्, हरणप्रैषः, हरणम्, सम्मर्शनम्।

ततश्चात्वालमानादिकमुत्तरवेदिच्छादनान्तं कर्म वरूणप्रघासवदेव।[3]

---

1- का०श्रौ०सू० - 6/1/33.

2- वरूणप्रघासे यथाऽध्वर्युवेदिर्भवति तथैवात्र वेदिर्भवति, न तु वरूणप्रघासवत् प्रतिप्रस्थातृवेदिः क्रियते ।

3- वेदिच्छादनस्य विषये "सद्यः कालत्वाद् विकृतीनां वसत्यर्थस्यात्राप्राप्तिः छादनं तु संस्कारत्वाद् भवत्येव" इति कर्क (का०श्रौ०सू० 5/4/1)

ततो यथाकालं विहृतेष्वेवाग्निषु सायमग्निहोत्रहोमः।[1]

उत्तरेद्युश्च विहृतेष्वेवाग्निषु यथाकालं प्रातरग्निहोत्रहोमः ।
ततोऽष्टाविंशतिकाष्ठकस्येध्मस्य त्रियूनबद्धस्याहवनीयेऽधिश्रयणम् । उपयमनीनां देवदारुपरिधीनां चोपकल्पनम् । तत । आज्यसंस्कारो जुह्वां पन्चगृहीतग्रहणं च ।

ततोऽध्वर्युः पन्चगृहीतमाज्यं लौकिकप्रोक्षणीः सोपयमनीकपरि निहितं प्रदीप्तमिध्मं चोद्यम्य "अग्नये प्रह्रियमाणायाऽनुब्रूऽहि" इति होतारम्, "एकस्फ्ययानूदेहि" इति प्रतिप्रस्थातारं प्रेष्यति ।

होता च वरुणप्रघासवदिग्नप्रणयनीया अन्वाह ।

होत्रा "प्रदेवन्देव्या" इत्यस्यामृचि त्रिरुक्तायां सत्यामध्वर्युर्वेदि-रुत्तरमार्गेणाग्निमुत्तरवेदिं प्रति हरति । ततः प्रतिप्रस्थाता चाहवनीयाद्वा-दारभ्य वेदिमध्ये उत्तरवेदिस्थण्डिलं यावत् स्फ्येन लेखां करोति ।

ततोऽध्वर्युरग्निमन्यस्मै प्रदायोत्तरवेदिप्रोक्षणादिकमुपयमनीनिवप-नान्तं कर्म करोति ।

ततो द्वयोरासनयोः करणम् । प्रणीताप्रणयनम् । मध्यमवर्ज परिस्तरणम्

पात्रासादने- स्फ्यस्याग्निहोत्रहवण्या पवित्राणां च संस्कृतानामेव सत्त्वादन्यान्यासाद्यन्ते । तत्र च - शम्या, दृषदुपलम्, आज्यस्थाली आज्यं च,

---

1- शाखान्तरसंवादाद् वरुणप्रघास्य द्वयहसम्पाद्यत्वं देवन्याज्ञिकेनोक्तम्; तथैव निरूढपशुबन्धस्याऽपि द्वयहसम्पाद्यत्वे सति उत्तरवेदिश्छन्ना रात्रिं। वति। अस्मिन् पक्षे सायम्प्रातरग्निहोत्रहोमावेवं कार्यौ ।

वेदकुशा दक्षिणाद्रव्यं च अभ्रिः, इध्मचतुष्टयम्[1] बर्हिश्चतुष्टयं[2] च, स्रुवः, स्रुक्पञ्चकं[3] प्राशित्रहरणे पान्नेजनीसप्तकं[4] च, यूपाष्टकम्[5] उखापञ्चकं[6] च, मन्थनचतुष्टयम्[7] इडापात्री च, षडवत्तधानी अन्तर्धानकटश्च, पूर्णपात्रं कर्मापवर्गसमिच्चेति पात्राणि ज्ञेयानि।

ततः पूर्वसंस्कृताभिः प्रोक्षणीभिः पात्रप्रोक्षणम्, असञ्चरे प्रोक्षणीनां निधानम्, कुक्कुटाहननम्; आज्यनिर्वापवेदबन्धौ (यजमानकर्तृकौ), आज्याधिश्रयणमग्नीत्कर्तृकम्, यजमानकर्तृकं पर्यग्निकरणम्, उदकोपस्पर्शनं च।

ततो वेदिखननम् । उत्तरपरिग्रहः। दक्षिणतः पुरीषोद्वहनम् । अनुमार्जनम् ।

---

1- विंशतिकाष्ठकइध्मः, विशाखाऽविशाखा चर्गति द्वे अरत्निमात्र्यौ कार्ष्मर्यवपाश्रपण्यौ, वारणं हृदयशूलम्, कार्ष्मर्यमयास्त्रयः परिधयश्चेति इध्मचतुष्टयम् ।

2- बर्हिः, काशमयः प्रस्तरः, काशमूलमय्यौ विधृती, प्लक्षशाखाश्चेति बर्हिश्चतुष्टयम् ।

3- जुहूद्वयम्, उपभृद्द्वयम् ध्रुवाचेति ।

4- कलशः, आपः, हिरण्यशकलषट्कम, पृषदाज्यार्थ दधि, उपाकरणतृणम्, मैत्रावरुणदण्डः, मैत्रावरुणदण्डवेष्टनम् इति पान्नेजनीसप्तकम् ।

5- यूपः, चषालः, यूपच्छेदनप्रथमशकलम्, यूपवेष्टनम्, आप, यवाः, कुशमुष्टिः, यूपाञ्जनार्थमाज्यं चेति यूपाष्टकम् ।

6- उखा, असिः, स्वरुः, द्विव्यामा द्विगुणा रशना, त्रिव्यामा त्रिगुणा-रशना चेति उखापञ्चकम् ।

7- अधरारणिः, प्रमन्थः, शकलम्, कुशतरुणद्वयं चेति मन्थनचतुष्टयम् ।

ततोऽध्वर्युकर्तृकं स्फ्योद्यमनम्, प्रैषः, स्फ्यस्योदीच्यां प्रहारः, पाण्योः प्रक्षालनम्। अपरेण प्रणीताः स्फ्यस्यासादनम् ।

ततोऽग्नीद् वेदिमध्ये प्रोक्षणीरासाद्य प्रणीतानां पश्चिमतः प्रागग्रमिध्ममासाद्यतस्योत्तरतो बर्हिः प्रागग्रमेवासादयति ।

ततः पात्रसम्मार्गः । तत्र पूर्वं स्रुवस्य सम्मार्गः, ततः स्रुवधर्मैरसैः सम्मार्गः, ततो जुह्वाः, ततो वसाहोमहवण्यास्तूष्णीम्, तत उपभृतः, ततः पृषदाज्योपभृत उपभृद्वत्, ततो ध्रुवायाः, ततस्तूष्णीं प्राशित्रहरणयोः। सम्मार्जनानां पशुपुरोडाशार्थपात्र्यादिसम्मार्गार्थं रक्षणं नापासनम् ।

ततः पत्नीसन्नहनम्, आज्योद्वासनम्, पत्न्या आज्यावेक्षणम्, वेदिमध्ये आज्यस्यासादनम्, अध्वर्युकर्तृकमाज्यस्योत्पवनमवेक्षणं च । ततो वेद्यां पात्रान्तरे दध्यासिच्य तत्र यावदर्थं स्थालीस्थस्याज्यस्य निनयनम्, ततः पृषदाज्यसंयवनम् ।

ततो जुह्वामुपभृति च चतुर्गृहीतं गृहीत्वा पृषदाज्योपभृति पन्चगृहीतं पृषदाज्यं गृह्णाति । ततो ध्रुवायां चतुर्गृहीतमाज्यं गृह्णाति ।

तत इध्मं विस्रंस्थान्यत् परिध्यादित्रिकं पराकृत्य केवलस्येध्मस्य प्रोक्षणम् । बर्हिः प्रतिगृह्यवेद्यामासाद्य तस्य प्रोक्षणम्, मलावसकैः । बर्हिर्विस्रसनम् प्रस्तरग्रहणम् ब्रह्मणे समर्पणं च, सन्नहनविस्रंसनम्, वेदिदक्षिणश्रोणौ निधानम्, सन्नहनावच्छादनैरवच्छादनम्, त्रिवृत् पन्चवृत् सप्तवृद् वा वेदिस्तरणम् । ततो बर्हिषि दक्षिणभागे प्लक्षशाखास्तरणम्

ततः समित्प्रस्तरादानम्, आहवनीयकल्पनम्, उल्मुकोद्वहनम्, कार्ष्मर्यपरिधिपरिधानादि। ततो विधृत्योः स्तरणं प्रस्तरस्य स्तरणं च । ततोऽभिन्यासः। ततस्तूष्णीमेव पूर्वमसैरासादनम्, ततो जुह्वाः, ततस्तूष्णीमेव

वसाहोमहवन्याः। तत उपभृतः, ततः पृषदाज्योपभृतोऽपि घृताच्यस्युप-मृन्नाम्नेत्यादिनैव मन्त्रेणासादनम्। ततो ध्रुवायाः। तत आज्यस्थाल्याः। ततः पृषदाज्यस्थाल्याः। तत आज्यस्थालीस्थमाज्यमालभ्यासादनक्रमेण जुह्वादिस्थं हविरालभते। तत आत्मालम्भोद्कालम्भौ।

ततोऽध्वर्युर्वेदेः पूर्वभागे गत्वा "देवस्यत्त्वा"[1] इत्यादिना मन्त्रेणाभ्रिमादाय "इदमह रक्षसाङ्ग्रीवा अपि कृन्तामि"[2] इति मन्त्रेणाहवनीयस्य पुरस्ताद् वेदिमध्येऽर्धं बहिर्वेदि चार्धं यूपावटं परिलिखति। ततो यूपपञ्चमांशनिम्नं यूपावटं खनति। प्राचः पांसूनुद्वपति। तस्य पूर्वतो यूपं प्राञ्चं निदधाति। तदुपरि कुशमुष्टिं प्रथमशकलं च, अग्रमुत्तरेण चषालम्। ततोऽप्सु "यवोसि"[3] इत्यादिना मन्त्रेण यवानोप्य यूपस्याग्रं "दिवे त्त्वा प्प्रोक्षामि"[4] इति, मध्यम् "अन्तरिक्षाय त्त्वा प्प्रोक्षामि"[5] इति, मूलम्, "पृथिव्व्यैत्त्वा प्प्रोक्षामि"[6] इति प्रोक्षति। ततः प्रोक्षणीशेषं सर्व यूपावटे "शुन्धन्तांल्लोकाः पितृषदनाः"[7] इति मन्त्रेण निनयति। उदकमालभ्य "पितृषदनमसि"[8] इति मन्त्रेण प्राञ्च्युदञ्चि च बर्हींषि यूपावटे प्रास्यति। तत उदकमालभ्य प्रथमशकलं च "अग्रेणीरसि स्स्वावेश उन्नेतॄणामेतस्स्य वित्तादधित्वा स्त्थास्स्यति"[9] इति मन्त्रेण यूपावटे प्राक्षिपति। तत आज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा यूपावटं परिस्तीर्य यूपावटमध्ये प्रजापतिमुद्दिश्य तूष्णीमेव जुहोति। ततः पुरस्तात् परिक्रम्याध्वर्युर्यजमानो वा प्राङ्पविश्य "देवस्त्त्वा"[10] इत्यादि मन्त्रेण यूपं लौकिकेनाज्येनानक्ति[11]।

---

1-9 - मा०वा०शु०य०वे०म०सं०- 6/1, 6/2.

10- मा०वा०शु०य०वे० म० सं० 6/2.

11- का०श्रौ०सू० 2/8/8, 6/2/21, 6/3/2.

यूपमन्जन्नध्वर्युर्यजमानो वा "यूपायाज्ज्यमानायानुब्रूउहि" इति होतारमनुवाचयति।

होता च "अन्जन्तित्त्वाम्"[1] इत्यादिकम् पठति।

यूपमन्जन्नध्वर्युर्यजमानो वोपरदेशवर्ज यूपं सर्वतोऽनक्ति । ततश्चषालमपि "देवस्त्त्वा"[2] इत्यादिनैवान्तर्बहिश्चानक्ति। ततश्चकालं "सुपिप्पलाभ्यत्त्वौषधीभ्य: (प्रतिमुन्चामि)"[3] इति मन्त्रेण यूपाग्रे प्रतिमुन्चति । ततो यूपस्य सोपरमग्निष्ठादेशं "देवस्त्त्वा"[4] इत्यादिनैव मन्त्रेण पुनरनक्ति। ततोऽध्वर्युर्यूपस्य परिव्ययणदेशं समन्तं परिमृश्यापरिव्ययणात् परिव्यणदेशं न मुन्चति । ततोऽध्वर्यु: "यूपायोच्छ्रीयमाणायानुब्रूउहि" इति होतारमनुवाचयती।

होता च - "यद्दध्र्वस्त्त्ष्ठाद् द्रविणेह"[5] इत्यादिकं पठति।

अध्वर्युश्च "द्यामग्रेण"[6] इत्यादिना मन्त्रेण यूपमूर्ध्वं करोति । पुनरक्तमग्निष्ठादेशमाहवनीयाभिमुखं कृत्वा "या ते धमान्न्युशम्मसि"[7] इत्यादिना मन्त्रेण यूपमूलं यूपावटे मिनोति। तत: सव्येन हस्तेन यूपं गृहीत्वा दक्षिणेनावटं पांसुभि: "ब्रह्म्मवनित्त्वा]"[8] इत्यादिनामन्त्रेण पूरयति। तत: "ब्रह्म्म दृ ह"[9]

---

1- शा०श्रौ०सं० - 3/8/1.

2- 3- मा०वा०शु०य०वे०म०सं०- 6/2.

4- शा०श्रौ०म०सं० 3/8/3, 2; 1/36/13-14; 3/8/5.

5-9- मा०वा०शु०य०वे०म०सं०- 6/2, 3.

इत्यादिना मन्त्रेण मैत्रावरुणदण्डेनावहं सर्वतस्त्रिः पर्यूषति । ततः समम्भूमि कृत्वाद्भिरभ्यसिन्चति। ततो यजमानो यूपमालभते । अध्वर्युश्च यजमानं "विष्णोः कर्म्माणि"[1] इत्यादिकं मन्त्रं सर्वमुच्चार्य "इति ब्रूहि" इत्युक्त्वा वाचयति। यजमानश्च तं मन्त्रं जपति। ततोऽध्वर्युश्चषालं पश्यन्तं यजमानम् "तद्विष्णोः परमम्"[2] इत्यादिकं मन्त्रं सर्वमुच्चार्य "इति ब्रूहि" इत्युक्त्वा वाचयति। यजमानश्च तं मन्त्रं जपति। ततोऽध्वर्युः "यूपाय परिवीयमाणायान्नुब्रूउहि" इति होतारमनुवाचयति ।

होता च- पुनन्ति धीरा अपसो मनीषा"[3] इत्यादिकं यथाविधि पठति ।

अध्वर्युश्च त्रिगुणया त्रिव्यामया दर्भमय्या रशनया परिव्यणदेशे (मध्यभागे) "परिवीरसि"[4] इत्यादिना मन्त्रेण त्रिगुणं परिव्ययति । ततो रशनामूलाग्रप्रान्तौ संसृज्यान्वतरस्यामन्तं प्रवेशयति। ततोऽग्निष्ठाश्रिमुत्तरेण रशनायूपान्तराले यूपतक्षणे प्रथमं पतितं शकलं स्वरुसंज्ञकं "दिवः सुनुरसि"[5] इति मन्त्रेणोपगूहति ।

तत "उपावीरसि"[6] इति मन्त्रेण पान्नेजनीमध्ये आसादितं तृणमादायाध्वर्युस्तेन तृणेन "उपदेवान"[7] इत्यादिना मन्त्रेणच्छागं पशुं स्पृशति।

---

1- मा०वा०शु०य०वे०म०सं०- 6/4,5.
2- तत्रैव.
3- शा०ऋ०म०सं०- 3/8/4.
4-7- मा०वा०शु०य०वे०म०सं०- 6/6,7.

अग्निं मन्थत्याहोमात् करोति[1] वैश्वदेववत्।[2]

ततो द्विगुणया द्विव्यामया दर्भमय्या रशनया नागपाशं कृत्वा दक्षिणशृङ्गसंमुखं पाशं प्रमुच्य शृङ्गयोर्मध्ये "ऋतस्य त्वा"[3] इत्यादिना मन्त्रेण बध्नाति। ततो "देवस्यत्वा"[4] इत्यादिना मन्त्रेण यूपे बध्नाति । तत्र "इन्द्राग्निभ्यान्जुष्टन्नियुनज्मि" इत्यादिको यथादेवतं प्रयोग:

ततो "ब्रह्मन्नपः प्रोक्षिष्यामि" इति ब्रह्माणमामन्त्र्य तेन प्रसूतोऽध्वर्युः "अद्भ्यस्त्वौषधीभ्यः (इन्द्राग्निभ्यान्जुष्टम्प्रोक्षामि) अनु त्वा माता"[5] इत्यादिना मन्त्रेण पशुं प्रोक्षति । ततः "अपाम्पेरुरसि"[6] इति मन्त्रेण पशोर्मुखस्याधस्तात् पशु पिबत्विति मुखसंलग्ना एव प्रोक्षणीधारयति। ततः "आपो देवीः"[7] इत्यादिना मन्त्रेण पशोरधस्तादुदरनाभिप्रदेशे उत्प्रोक्षति

ततो होतृषदनकरणादिकमुत्तराधारान्तं कर्म पौर्णमासवत् । किन्तु वैश्वदेवपर्ववत् सप्तदश सामिधेन्यः ।

उत्तराधारान्तेऽध्वर्युः स्रुचावसंस्पर्शयन्नेव पशुसमीप आगत्योपविश्य जुह्वा "सन्ते प्राणः"[8] इत्यादिना मन्त्रेण पशुं ललाटे समनक्ति, ततः "समङ्गानि यजत्रैः (गच्छन्ताम्)"[9] इति मन्त्रेण दक्षिणांसे, तेनैव मन्त्रेण वामेंऽसे च समनक्ति। ततो ध्रुवासमञ्जनम्। स्रुचोर्निधानम्। होतृवरणम् ततोऽध्वर्युराश्राव्य

---

1- का०श्रौ०सू० - 6/3/22.

2- उपाकरणाग्निमन्थनेऽत्र वैकल्पिके ( का०श्रौ०सू०- 6/3/23)

3-6- मा०वा०शु०य०वे०म०सं०- 6/8, 9, 10.

7-9- तत्रैव । (मा०श०प०ब्रा० 3/7/4/6)

प्रत्याश्राविते "अग्ग्नर्ह[1] प्इत्यादिमाह ।

ततोऽध्वर्युः "मित्त्रावरुणयोस्त्त्वा प्प्रशास्त्तरोः प्प्रशिषा प्प्रयच्छामि"[2] इति मन्त्रेण मैत्रावरुणाय यजमानमुखदध्नमौदुम्बरं दण्डं प्रयच्छति। मैत्रावरुणश्च "मित्त्रावरुणयोस्त्त्वा"[3] इत्यादिना मन्त्रेण प्रतिगृह्णाति। ततो "जुष्टो वाचे"[4] इति मन्त्राभ्यां प्रवृतहोमौ हुत्वा होतारमन्तरेण गत्वा दक्षिणां वेदिश्रोणिमपरेण प्रह्वः प्राङ्•मुखस्तिष्ठन् अध्वर्योः प्रयाजप्रैषमाकाङ्•क्षति।

होतृकर्तृकिवृतजपांसिरम्मर्शनादिके स्रुगादापनपाठे जायमानेऽध्वर्युः स्रुचावादायाति क्रम्याश्राव्य प्रत्याश्राविते "समिधः प्रैष्य" इति मैत्रावरुणमाह।

(1) मैत्रावरुणश्च "होता यवक्षदग्ग्न समिधा सुसमिधा समिद्धन्नामा पृथिव्व्याः सङ्•गथे वामस्य। वर्ष्मन् दिव इडस्प्पदे वेत्त्वाज्ज्यस्स्य होतर्व्यज"[5] इति होतारं प्रथमप्रयाजयाज्यापाठाय प्रेष्यति ।

होता च यथाविधि "समिद्धो अग्ग्नः"[6] इत्यादिकां प्रथमप्रयाज याज्यां पठति ।

ततोऽध्वर्युर्जुहोति। तत आश्राव्य प्रत्याश्राविते "प्रैष्य" इति मैत्रावरुणमाह ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-2- का०श्रौ०सू० 6/4/3 (मा०श०प०ब्रा० - 3/7/4/10-11), 6/4/4.
3-4 - का०हौ०सू० - 4/2(का०श्रौ०सू० 9/8/15)
5- का०हौ०सू०- 4/3( ऋग्वेदखिलेषु प्रैषाध्याये च)
6- मा०वा०शु०य०वे०म०सं०- 20/55.
7- का०हौ०सू०- 4/4.

(3) मैत्रावरुणश्च --"होता यवक्षन्नराश सन्नृशस्तत्त्वन्नृः प्र्पेणेत्त्रम् । गोभिर्व्वपावान्त्स्याद्वीरैः शक्क्तीवान्न्रथैः प्रथमयावा हिरण्यैश्च्चन्द्री वेत्त्वाज्ज्यस्स्य होतर्य्यज"[1] इतिह होतारं द्वितीयप्रयाजयाज्यापाठाय प्रेष्यति।

होता च यथाविधि "इन्द्रायेन्दुम्"[2] इत्यादिकां द्वितीयप्रयाजयाज्यां पठति ।

ततोऽध्वर्युर्जुहोति। ततः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(3) मैत्रावरुणश्च --"होता यवक्षदग्गिनमीड ईडितो देवो देवाऽआवक्क्षद् दूतो हव्व्यवाडमूरः । उपमेयू यज्ज्ञमुपेमान्देवो देवहूतिमवतु वेत्त्वाज्ज्यस्स्य होतर्य्यज"[3] इति तृतीयप्रयाजयाज्यापाठाय होतारं प्रेष्यति।

होता च यथाविधि "आजुहव्वानां"[4] इत्यादिकां याज्यां पठति।

ततोऽध्वर्युर्जुहोति । ततः यमानीयाश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह ।

(4) मैत्रावरुणश्च -- "होता यवक्षद्वर्हिः सुष्टरीमोर्ण्णम्म्रदा अस्मिन्न्यज्ञे विचप्प्रथता स्वासस्त्त्यन्देवेभ्य्यः । एमेनदद्य वसवो रूद्द्रा

---

1- का०हौ०सू० - 4/3.

2- मा०वा०शु०य०वे०म०सं० - 20/57.

3- का०हौ०सू० - 4/3.

4- मा०वा०शु०य०वे०म०सं०- 20/58.

आदित्त्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्त्वाज्जस्य होतर्यज"[1] इति चतुर्थप्रयाजयाज्यापाठाय होतारं प्रेष्यति ।

होता च यथाविधि "अश्विनानमुचः"[2] इत्यादिकां याज्यां पठति ।

ततोऽध्वर्युर्जुहोति[3]। ततः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह ।

(5) मैत्रावरुणश्च --"होता यवक्षद् दुरऋष्वाः कवष्यो कोष-धववनी रुद्द्रा स ताभिर्ज्जिहताव् विपक्षोभिः श्रयताम् । सुप्रायणा अस्मिन्न्यज्ञे विश्वश्रयन्तामृतावृधो व्यन्त्वाज्ज्यस्य होतर्यज"[4] इति पन्चमप्रयाजयाज्यापाठाय होतारं प्रेष्यति ।

होता च यथाविधि "कवष्यो न"[5] इत्यादिकां याज्यां पठति।

अध्वर्युश्च जुहोति।[6] ततः पुस्नराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(6) मैत्रावरुणश्च --"होता यवक्षदुषासानक्ता बृहती सुपेशसा नृः पतिभ्यो योनिङ्‌ कृण्वाने। स स्मयमाने इन्द्रेण देवैरेदम् बर्हिः सीदतावँ

---

1- का०हौ०सू०- 4/3.

2- मा०वा०शु०य०वे०मा०सं०- 20/59.

3- "आद्येषु चतुर्षु प्रयाजेषु प्राकृतानि अनुमन्त्रणानि" इति देवयाज्ञिकपद्धतौ।

4- का०हौ०सू०- 4/3.

5- मा०वा०शु०य०वे०मा०सं०- 20/60.

6- पन्चमादिषु प्रयाजेषु "मन्च मम न तस्य" इत्यनुमन्त्रणमिति देवयाज्ञिकपद्धतौ।

वीतामाज्ज्यस्स्य होतर्यज"[1] इति षष्ठप्रयाजयाज्यापाठाय होतारं प्रेष्यति।

होता च यथाविधि "उपासनक्क्तमश्विना"[2] इत्यादिकां याज्यां पठति।

अध्वर्युश्च जुहोति। ततः समानीय पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह ।

(7) मैत्रावरुणश्च --"होता यक्षद् दैव्व्या होतारा मन्द्रा पोतारा कवी प्रचेतसा। स्विष्टमद्यान्न्यः करदिषा स्स्वभिगूर्त्तमन्न्य ऊर्ज्जा स्स्वतवसेमयं यज्ञन् दिवि देवेषु धत्तावं वीतामाज्ज्यस्स्य होतर्यज"[3] इति होतारं सप्तमप्रयाजयाज्यापाठाय प्रेष्यति ।

होता च यथाविधि "पातन्नो अश्विना"[4] इत्यादिकां याज्यां पठति ।

अध्वर्युश्च जुहोति। ततः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(8) मैत्रावरुणश्च — "होता यक्षत्तिस्स्रो देवीरपसामपस्तत्तमा अच्छिद्रमद्येदमपस्त्तन्न्वताम्। देवेभ्यो देवीर्देवमपो व्यन्त्वाज्जयस्स्य होतर्यज"[5] इति अष्टमप्रयाजयाज्यापाठाय होतारं प्रेष्यति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-का०श्रौ०सू० 4/3.

2- मा०वा०शु०य०वे०म०सं०- 20/61.

3- का०हौ०सू०- 4/3.

4- मा०वा०शु०य०वे०म०सं०- 20/62.

5- का०हौ०सू०- 4/3.

होता च यथाविधि "तिस्रस्त्रेधा"[1] इत्यादिकां याज्यां पठति।

अध्वर्युश्च जुहोति। ततः समानीयाध्वर्युः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(9) मैत्रावरुणश्च -- "होता यक्षत्त्वष्टारमपार्क[2] रेतोधाम् विश्रवसयूं यशोधाम् । पुरूरूपमकामकर्शन सुपोषः पोषैः स्यात्त्सुवीरो वीरैर्वेत्त्वाज्यस्य होतर्यज"[3] इति नवमप्रयाजयाज्यापाठाय प्रेष्यति।

होता च यथाविधि "अश्विना भेषजम्"[4] इत्यादिकां याज्यां पठति।

अध्वर्युश्च जुहोति। ततश्च समानीय पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(10) मैत्रावरुणश्च -- "होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारं शशमन्नरः । स्वदान्त्स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्यावाड् वेत्त्वाज्यस्य होतर्यज"[5] इति दशमप्रयाजयाज्यापाठाय होतारं प्रेष्यति।

होता च यथाविधि "ऋतुथेन्द्रो वनस्पतिः"[6] इत्यादिकां याज्यां पठति।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा०वा०शु०य०वे०म०सं०- 20/63

2- अत्र अचिष्टम् इत्यधिकं क्वचिदचिष्टुमित्यधिकं क्वचित् (मै०सं०- 4/13/2, काठकसं० 15/13)

3- का०हौ०सू०- 4/3

4- मा०वा०शु०य०वे०म०सं०- 20/64.

5- का०हौ०सू०- 4/3.

6- मा०वा०शु०य०वे०म०सं०- 20/65.

अध्वर्युश्च जुहोति। ततश्च "शासमाहर" इति शमितारम्[1] आह। ततः शमित्राहृतं शासम्[2] आदाय स्वरूं च स्वयं गृहीत्वाध्वर्युः शासं स्वरूं च जुह्वग्रेऽक्त्वा "घृतेनाक्तौ पशूँस्त्रायेथाम्"[3] इति मन्त्रेण ताभ्यां पशोर्ललाटमुपस्पृशति। ततः स्वरूं रशनायूपान्तरालेऽवगुह्य शमित्रे शासं प्रयच्छन् "एषाते प्रज्ज्ञाताश्रिरस्तु"[4] इत्याह।

ततोऽध्वर्युः स्रुचौ सादयित्वा चात्वालमुत्तरेण शामित्राग्नये पन्च भूसंस्कारान् करोति।[5] ततः "पर्य्यग्ग्नयेनुब्बूहि" इति मैत्रावरुणमनुवाचयति।

मैत्रावरुणश्च "अग्ग्निर्होतानो अद्ध्वरे वाजी सन्नपरिणीयते। देवो देवेषु यज्ज्ञियः।[6] परित्त्रिविष्ट्द्यद्ध्वरयँ यात्त्यग्ग्नी रथीरिव। आदेवेषु प्प्रयो दधत् । परि वाजपतिः कविरग्ग्निर्हव्व्यान्न्यक्रमीत् । दधद्रत्त्नानि दाशुषे।[7] इति पर्यग्निकरणीयं त्रिचं[8] यथाविधि अन्वाह ।

अग्ग्नीच्चाहवनीयादुल्मुल्कं गृहीत्वा पशवाज्यशामित्रदेशयूपचात्वाला-

---

1- शमिता नाम ऋत्त्विग्भ्योऽन्य ऋत्त्विजां मध्य एक एव वा पशुारण-विशसनादिकृत् ( का०श्रौ०सू० 6/7/1-3)

2- शासो नामोभ्यतोधारा कट्टारिका न खड्ग इति हरिस्वामिभणितिरिति देवयाज्ञिकः ।

3- मा०वा०शु०य०वे०म०सं०- 6/11.

4-5- का०श्रौ०सू० - 6/4/11, 12.

6- शा०ऋ०वे०म०सं०- 4/15/1-3.

7- मा०वा०शु०य०वे०म०सं०- 11/25.

8- का०हौ०सू०- 4/4.

हवनीयान् आज्यपशुशामित्रानेव वा परितः त्रिः पर्येति। तत उल्मुकमाहवनीये प्रास्य त्रिरेव प्रतिपर्येति। अन्ते इतरथावृत्तिः । ततस्तमेवोल्मुकं पनरादायाग्नीत् उदङ्•याति। शमिता च पशुं कण्ठे बध्वोल्मुकमनु नयति प्रतिप्रस्थाता वपाश्रपणीयाभ्यां पशुमन्वारभते। अध्वर्युः प्रतिप्रस्थातारमन्वारभते। यजमानश्चाध्वर्युमन्वारभते। ततोऽध्वर्युर्वेदितृणे आदायाश्राव्य प्रत्याश्राविते "उपप्प्रेष्य होतर्हव्व्या देवेभ्यः"[1] इति मैत्रावरुणं प्रेष्यति। ततोऽध्वर्युरेव(रेवति यजमाने प्प्रियन्धा आविश । उरोरन्तरिक्षात्त्सजूर्देवेन वातेनास्स्य हविषस्त्मना यज समस्स्य तन्न्वा भव"[2] इति ब्रूहि इत्युक्त्वा यजमानं वाचयति। यजमानश्च तं मन्त्रं जपति।

मैत्रावरुणश्च "उप प्प्रेष्य होतर्हव्व्या देवेभ्यः" इति श्रुत्वा "अजैदग्ग्निरसदद्धाजन्निदेवो देवेभ्यो हव्व्यावादट्प्रान्जोभिर्हिन्न्वानो धनोभिः कल्प्यमानो यज्ञस्स्यायुः प्प्रतिरन्नुपप्प्रेष्य होतर्हव्या देवेभ्यः"[3] इति होतारं प्रेष्यति।

होता च "दैव्व्याः शमितार आरभद्ध्वम्"[4] इत्यादिकम् अध्रिगुप्रैषम्[5] आह ।

---

1- का०श्रौ०सू०- 6/5/9.

2- मा०वा०शु०य०वे०म०सं०- 6/11.

3- का०हौ०सू० 4/4, ऐ०ब्रा० 6/5, तै०ब्रा० 3/6/5/1, का०कसं० 16/21, मै०सं०- 4/13/54.

4- का०हौ०सू० - 4/4.

5- ध०मी०सू०- 9/4/1.

ततोऽध्वर्युरग्नीद्हस्तादुल्मुकमादाय शामित्रशालायां स्थापति। ततः शामित्राग्नेः पश्चादुत्करे गृहीतयोर्वेदितृणयोर्मध्ये एकं तृणं प्रागग्रम् "वर्षो वर्षीयसि यज्ञो यज्ञपतिन्धमः"[1] इति मन्त्रेणोपास्यति।

ततः शमिता तस्य तृणस्योपरि पशु प्राक्शिरसं प्रत्यक्शिरसं वोदक्पादं पातयित्वा मुखग्रहणेन श्वासरोधं कृत्वाऽवाश्यमानं मारयति, गलावेष्टनेन श्वासं रोधयित्वा वा मारयति।[2]

ततोऽध्वर्युः प्रतिप्रस्थाताऽग्नीच्चाहवनीयमभ्यावृत्योपविशन्ति।

ततोऽध्वर्युय "सञ्ज्ञपयाऽन्वगन्"[3] इति शमितारमाह। ततो वसाहोमहवन्यां सकृद्गृहीतमाज्यं गृहीत्वा समिधमाधायाहवनीयेऽहितप्रणीत एव "स्वाहा देवेभ्यः"[4] इति मन्त्रेण जुहोति।

ततो मृते च पशौ शमिता "सञ्ज्ञप्तः पशुः"[5] इत्याह ।

ततोऽध्वर्युः "शेतान्नु मुहूर्त्तम्"[6] इत्युक्त्वा पुनर्वसाहोमहवन्यामेव स्थाल्या आज्यं सकृद् गृहीत्वा समिधमनाधायैव "देवेभ्यः स्वाहा"[7] इति मन्त्रेणाहवनीयेऽति प्रणीत एव जुहोति।[8]

- - ------- - ------------- - -- -------- ---

1- मा०वा०शु०य०वे०मा०सं०- 6/11।

2-3- का०श्रौ०सू०- 6/5/17-18, 20.

4- मा०वा०शु०य०वे०मा०सं०- 6/11.

5-6- का०श्रौ०सू०- 6/5/22.

7- मा०वा०पशु०य०वे०मा०सं०- 6/11.

8- "स्वाहा देवेभ्यः" इति "देवेभ्यः स्वाहा" इति च मन्त्राभ्यां करणीययोः परिपशब्दसंज्ञकयोराहुत्योर्विकल्पने प्रयोगो भवति ।

(का०श्रौ०सू० 6/6/24)

ततोऽध्वर्युर्वापाश्रमपणीभ्यां पशुबन्धनोपयुक्तां द्विगुणां रशनां "माहिर्भूर्म्मा पृदाकुः"[1] इति मन्त्रेण चात्वाले प्रास्यति।

ततोऽध्वर्युः "प्रतिप्प्रस्थातः पत्त्नीमुदानय"[2] इत्याह ।

ततः प्रतिप्रस्थाता पान्नेजनहस्तां पत्नीं गार्हपत्यस्य समीपात् पशुं प्रतिनयन् "नमस्त्त आताना"[3] इत्यादिकं ब्रूहि इत्युक्त्वा पत्नीं वाचयति। पत्नी पठति ।

ततः पत्नी पशुसमीपं प्राप्योदङ्मुखी उपविश्य पशोः "वाचन्ते शुन्धामि"[4] इति मन्त्रेण मुखम्, "प्राणन्ते शुन्धामि"[5] इति मन्त्रेण नासिके[6], "चक्षुस्त्ते शुन्धामि"[7] इति मन्त्रेण चक्षुषी[8], "श्रोत्त्रन्ते शुन्धामि"[9], इति कर्णौ[10], नाभिन्ते शुन्धामि"[11] इति मन्त्रेण नाभिम्, "मेड्ढन्ते शुन्धामि"[12] इति मन्त्रेण शिश्नम्, "पायुन्ते शुन्धामि"[13] इति मन्त्रेण गुदम्, पादान् सम्मेल्य "चरित्त्राँस्त्ते शुन्धामि"[14] इति मन्त्रेण पादान् प्रोक्षति।

ततः पान्नेजनशेषेणाध्वर्युर्यजमानश्च सहैव पशोः "मनस्त्त आप्प्यायताम्"[15] इति मन्त्रेण शिरः, "वाक्कत आप्प्यायताम्"[16] इति मुखम्, "प्राणस्त्त आप्प्ययताम्" इति मन्त्रेण नासिके[17], "चक्षुस्तत

---

1- मा०वा०शु०य०वे० मo सं०- 6/12.

2- का०श्रौ०सू०- 6/5/26.

3-7- मा०वा०शु०य०वे०म०सं०- 6/12-13, 14.

8- द्वितय चक्षुषि मन्त्रावृत्तिरिति देवयाज्ञिकः ।

9- मा०वा०शु०य०वे०म०सं०- 6/14.

10- द्वितीये कर्णे "मन्त्रावृत्तिरिति देवयाज्ञिकः ।"

11-16- मा०वा०शु०य०वे० म०सं०- 6/14, 15.

17- द्वितीयायां नासिकायां मन्त्रावृत्तिरित देवयाज्ञिकः ।

आप्यायताम्"[1] इति मन्त्रेण चक्षुषी, "श्रोत्रन्त आप्यायताम्"[2] इति मन्त्रेण कर्णौ, "यत्ते क्रूरयु यदास्थितथतन्तत् त आप्यायतानिष्ट्यायतान् तत् ते शुद्ध्यतु"[3] इति मन्त्रेणावशिष्टानि सर्वाण्यङ्गानि[4] अनुषिन्चतः । ततः "शमहोभ्य:[5] इति मन्त्रेण सर्वमवयशिष्टं पान्नेजनजलं पशोः पश्चात् (पुच्छदेशे) निनयतः।

ततः पशुमुत्तानं कृत्वाऽध्वर्युः पूर्वमात्तयोस्तृणयोर्मध्येऽवशिष्टं तृणं पशोर्नाभिरग्रे "ओषधे त्रायस्व"[6] इति मन्त्रेण प्रागग्रं निधाय "स्वधिते मैन हि सीः"[7] इति मन्त्रेण प्रज्ञातया धारया शासतमभिनिधाय छित्त्वाऽग्रं सव्ये पाणौ कृत्वा मूलं दक्षिणेन पाणिना द्विगुणीकृत्योभयतो "रक्षसाम्भागोसि"[8] इति मन्त्रेण लोहितेनाक्त्वा "निरस्तं रक्षः"[9] इति मन्त्रेणोत्करे पास्यति।

ततो यजमानस्तत् तृणम् "इदमह रक्षोभितिष्ठामीदमह रक्षोवबाध इदमह रक्षोधमन्तमो नयाभि"[10] इति मन्त्रेणाभितिष्ठति।

ततोऽध्वर्युः पशोरुदराद् वपामुत्खिद्य "द्यौ स्त्थः पृथिवी स्त्थ"[11] इत्यूहितेन मन्त्रेण वपाश्रपण्यावादाय यजमानेऽन्वारब्धे ते "घृतेन द्यावा-

---

1-3- मा०वा०शु०य०वे०म०सं०- 6/15.

4- का०श्रौ०सू०- 6/6/5.

5-10- मा०वा०शु०य०वे०म०सं०- 6/15,16.

11- "द्यौरसि पृथिव्यसि" (मा०वा०शु०य०वे०म०सं०- 1/2) इत्यस्य मन्त्रस्योहेन निष्पन्नोऽयं मन्त्रः ।

पृथिवी प्प्रोर्णुवाथाम्"[1] इति मन्त्रेणाच्छादयति। ततो वपां छित्त्वा प्रतिप्रस्थात्रे प्रयच्छति।

ततः प्रतिप्रस्थाता वपां चात्वाले प्रक्षाल्य शामित्रेऽग्नौ प्रतप्य चात्वालोत्करावन्तरेणातिप्रणीताहवनीयसमीप आगत्योत्तरतोऽवतिष्ठते। अग्नीच्च शामित्रादैकमुल्मुकं गृहीत्वा चात्वालोत्करावन्तरेणागत्यातिप्रणीताहवनीये प्रास्यति। ततोऽध्वर्युरपि चात्वालोत्करावन्तरेणागत्य पूर्वं सव्यहस्तेकृतं तृणाग्रम् "वायो वेस्तोकानाम्"[2] इति मन्त्रेणातिप्रणीताहवनीय प्रास्यति।

ततः प्रतिप्रस्थातोत्तरतस्तिष्ठन्नेवाहवनीये वापां प्रतप्य यूपाग्नी अन्तराहृत्य परीत्योत्तरवेदेर्दक्षिणत आसीनो वपामाहवनीयस्योपरि धारयित्वा श्रपयति।

ततोऽध्वर्युः स्रुवेणाज्यस्थाल्या आज्यं गृहीत्वा "अग्निराज्यस्य वेतु स्वाहा"[3] इति वपामभिघारयति। ततोऽध्वर्युरेव "स्तोकेभ्योऽनुब्रूहि" इति मैत्रावरुणमनुवाचयति।[4]

मैत्रावरुणश्च - "जुषस्व"[5] इत्यादिकं स्तोक्यं षडच्चं यथाविधि पठति।

ततः शृतायां वपायां प्रतिप्रस्थाता "शृता प्प्रचर"[6] इत्यध्वर्युमाह। ततोऽध्वर्युस्तत्रैव स्थितायां वपायामभिघारं करोति।

---

1-3 - मा०वा०शु०य०वे०म०सं० - 6/16.

4- का०श्रौ०सू०- 6/6/17.

5- का०हौ०सू०- 4/5(शा०ऋ०म०सं०- 1/75/1, 3/21/1-5.

6- का०श्रौ०सू० 6/6/17.

ततः प्रतिप्रस्थाता यूपाग्नी अन्तरा वपां प्रत्याहृत्याहवनीयस्योत्तरतो निदधाति। ततोऽध्वर्युः "यस्ते प्राण"[1] इत्यादिना मन्त्रेण वपामञ्जयति। "इन्द्राग्नी गच्छ" इति प्रयोगविशेषः। ततो वपां "प्रियेण धाम्ना"[2] इत्यादिना मन्त्रेणासाद्य "ध्रुवा आसदन्"[3] इत्यादिना मन्त्रेणालभते। ततो होत्रा पुनः स्रुगादापने पठितेऽध्वर्युर्जुह्वपभृतावादायातिक्रम्याश्राव्य प्रत्याश्राविते "स्वाहाकृतिभ्यः प्रेष्य"[4] इत्युत्तमप्रयाजयाज्यापाठार्थं होतारं प्रेषितुं मैत्रावरुणमाह।

(11) मैत्रावरुणश्च --"होता यक्षदग्नि स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकाना स्वाहा स्वाहाकृतीना स्वाहा हव्यसूक्तीनाम्। स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु होतर्यज"[5] इति एकादशप्रयाजयाज्यापाठाय होतारं प्रेष्यति।

होता च यथाविधि "गोभिन्नं"[6] इत्यादिकां याज्यां पठति।

अध्वर्युश्च जुहोति। ततः प्रत्येत्य प्रयाजशेषेण क्रमेण ध्रुवाम्, आज्यस्थालीम्, वपाम्, पृषदाज्यस्थालीम्, पृषदाज्योपभृतम् अभिघारयति।

ततोऽध्वर्युः "अग्नयेऽनुब्रूहि" इति मैत्रावरुणं प्रेष्यति।

---

1- का॰श्रौ॰सू॰- 2/8/10.

2-3- मा॰वा॰शु॰य॰वे॰म॰सं॰ - 2/6.

4- का॰श्रौ॰सू॰- 6/6/17.

5- का॰हौ॰सू॰- 4/3.

6- मा॰वा॰शु॰य॰वे॰म॰सं॰- 20/66.

मैत्रावरुणश्च "अग्निर्वृत्राणि"[1] इत्यादिकां पुरोनुवाक्यां[2] यथाविधि पठति।

अध्वर्युश्च यथाविधि ध्रुवाया आज्यं जुह्वामादाय जध्रुवामाप्याय्योत्तथायातिक्रम्याश्राव्य प्रत्याश्राविते "अग्नये प्रेष्य" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "होता यक्षदग्निमाज्यस्य जुषता हविर्होतर्यज"[3] इति आग्नेयाज्यभागयाज्यापाठाय होतारं प्रेष्यति।

होता च "जुषाणो अग्निराज्यस्य वेतु"[4] इति याज्यां यथाविधि पठति ।

ततोऽध्वर्युर्जुहोति। ततोऽध्वर्युः हविषः समीपे गत्वा "सोमायानुब्रूहि" इति मैत्रावरुणं प्रेष्यति।

मैत्रावरुणश्च "त्व सोमासि"[5] इत्यादिकां पुरोनुवाक्यां यथाविधि पठति।

अध्वर्युश्च ध्रुवाया आज्यं जुह्वां यथाविधि आदाय ध्रुवामाप्याय्योत्स्थायातिक्रम्याश्राव्य प्रत्याश्राविते "सोमाय प्रेष्य" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "होता यक्षत्त्सोममाज्यस्य जुषता हविर्होतर्यज"[6] इति सौम्याज्यभागयाज्यापाठाय होतारं प्रेष्यति।

---

1- मा०वा०शु०य०वे०म०सं० - 33/9.

2-6- का०हो०सू० - 4/2, 3, 4, 3(पशोः सान्नाय्यविकारत्वाद् वृधन्वन्तावाज्यभागो इति केचित्, अग्निष्टोमपद्धतौ, 229पृ०)

होता च "जुषाणः सोम आज्ज्यस्स्य हविषो वेतु"[1] इति याज्यां यथाविधि पठति।

ततोऽध्वर्युर्जुहोति ।

ततोऽध्वर्युर्हविः समीपं गत्वा जुह्वामुपस्तीर्य हिरण्यशकलमवधाय वपामवद्यन् "इन्द्राग्निभ्यान्[2] छागस्स्य वपायै मेदसोऽनुब्रूहि" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "आवृत्रहणा"[4] इति पुरोनुवाक्यां यथाविधि पठति ।

ततोऽध्वर्युः वपां सूच्यवधाय पुनरुपरि हिरण्यशकलमवधायोपरिष्टात् सकृदभिधार्योत्थायातिक्रम्याश्राव्य प्रत्याश्राविते "इन्द्राग्निभ्यान्[4] छागस्य वपां मेदः प्रेष्य" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "होता यक्षदिन्द्राग्नी[5] छागस्स्य वपाया मेदसो जुषेता[6] हविर्होतर्यज" इति[7] होतारं प्रेष्यति।

होता च यथाविधि "शुचिन्नु"[8] इति याज्यां पठति

ततोऽध्वर्युर्जुहोति। ततश्च विशाखां वपाश्रपणीं प्राचीमितरां प्रतीचीं

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०हौ०सू०- 4/3.
2- सौर्यपक्षे प्राजापत्यपक्षे च यथादेवतं प्रयोगः ।
3- का०हौ०सू०- 4/7 (शा०ऋ०वे०म०सं०- 6/60/3)
4-6- सौर्यपक्षे प्राजापत्यपक्षे च यथादेवतं प्रयोगः ।
7- का०हौ०सू०- 4/3.
8- तत्रैव- 4/7 (शा०ऋ०वे०म०सं०- 7/93/1)

कृत्वाऽध्वर्युः "स्वाहाकृते ऊर्ध्वनभसम्मारुतङ्गच्छतम्"[1] इति ते आहवनीयेऽनुप्रास्यति।[2] ततः स्रुचौ स्वस्थाने आसादयति।

ततो ब्रह्मादिक्रमेण सर्वे ऋत्विजो यजमानः पत्नी च "इदमापः"[3] इति मन्त्रेण चात्वाले मार्जयन्ते।[4]

ततः पशुपुरोडाशनिर्वापः क्रियते।[5] तत्र प्रथमं "यजमान वाचयं यच्छ" इति प्रैषः। ततः पात्रासादनम्। तत्र च शूर्पम्, द्वादश कपालानि[6], कृष्णाजिनम्, उलूखलमुसलम्, पात्री, धृष्टिः, संयवनोदकम्, शृतावदानम्, पुरोडाशपात्री, कर्मापवर्गासमिद् इति पात्राण्यासाद्यन्ते। ततः सहविष्कपात्र्या गार्हपत्यस्य पश्चिमतो निधानम्। ततः पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्यादि हविः सादनान्तम्। हविर्ग्रहणे "इन्द्राग्निभ्यान्जुष्टटम्" इत्यादिको यथादेवतं प्रयोगविशेषः पात्रान्तरे स्थिताः प्रोक्षणीर्हविर्ग्रहण्यां निनीय ब्रह्माणं पृष्ट्वा तेन प्रसूत हविः प्रोक्षति। तत्रापि "इन्द्राग्निभ्यान्त्वा जुष्टटम" इत्यादिको यथदेवतं प्रयोगविशेषः। ततः पात्राणां प्रोक्षणम्, प्रोक्षणीनां निश्शेषकरणम् । ततः कृष्णाजिनादानाद्याप्त्योदक-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा०वा०शु०य०वे०म०सं०- 6/16.

2- का०श्रौ०सू०- 6/6/24.

3- मा०वा०शु०य०वे०म०सं०- 6/17.

4- का०श्रौ०सू०- 6/6/25.

5- यद्यपि सूत्रकारेण पशुविशसनं पूर्वमुक्तं तथापि श्रुत्यनुरोधात् ततः पूर्वमेव पशुपुरोडाशनिर्वापप्रारम्भो भवति ।

(मा०श०प०ब्रा०- 3/8/3/2-3)

6- ऐन्द्राग्नपक्षे द्वादशैव कपालानीति देवयाज्ञिकः ।

निनयनान्तम्।[1] किन्तु तत्र कुक्कुटाहनन-वेदबन्धनाज्यनिर्वपणाधिश्रणानामभावः। ततः शृतावदानपुरोडाशपात्र्योः सम्मार्गः, सम्मार्जनतृणादासनं च। ततः पुरोडाशविभस्मीकरणाद्यालम्भनान्तम् । तत्र प्राणदाने (हविरन्जने) "इन्द्राग्नी गच्छ) इत्यादिको यथादेवतं प्रयोगः । होत्रामन्त्रणस्थाने"एत होतृमैत्रावरुणौ" इति प्रयोगः।[2]

ततोऽध्वर्युर्जुहूपभृतावादाय जुह्वामुपभृति चोपस्तीर्य पुरोडाशमवद्यन् "इन्द्राग्निभ्याम् पुरोडाशस्यानुब्रूऽहि" इति मैत्रावरुणमाह।

मैत्रावरुणश्च- "आ भरतम्"[3] इति पुरोनुवाक्यां यथाविधि पठति। अध्वर्युश्च पुरोडाशस्य जुह्वां द्विरवदायोपरि सकृदभिधार्यावदानयोः प्रत्यभिधारणं कृत्वोपभृति च पुरोडाशोत्तरार्धादवदाय द्विरभिघार्योत्थायातिक्रम्याश्राव्य प्रत्याश्राविते "इन्द्राग्निभ्यां पुरोडाशं प्रेष्य" इति मैत्रावरुणमाह।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- यद्यपि कर्केण देवयाज्ञिकेन च पशुपुरोडाशयागं समाप्यैव पशुविशसनादिकं कर्तव्यम्, इत्युक्तम्(कर्कभाष्ये- 6/7/29; देवयाज्ञिकपद्धतौ 9), तथैवात्रास्माभिरपि लिखितम्, तथापि श्रुतेः (मा0श0प0ब्रा0- 3/8/3/2-3) पशवङ्•गहविर्होमात् पूर्वं पुरोडाशहोमस्य करणेनैव चारितार्थ्यस्य सम्पादयितुं शक्यत्वात, "हविष्कृता वाचं विसृज्य पशुं विशास्ति" इत्यापस्तम्बवचन संवादाच्च हविष्कृति अवहनने प्रवृत्ते शमिताऽपि पशुविशसने प्रवर्तते, अध्वर्युः शमितारं शास्ति, पच्यमाने पशवङ्•गहविषि पुरोडाशेन प्रचरतीति प्रतीयते ।

2- शाङ्•खायनसूत्रादेवं प्रयोगः इति देवयाज्ञिकपद्धतौ ।

3- का0हौ0सू0- 4/7 (शा0ऋ0म0सं0- 1/109/7)

मैत्रावरुणश्च (होता यक्षदिन्द्राग्ग्नी पुरोडाशस्य जुषेता हविर्होत-र्यर्ज" इति[1] ऐन्द्राग्नपुरोडाशयागयाज्यापाठाय होतारं प्रेष्यति।

होता च -"गीर्भिर्विप्प्र:"[2] इति याज्यां यथाविधि पठति।

ततोऽध्वर्युर्जुह्वामवत्तं जुहोति। ततश्चोपभृति यदवत्तं तज् जुह्वा-मानीयाध्वर्यु: "अग्ग्नयेऽनुब्ब्रूउहि" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "इडामग्ग्ने"[3] इति पुरोनुवाक्यां यथाविधि पठति।

ततोऽध्वर्यु: "अग्ग्नये स्स्विष्टकृते प्प्रेष्य" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "होता यक्षदग्ग्निम् पुरोडाशस्य जुषता हविर्होत-र्यर्ज" इति[4] होतारं पुरोडाशस्विष्टकृद्याग याज्यापाठाय प्रेष्यति।

होता च "अग्ग्ने सुदीतिम्"[5] इति याज्यां यथाविधि पठति।

ततोऽध्वर्युरुत्तरतो जुहोति। तत उदकमुपस्पृश्यैत्य स्रुवावासादयति। ततः प्राशित्रावदानादिकं चतुर्धाकिरणभागवर्जं भागपरिहरणान्तं पौर्णमासवत्। मैत्रावरुणोऽपि अत्रेडां भक्षयति। ततो दक्षिणादानम्। तत्र दक्षिणालम्भनं पशुरसीति वा वरोसीति वा यथायथं प्रयोगविशेषः । "अस्य पशोः समृद्ध्यर्थम्पशुन्द-क्षिणाम् ब्रह्मणे होत्रेऽद्ध्वर्यवे मैत्त्रावरुणाय प्प्रतिप्प्रस्त्थात्त्रेऽग्ग्नीधे च समप्प्रविभागेनाह सम्प्रददे" इति दक्षिणादानवाक्यम्।

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- का0हौ0सू0- 4/3.

2- तत्रैव, 4/7 (शा0ऋ0म0सं0- 7/93/4)

3- तत्रैव, 4/7, (शा0ऋ0म0सं0 3/1/23)
मा0वा0शु0य0वे0म0सं0- 12/51.

4- का0हौ0सू0- 4/3.

5- शा0ऋ0म0सं0- 3×17/4.

ततः शमिता[1]ऽनक्तया कट्टारिकाधारया पशुविकर्तनं करोति। ततोऽङ्गानि अभन्जन् शमिता हृदयम्[2] जिह्वाम्, क्रोडम्[3], सव्यसक्थिपूर्वनडकम्[4], पार्श्वे[5], यकृद्[6], वृक्कौ[7], गुदनलिकाम्[8], दक्षिणश्रोणिम्[9], दक्षिणसक्थिपूर्वनडकम्[10], सव्यश्रोणिम्, वनिष्ठुम्[11], जाघनीम्[12], क्लोमानम्[13],

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "पुरोडाशमाग्नीध्रो निर्वपति, प्रतिप्रस्थातापशु विशास्ति" इति वैखानसश्रौतसूत्रे- 10/17.

2- हृदयशब्देनात्र फुस्फुसयोर्मध्ये स्थितं सिराधमनीमूलभूतं प्रकोष्ठ्यचतुष्टययुतं रक्तसञ्चारयन्त्ररूपं मांसपिण्डमुच्यते।

3- क्रोडः = पार्श्वयोः सन्धिना युक्तो वक्षसो भागः।

4- सव्यसक्थिपूर्वनडकम् = सव्यस्य बाहोः प्रथममंसादधो वर्तमानं नलकमिति देवयाज्ञिकः। अत्र श्रुतौ (3/8/3/17, 27) दोः शब्दस्य प्रयोगे सत्यपि सूत्रे(6/7/7) सक्थिशब्दप्रयोगश्चिन्त्यो भाति।

5- त्रयोदशवङ्क्रि पार्श्वम्, दक्षिणं सव्यं चेति द्वे पार्श्वे।

6- यकृत् = कालेयम् इति कर्कः (6/7/6)

7- वृक्कौ नाभिदेशपार्श्ववर्तिनौ पृष्ठवंशसमीपस्थौ मूत्रजनकयन्त्ररूपौ आम्रशलाटुनिभौ अवयवौ।

8- स्थलान्त्रात् पायुविवरं यावद् स्थिता नलिका।

9- दक्षिणश्रोणिः = दक्षिणसक्थ्युपरिगतो भागः।

10- दक्षिणस्य बाहोः प्रथममंसादधो वर्तमानं नलकम्।

11- वनिष्ठुः = स्थूलान्त्रम्।

12- जाघनी = पुच्छदण्डिका।

13- क्लोमा = गलनाडी इति कर्कः (अन्ननाडी वा श्वासनाडी वेयमिति विद्वद्भिर्विवेक्तव्यम्, अन्ननाड्येवेयमिति सम्भाव्यते)

प्लीहानम्[1], अध्यूध्नीम्[2] पुरीततं चावद्यति। पशुः कृशश्चेदुदरमेदो गुदनलिकाया-मुद्गृह्णति।

ततोऽध्वर्युः शामित्रस्य पश्चिमत उत्करस्योत्तरतो गर्त्तं खात्वा तस्मिन् पशोः पुरीषं तूष्णीमवधाय तस्योपरि "रक्षसाम्भागोसि"[3] इति मन्त्रेण लोहितं प्रक्षिपति। तत उदकमुपस्पृश्य "द्यौरसि पृथिव्यसि"[4] इति मन्त्रेण वारणमरलिमात्रं शूलमादाय यजमानेनान्वारब्धो हृदयं तत्र प्रवाय शामित्रेऽग्नौ प्रतप्य श्रपयति। ततो "द्यौरसि पृथिव्यसि" इत्यनेनैव मन्त्रेणोखा-मादाय "मातरिश्वनो धर्म्मोसि"[5] इत्यादिना मन्त्रेण शामित्रेऽग्नौ अधि-श्रयति। ततो यजमानेनान्वारब्धायामुखायां जिह्वादीनि[6] मांसानि यथावश्यंक चिह्नितानि[7] क्रमेणावपति। ततो यजमानेनान्वारब्ध उदकं प्रक्षिपति। ततोऽ-ध्वर्युः शमितारं "त्रिः प्प्रच्च्यावयतात्[8], त्रिः प्प्रच्च्युतस्य हृदयमुत्तमङ्कुरुतात्[9],

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- प्लीहा = कुक्षिवामपार्श्वस्थं शुक्तिकाकारं मांसपिण्डम् ।

2- अध्यूध्नी : शतपुट अधोदेशस्योपरि स्थित इति देवयाज्ञिकः ।

3-5- मा०वा०शु०य०वे०मा०सं०- 6/16, 1/2.

6- विद्याधरशर्मसम्पादितदेवयाज्ञिकपद्धतिपुस्तकस्थो "हृदयादीनि मांसानि" इति पाठोऽशुद्धः, हृदयस्य शूलाकृत्य पाचनीयत्वात् ।

7- सव्यसक्थिपूर्वनडकदक्षिणसक्थिपूर्वनडकयोः, सव्यश्रोणि-दक्षिणश्रोण्योश्च परिचयाय चिह्नकरणमावश्यकं भाति ।

8- "प्रच्यावयतात्" इत्यस्यार्थः कर्केण "प्रच्यावनं चोत्सेचनमुच्यते" (6/8/2) इत्युक्तम्, देवयाज्ञिकेन "प्रच्यावय उत्कालय"(6/8/1) इत्युक्तम्, सायणेन तु "त्रिः प्रच्यावय प्रधानस्विष्टकृदुपयङ्भेदेन त्रिविधाङ्गानि त्रिविध-चिह्नानि यथा स्युस्तथा प्रच्यावय" इति (3/8/3/3) उक्तम् । अस्माभिस्तु अन्यविध एवार्थः सम्भाव्यते ।

9- का०श्रौ०सू० - 6/8/1, मा०श०प०ब्रा०- 3/8/3/2.

यत् त्वा पृच्छात् "शृत हविः शमित३ः" इति, "शृतम्" इत्त्येव ब्रूतात्, न "शृतम् भगवः" इति न च "शृत हि" इति" इति शास्ति।[1]

अथ शमिता हविः सम्यक् पचति, तत्रोपरितनानि मांसानि मेक्षणादिना घट्टयित्वा अधो नीत्वा नीत्वा पाचयति। तृतीये पर्यायेऽधस्तनेषु मांसेषूपर्यागतेषु पक्वेषु च हृदयं शूलात् प्रवृह्योपरि उखायां निदधाति, ततो मांसानि नैव घट्टयति। शूलं चाभूमौ सुगुप्तं स्थापयति।

मांसानि एतावता कालेनावश्यं पक्वानिस्युरिति सम्भाव्याध्वर्युः पन्चगृहीतं गृहीत्वाऽवशिष्टं पृषदाज्यस्थाल्याः पृषदाज्यं हृदयाभिधारणपर्याप्तं जुह्वां गृहीत्वा चात्वालोत्करावन्तरेण निष्क्रम्य "शृत हविः शमित३ः" इति पृच्छति। ततः शमिता "शृतम्" इत्याह । ततोऽध्वर्युरुपांशु "तद्देवानाम्" इत्याह। ततः शमितारं प्रत्यभिक्रम्याध्वर्युः पुनः "शृत हविः शमित३ः" इति पृच्छति। ततः शमिता पुनः "शृतम्" इत्याह। ततोऽध्वर्युरुपांशु "तद्देवानाम्" इत्याह। ततः पुनः शमितारं प्रत्यभिक्रम्याध्वर्युः पुनः "शृत हविः शमित३ः" इति पृच्छति । ततः शमिता पुनः "शृतम्" इत्याह । ततोऽध्वर्युरुपांशु "तद देवानाम्" इत्याह ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- एतस्य संशासवस्य "यत् यदा हे शमितः त्वा त्वां पृच्छात् पृच्छेत् । प्रश्नप्रकारमाह- शृत हविः शमिता३रिति प्रश्नार्थे प्लुतः । तदा शृतं चेच्छृतमित्येव ब्रूतात् । अशृतं चेत् हे भगवन्निदानीमपि न शृतमिति ब्रूतात् । प्रमादादशृतस्य शृतत्वाभिधानभीत्या प्रथमत एव संशासनम्" इति (3/8/3/4) सायणेन स्पष्टीकरणं कृतम् । अस्माभिस्तु तदवधीय देवयाज्ञिकोक्तिरनुसृता काण्वशतपथपाठसंवादात् (4/8/3/3)

ततोऽध्वर्युस्तेन पृषदाज्येन सर्वेषां मांसपिण्डानामुपरि स्थापितं हृदयं "सन्ते मनो मनसा सम्प्राणः प्राणेन गच्छताम्"[1] इति मन्त्रेणाभिघारयति, ततस्तूष्णीं सर्वं मांसमभिघारयति।[2]

तत उखामुदगुद्वास्य मांसानि निष्काश्य कस्मिंश्चिद् वंशपात्र्यादिके पात्रे हृदयादिक्रमेणोदक्संस्थानि स्थापयति। ततो वशामपि निष्काश्य पात्रान्तरे निदधाति। ततः स्थाल्याज्येन हृदयादीनां हविषामञ्जनम् । प्राणदानम्। "इन्द्राग्नी गच्छ" इति तत्र प्रयोगविशेषः । वसायास्तु तूष्णीमेवाञ्जनम् । ततः पशवङ्गानि असिं चादाय चात्वालोत्करणे विहारं प्रविश्य यूपाग्न्योरन्तरालेन पशवङ्गानि दक्षिणतो हृत्वा (स्वयमपि सहविष्कत्वात् तथैव गत्वा) सूचां दक्षिणतो वेद्यां बर्हिषि हृदयादीनि "प्रियेण धाम्ना"[3] इत्यादिना मन्त्रेण प्रत्येकमासादयति। जाघनीं च मन्त्रेणैवासादयति। वसां तूष्णीमासादयति। अङ्गभागावदानानां बर्हिषि स्थापनमात्रमेव नासादनम् । ततो जौहवानां पशवङ्गाना जाघन्याश्च "ध्रुवा असदन्"[4] इत्यादिना मन्त्रेणालम्भनम्। वसायास्तूष्णीमालम्भः । अङ्गभागावदानानां त्वनालम्भ एव । आत्मनोऽप्यत्रानालम्भ एव कृतात्वात् ।

ततोऽध्वर्युर्जुह्वामुपभृति वसाहोमहवन्यां प्राशित्रहरणे इडापात्र्यां चोपस्तीर्य जुह्वामुपभृति च हिरण्यशकलमवधाय "मनोतायै हविषोऽवदीयमानस्यानुब्रूहि" इति मैत्रावरुणमाह ।

---

1- मा०वा०शु०य०वे०म०सं०- 6/18.

2- एतदभिघारणं पृषदाज्येन स्थाल्याज्येन वा कर्तव्यमुभयोः पक्षयोः समूलत्वादिति देवयाज्ञिकः ।

3-4- मा०वा०शु०य०वे०म०सं०- 2/6.

मैत्रावरुणश्च- "त्व ह्यग्ग्ने प्प्रथमो मनोता" इत्यादिकं त्रयोदशर्चं मनोतासूक्तं[1] यथाविधि पठति।

मैत्रावरुणे मनोतासूक्तं पठति सति प्रतिप्रस्थाता[2] स्तृतानां प्लक्षशाखानामुपरिमांसपिण्डानि क्रमेण निधाय निधाय हृदयादीनां जौह्वानां मांसपिण्डानां[3] प्रत्येकं मध्यात् पूर्वार्धाच्च द्विर्द्विरवदायाध्वर्योर्हस्ते समर्पयति। गुदनलिकां विषमतया त्रेधा विभज्य स्थूलं खण्डमुपयड्भ्योऽणु च स्विष्टकृते रक्षिता मध्यमाद् भागाद्[4] जुह्वर्थं सकृदवदाय द्वितीये पर्याये मध्यमभागस्यावशिष्टं सर्वमवदायाध्वर्यवे ददाति। अध्वर्युश्च जुह्वामवदधाति। ततः प्रतिप्रस्थाता औपभृतानां दक्षिणसक्थिपूर्वनडकाणिष्ठगुदतृतीयसव्यश्रोणीनां द्विर्द्विरवदानं कृत्वाऽध्वर्यवे ददाति । अणिष्ठगुदतृतीयभागस्यापि पूर्वोक्त मध्यमगुदतृतीयभागवदेवावदानम् । ततोऽध्वर्युरुपभृति अवदधाति। ततो जुह्वामुपभृति च हिरण्यशकलं प्रत्येकमवदधाति। ततो जुह्वामुपभृति च सकृत्सकृदेवाभिधारणं करोति।[5] ततो "रेडस्स्यग्ग्नष्ट्वा"[6] इत्यादिना मन्त्रेण वसाहोमहवन्यां

- - - - - - - - - - - - - - - - - - - - - - -

1- का०हो०सू०- 4/8, शा०ब्रा०म०सं०- 6/1/1-13.

2- का०श्रौ०सू०- 6/8/7.

3- "हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद् वृक्कौ गुदमध्यं दक्षिणाश्रोणिरिति जौह्वानि" इति का०श्रौ०सू० 6/7/6 (मा०श०प०ब्रा० 3/8/3/16-18)

4- मा०श०प०ब्रा०- 3:8/3/18.

5- "पन्चावत्तिनां सर्वावदानेभ्यस्त्रिस्त्रिरवदानम् मध्यात्पूर्वार्धात् पश्चाच्च "त्रिर्जमदग्नीनां पश्चात्तृतीयम्" इति वचनात् । उपस्तरणवृद्ध्याऽभिधारणवृद्ध्या वा पन्चावत्तात्वं सम्पादनीयमिति शास्त्रदीपिकायाम्" इति देवयाज्ञिकपद्धतौ ।

वसां गृहीत्वा उपरि द्विरभिधार्य पार्श्वेनासिना वा "प्रयुतन्द्वेषः"[1] इति मन्त्रेण वसां धृतं च मिश्रयति (संसृजति)। ततो जौहवेभ्यो मांसपिण्डेभ्यः प्राशित्रस्यावदानम्। ततोऽभिधारणम्। ततो वसाशेषमिडापात्र्यामासिच्य तत्र हृदयं क्रोडं यकृद् वृक्कौ च प्रक्षिपति। उपरिष्टाद् द्विरभिधारणं च करोति। ततः पत्नीसंयाजार्थं जाघनीम्, उपयड्ढोमार्थं स्थूलं गुदतृतीयभागं च सुगुप्तं स्थापयित्वाऽवशिष्टानि शृतानि पशवङ्गानि अशृतानि[3] च पशवङ्गानि "ऐन्द्रः प्राणः"[4] इत्यादिना मन्त्रेणानपघ्नन् सम्मृशति[5]। ततोऽध्वर्युप्रतिप्रस्थातारौ जुह्वादिकमादाय यथेतमुत्तरतो यातः।

ततस्तत्रैवोपविष्ट एवाध्वर्युः "इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहि" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "उभावामिन्द्राग्नी"[6] इत्यादिकां पुरोनुवाक्यां

---

1- मा०वा०शु०य०वे०म०सं०- 6/18.

2- तत्रैव.

3- "अथ यन्न शीर्ष्णोऽवद्यति नांसयोर्नानूकस्य नापरसक्थ्नोरनवदेयान्येतानि तानि शृतैः संनिधाय सम्मृशत्यैन्द्रः प्राण इति" इत्यापस्तम्ब इति देवयाज्ञिकभाष्ये (6/9/1)

4- मा०वा०शु०य०वे०म०सं०- 6/20.

5- का०श्रौ०सू०- 6/9/1.

6- मा०वा०शु०य०वे०म०सं०- 3/12.

यथाविधि पठति ।

ततोऽध्वर्युरुत्थायातिक्रम्याश्राव्य प्रत्याश्राविते "इन्द्राग्निभ्यान्छागस्य हविः प्रेष्य" इति मैत्रावरुणमाह ।

मैत्रावरुणश्च "होता यक्षदिन्द्राग्नी[1] छागस्य हविष[2] आत्तामद्य मध्यतो मेद उद्भृतम्पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्ततान् नूनङ् घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोङ्गादङ्गादवत्ताङ्करत एवेन्द्राग्नी जुषेतां हविर्होतर्यज" इति पश्वङ्गयागयाज्यापाठाय होतारं प्रेष्यति ।

होता च "प्रचर्षणिभ्यः पृतनाहवेषु प्रपृथिव्या रिरिचाथे दिवश्च[3]।" इति याज्यार्धर्च यथाविधि पठित्वा विरमति ।[4]

ततः प्रतिप्रस्थातोत्तरत एवोपविश्य वसैकदेशं "घृतङ् घृतपावानः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- सौत्रामण्यां हविषो याज्यायाः पाठाय यः प्रैषः (मा०वा०शु०य०वे०म०सं०- 21/43, का०श्रौ०सू०- 19/6/24) स एवात्र देवतापदविशेषयोजनेन पठनीयो विज्ञायते । किन्तु कातीयहौत्रसूत्रपाठस्य(4/6) तदीयकर्कभाष्यपाठस्य भ्रंशाच्चात्र प्रमाणवाक्यस्य दुर्लभता जातास्ति ।

2- "हविषा" इति मैत्रायणीयसंहितायां(4/13/7) पाठः, "हविष" इत्येव ते ब्राह्मणे(3/6/11/1-2) पाठः ।

3- का०हौ०सू०- 4/9, शा०ऋ०म०सं०- 1/109/6.

4- "हविषो याज्याया अर्धर्चवस्येदावसाहोमात्" इति का०हौ०सू०- 4/9.

पिबत वसाऽ्वं वसापावानः पिबतान्तरिक्षस्स्य हविरसि स्स्वाहा"[1] इति मन्त्रेण जुहोति ।

ततो होता "प्र सिन्धुभ्य प्र गिरिभ्यो महित्त्वा प्प्रेन्द्राग्ग्नीविश्श्वाभुवनात्त्यन्न्या" इति याज्याया उत्तरमर्धर्चं यथाविधि पठति।

ततोऽध्वर्युर्जुह्वा जुह्ववदानानि जुहोति।

ततः प्रदक्षिणमावृत्य जुह्वा पृषदाज्यस्थाल्या पृषदाज्यं गृह्णन् "वनस्प्पतयेनुब्ब्रूऽहि" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "देवेभ्भ्यो वनस्पतये हवी षि हिरण्यपर्णप्प्रदिवस्त्ते अर्त्थम्।[2] प्रदक्षिणिद्द्रशनया नियूय ऋतस्स्य वक्षि पथिभी रजिष्ठैः" इति पुरोनुवाक्यां यथाविधि पठति ।

ततोऽध्वर्युरितरथावृत्याश्राव्य प्रत्याश्राविते "वनस्प्पतये प्प्रेष्ष्य"[3] इति मैत्रावरुणमाह ।

मैत्रावरुणश्च - "होता यक्षद्द्वनस्प्पतिम्"[4] इत्यादिकं प्रैषम[5]ाह[6]।

---

1- मा०वा०शु०य०वे०म०सं०- 6/19.

2- एवमेव मैत्रायणीयसंहितायाम् (4/13/7), तै०ब्राह्मणे च(3/6/11) पाठः । अतोऽर्थैति पाठश्चिन्त्यो भाति ।

3- का०श्रौ०सू०- 6/8/8.

4- मा०वा०शु०य०वे०म०सं० - 21/46.

5- वस्तुतस्तु मैत्रायणीयसंहितोक्तः (4/13/7), तैत्तिरीयब्राह्मणोक्तश्च (3/6/11/3-4) प्रैषो निरूढपशुबन्धे प्रयोज्यः ।

6- का०हौ०सू०- 4/9.

ततो होता "वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान्। वह[1] देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः"[2] इति याज्यां यथाविधि पठति।[3]

ततोऽध्वर्युरुत्तरतः पृषदाज्यं जुहोति।

ततोऽध्वर्युरुपभृतोऽवदानानि जुह्वामानयन् "अग्नये स्विष्टकृतेऽनुब्रूहि" इति मैत्रावरुणमाह।

मैत्रावरुणश्च - "पिप्रीहि"[4] इति पुरोनुवाक्यां यथाविधि पठति। ततोऽध्वर्युरतिक्रम्याश्राव्य प्रत्याश्राविते "अग्नये स्विष्टकृते प्रेष्य" इति मैत्रावरुणमाह।

मैत्रावरुणश्च "होता यक्षदग्निं स्विष्टकृतम्"[5] इत्यादिकं प्रैषम्[6] आह[7]।

ततो होता "अग्ने यदद्य"[8] इति याज्यां यथा --

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अत्र का०हौ०सू० लिखितपाठे "विहाद्" इति पाठोऽपि दृश्यते।

2- का०हौ०सू०- 54/9, मै०सं०- 4/13/7, तै०ब्रा० - 3/6/12/1.

3- तत्रैव, 4/6.

4- शा०ऋ०म०सं०- 10/2/1 (का०हौ०सू०- 4/6)

5- मा०वा०शु०य०वे०म०सं०- 21/47.

6- वस्तुतस्तु मैत्रायणीयसंहितोक्तः(4/13/7), तै० ब्राह्मणोक्तः(3/6/12/2) प्रैषो वाऽपि निरूढपशुबन्धे समुचितो दृश्यते।

7- का०हौ०सू०- 4/6.

8- शा०ऋ०म०सं०- 6/15/14.



विधि[1] पठति।[2]

ततोऽध्वर्युरग्नेरुत्तरार्धे जुहोति । उदकस्पर्श च करोति ।

ततोध्वर्युः प्रत्येत्य स्रुचौ सव्ये कृत्वोपविश्योत्तरतो वसाहोमहवन्या वशाशेषेण "दिशः स्वाहा"[3]इत्यग्नेः पूर्वभागे ;"प्रदिशः स्वाहा"[4] इति दक्षिणभागे, "आदिशः स्वाहा"[5] इति पश्चिमभागे, "विदिशः स्वाहा"[6] इति उत्तरभागे, "उद्दिशः स्वाहा"[7] इति मध्ये, "दिग्भ्यः स्वाहा"[8] इति पुनः पूर्वभागे होमं कृत्वा वसाशेषं निश्शेष कृत्वाऽऽगत्य स्वस्थाने स्रुचौ सादयति।

ततः सञ्चराभ्युक्षणम् । प्राशित्रसमर्पणम्। उदकोपस्पर्शनम् । इडाया होत्रे समर्पणम् । दक्षिणातिक्रमणम् । उडां प्रतिगृह्य होतुरङ्गुलिपर्वणोरन्जनम् । अवान्तरेडावदानम् । पुनरिडासमर्पणम् । होतुः पशिवडोपह्वानम् । ततो यजमान इडाभागत्वेन क्लोमानं ब्रह्मणे, अध्यूघ्नीं होत्रे, पुरीततमध्वर्यवे; वनिष्ठुमग्नीधे समर्पयति, अध्वर्युश्च यजमानाय प्लीहानं समर्पयति। ततो यथास्वभागमिडाया भक्षणम्।[9] ततः सर्वेषां ब्रह्मादिक्रमेण मार्जनम् । ततः पवित्रप्रतिपत्ति

ततोऽध्वर्युरुल्मुके समस्यानुयाजार्थ परिशेषितमिध्मकाष्ठमादाय

---

1- "अनिगदा याज्या" इति वचनात्(शा०श्रौ०सू० 5/19/23) प्राकृतोऽत्र निगदो न भवतीति अग्नीषोमीयपशौ भगवत्प्रसादशर्मणा टिप्पणी कृता।

2- का०हो०सू० 4/6.

3- 8- मा०वा०शु०य०वे०म०सं०- 6/19.

9- का०श्रौ०सू०(5/5/25-26) वचनादत्र मैत्रावरुणप्रतिप्रस्थात्रोरपीडाभक्षणमिति केचित् ।

अग्ग्नीदौपयजानङ्गारानाहर" इत्यग्नीधम्, "उपयष्टदटरूपसीद" इति प्रतिप्रस्थातारम्, "ब्रह्मन्नप्रस्त्थास्स्यामि" इति ब्रह्माणम्, "समिधमाधायाग्ग्नक्रमग्ग्नीत्त्समृड्ढि" इति अग्नीधमाह ।

ततोऽग्नीत् पूर्व शामित्राद् बहूनङ्गारान् ज्वलत एवाहृत्योत्तरस्यां वेदिश्रोण्यां परिसमूहनादिसंस्कृतायां निवपति । ततः समिधमाधायाग्निं सम्मार्ष्टि ।

प्रतिपस्थाता चोपयड्ढोमार्थं रक्षितं स्थूलं गुदनलिकातृतीयभागमवदा श्रोणिसमीपे उपयड्ढोमार्थमुपविशति ।

प्रति ततोऽध्वर्युः पृषदाज्योपभृतः पृषदाज्यं जुह्वां समानीय जुहूपृषदाज्योपभृतावादायातिक्रम्याश्राव्य प्रत्याश्राविते "देवेभ्यः प्रेष्य" इति मैत्रावरुणमाह ।

(1) मैत्रावरुणश्च --"देवम्बर्हिः सुदेवन्देवैः स्यात्त्सुवीरवँ वीरैर्व्वस्तीर्व्वृज्ज्येताक्तोः प्प्रभिभ्र्येतात्त्यन्न्यान्न्राया बर्हिष्म्मतो मदेम वसुवने वसुधेयस्स्य वेतु यज"[1] इति होतारं प्रेष्यति ।

होता च "देवम् बर्हिर्व्वसुवने वसुधेयस्स्य वेतु" - इति याज्यां यथाविधि पठति ।[2]

ततोऽध्वर्युः वह्नेः पूर्वभागे जुहोति ।

प्रतिप्रस्थाता च गुदशकलस्यैकादश भागं छित्त्वा तं भागं (समुद्दङ्-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ०सू० - 4/10, मै०सं० 4/13/8, तै०ब्रा० 3/6/13/1.

2- का०श्रौ०सू० 4/11, मै०सं० 4/13/8, तै०ब्रा० 3/6/14.

गच्छ स्वाहा"[1] इति मन्त्रेण हस्तेनैव श्रोणिस्थेऽग्नौ जुहोति।

ततोऽध्वर्युराश्राव्य प्रत्याश्राविते पुनः "प्रेष्य" इति मैत्रावरुणमाह।

(2) मैत्रावरुणश्च "देवीरद्वारः सङ्घाते विड्वीर्यामन्छिथिराद्-ध्रुवा देवहूतौ वत्स इमेनास्तरुण आमिमीयात्कुमारो वावनजातौ मैना अर्वा रेणुक्काटः पृणग् वसुवने वसुधेयस्य व्यन्तु यज"[2] इति होतारं प्रेष्यति ।

होता च "देवीरद्वारो वसुवने वसुधेयस्य व्यन्तु" इति याज्यां यथाविधि पठति ।[3]

ततोऽध्वर्युरग्नेमध्यभागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टस्य गुदशकलस्य दशमं भागं छित्त्वा तम्" अन्तरिक्षङ्गच्छस्वाहा"[4] इति मन्त्रेण पूर्ववज्जुहोति।

ततोऽध्वर्युराश्राव्य प्रत्याश्राविते पुनः "प्रेष्य" इति मत्रीवरुणमाह।

(3) मैत्रावरुणश्च "देवी उषासानक्कता व्यस्मिन्नन्यज्ञे प्प्रय-त्त्यह्ववेतामपि नूनन् दैवीर्व्विशः प्प्रायासिष्टटा सुप्प्रीते सुधिते वसुवने वसुधे यस्य वीतायूँ यज"[5] इति होतारं प्रेष्यति ।

होता च "देवी उषासनक्कता वसुवने वसुधेयस्य वीताम्"इति याज्या

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा०वा०शु०य०वे०मा०सं०- 6/21.

2-3- का०हौ०सू० 4/10, मै०सं० 4/13/8, तै०ब्रा० 3/6/13/1

5- मा०वा०शु०य०वे०मा०सं०- 6/21.

5- का०हौ०सू० - 4/10, मै०सं०- 4/13/8, तै०ब्रा० 3/6/13/1.

यथाविधि पठति।

ततोऽध्वर्युरग्नेर्मध्यभागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टगुदशकलस्य नवमं भागं छित्त्वा तं "देव सवितारङ्गच्छ स्वाहा"[1] इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः समानीयाश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(4) मैत्रावरुणश्च - "देवी जोष्ट्री वसुधिती ययोरन्न्याघा द्वेषांसि यूयवदान्न्यावक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतायूँ यज"[2] इतिह होतारं प्रेष्यति ।

होता च - "देवी जोष्ट्री वसुवने वसुधेयस्य वीताम्" इति याज्यां यथाविधि पठति ।[3]

ततोऽध्वर्युरग्नेर्मध्यभागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टगुदशकलस्याष्टमं भागं छित्त्वा तं "मित्रावरुणौ[4] गच्छ स्वाहा" इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

---

1- मा०वा०शु०य०वे०मा०सं०- 6/21.

2- का०हौ०सू०- 4/10, मै०सं० 4/13/8, तै०ब्रा० 3/6/13/1.

3- तत्रैव, 4/11.

4- मा०वा०शु०य०वे० मा०सं० - 6/21.

(5) मैत्रावरुणश्च -- "देवी उर्ज्जाहुती इषमूर्ज्जमन्न्यावक्षत्तस-ग्ग्ध सपीतिमन्न्या नवेन पूर्व्वन्दधमाना स्स्याम पुराणेन नवन्तामूर्ज्जाहुती ऊर्ज्जयमाने अधातावृ वसुवने वसुधेयस्स्य वीतायूँ यज"[1] इति होतारं प्रेष्यति।

होता च "देवी ऊर्ज्जाहुती वसुवने वसुधेयस्स्य वीताम्" इति याज्यां यथाविधि पठति।[2]

ततोऽध्वर्युरग्नेर्मध्यभागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टगुदशकलस्य सप्तमं भागं छित्त्वा तम् "अहोरात्रे गच्छ स्स्वाहा" इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः पुनराश्राव्या प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(6) मैत्रावरुणश्च --"देवा दैव्व्या होतारा पोतारा नेष्टारा हताघशं सावाभरद्वसू वसुवने वसुधेयस्य वीतायूँ यज"[3] इतिहोतारं प्रेष्यति ।

होता च "देवा दैव्व्या होतारा वसुवने वसुधेयस्स्य वीताम्" इति याज्यां यथाविधि पठति।[4]

ततोऽध्वर्युरग्नेर्मध्यभागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टगुदशकलस्य षष्ठं भागं छित्त्वा तं "छन्दांसि

---

1- का०हौ०सू० 4/10, मै०सं० 4/13/8, तै०ब्रा० 3/6/13/1.

2- का०हौ०सू० 4/11.

3- तत्रैव, 4/10, मै०सं० 4/13/8, तै०ब्रा० 3/6/13/1.

4- का०हौ०सू० 4/11.

गच्छ स्वाहा"[1] इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः समानीयाश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(7) मैत्रावरुणश्च -- "देवीस्तिस्रस्तिस्रो देवीरिडा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत्सरस्वतीम रुद्रैर्यज्ञमावीदिहैवेडया वसुमत्या सधमादम् मदेम वसुवने वसुधेयस्य व्यन्तु यज"[2] इति होतारं प्रेष्यति ।

होता च "देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तु इति याज्यां यथाविधि पठति ।[3]

ततोऽध्वर्युरग्नेर्मध्यभागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टगुदशकलस्य पञ्चमभागं छित्त्वा तं "द्यावापृथिवी गच्छ स्वाहा"[4] इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(8) मैत्रावरुणश्च --"देवो नराशंसस्त्रिशीर्षा षडक्षः शतमिदेनं शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज"[5] इति

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- मा०वा०शु०य०वे०मा०सं०- 6/21.

2- का०हो०सू० 4/10, मै०सं० 4/13/8, तै०ब्रा० 3/6/13/1.

3- तत्रैव 4/11, मै०सं० 4/13/8, तै०ब्रा० 3/6/14.

4- मा०वा०शु०य०वे०मा०सं०- 6/21.

5- का०हो०सू० 4/10, 11.

होतारं प्रेष्यति।

होता च "देवो नराशंसो वसुवने वसुधेयस्य वेतु" इति याज्यां यथाविधि पठति।[1]

अध्वर्युश्चाग्नेर्मध्यभागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टगुदशकलस्य चतुर्थं भागं छित्त्वा तं "यज्ञं गच्छ स्वाहा"[2] इति मन्त्रेण पूर्ववज्जुहोति ।

ततोऽध्वर्युः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(9) मैत्रावरुणश्च "देवो वनस्पतिर्व्वर्षप्रावा घृतनिर्णिग्द्यामग्रेणास्पृक्षदान्तरिक्षम्मध्येनाप्राः पृथिवीमुपरेणादृंहीद्वसुवने वसुधेयस्य वेतु यज"[3] इति होतारं प्रेष्यति ।

होता च "देवोवनस्पतिर्व्वसुवने वसुधेयस्य वेतु" इति याज्यां यथाविधि पठति[4]।

अध्वर्युश्चाग्नेः पश्चाद्भागे जुहोति ।

प्रतिप्रस्थातापि अवशिष्टगुदशकलस्य तृतीयं भागं छित्त्वा तं "सोमं गच्छ स्वाहा"[5]इति मन्त्रेण पूर्ववज्जुहोति ।

---

1- का०हौ०सू० 4/10/, 11.
2- मा०वा०शु०य०वे०सं०- 6/21.
3- का०हौ०सू०- 4/10, 11
4- तत्रैव.
5- मा०वा०शु०य०वे०म०सं०- 6/21.

ततोध्वर्युः समानीय पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह ।

(10) मैत्रावरुणश्च -- "देवम्बर्हिर्व्वारितीनान्निधेधासि प्प्रच्युतीनामप्प्रच्युतन्निकामधरणम्पुरुस्प्पार्हय्ँ[1] यशस्स्वदेना[2] बर्हिषान्न्या बर्ही ष्यमिष्ष्याम वसुवने वसुधेयस्स्य वेतु यज"[3] इति होतारं प्रेष्यति ।

होता च "देवम्बर्हिव्वारितीनार्वं वसुवनेय वसुधेयस्स्य वेतु" इति याज्यां यथाविधि पठति ।[4]

ततोऽध्वर्युरग्नेः पश्चाद्भागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टगुदशकलस्याधं छित्त्वा तद् "दिव्व्यन्नभो गच्छ स्स्वाहा"[5] इति मन्त्रेण पूर्ववज्जुहोति ।

ततोध्वर्युः पुनराश्राव्य प्रत्याश्राविते "प्रेष्य" इति मैत्रावरुणमाह।

(11)मैत्रावरुणश्च[6] "देवो अग्ग्निः स्स्विष्टकृद्"[7] इत्यादिकं प्राकृता-

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1- "पुरुषस्पार्हम्" इति मैत्रायणीयसंहितायाम् - 4/13/8.

2- "यशस्वदेना" इति मै0सं0 - 4/13/8, तै0ब्रा0 - 3/6/13/1.

3-4- का0हो0सू0 - 4/10, 11.

5- मा0वा0शु0य0वे0मा0सं0- 6/21.

6- "पर्यग्नीकरणीयस्तोक्यमनोतासूक्तमनुवाकयाः प्रैषाश्च मैत्रावरुणस्यातोन्यद् होतुः" इति का0हो0सू0 - 4/11.

7-का0हौ0सू0 - 1/7.

नुयाजस्विष्टकृद्याज्यामेव "यज" इत्यन्ते योजयित्वा पठति।

होता च प्राकृतामेवानुयाजस्विष्टकृद्याज्यां पठति।[1]

ततोऽध्वर्युरग्नेः पश्चाद्भागे जुहोति ।

प्रतिप्रस्थाता चावशिष्टं गुदशकलम् "अग्ग्नवॅ वैश्श्वानरङ्•गच्छ स्स्वाहा"[2] इति मन्त्रेण पूर्ववज्जुहोति । ततो "मनो मे हार्दिदं यच्छ"[3] इति मुखमुपस्पृशति[4]।

ततोऽध्वर्युः प्रत्येत्योत्तरत उपविश्य समानीय "देवेभ्यः स्वाहा"[5] इति प्राचीमाहुतिं जुहोति । ततो "दिवन्ते धूमो गच्छतु स्स्वज्जयोतिः पृथिवीम्भस्स्मनापृण स्स्वाहा"[6] इति मन्त्रेण जुह्वा स्वरूं जुहोति ।

ततः स्रुचावासाद्याज्योपभृत उपरि पृषदाज्योपभृतं निधाय वसाहोमहवनीं जुह्वोरुपरि निधायाध्वर्युर्व्यूहति। "इन्द्राग्ग्न्योर्व्वनस्प्पतेरुज्जितिम्" इति ह जुह्वाः, "इन्द्राग्ग्नी वनस्प्पतिस्तत्तमपनुदन्तु" इति उपभृतो व्यूहने प्रयोगविशेषः।[7] ततो जुहूः उपभृतौ चाभ्युक्ष्य परिध्यन्जनम् ।

ततोऽध्वर्युः "सूक्क्तवाकाय सूक्क्ता प्प्रेष्ष्य" इति मैत्रावरुणमाह।

---

1- का०हो०सू०- 1/7.

2-3- मा०वा०शु०य०वे०म०सं०- 6/21.

4- का०श्रौ०सू०- 6/9/11.

5- देवयाज्ञिकपद्धतावेवमुक्तम् ।

6- मा०वा०शु०य०वे०म०सं०- 6/21.

7- का०श्रौ०सू०- 6/9/13.

मैत्रावरुणश्च "अग्निमद्य"[1] इत्यादिकं सूक्तवाक्प्रैषमाह[2]।

ततो होता "इदन्द्यावापृथिवी"[3] इत्यादिकं सूक्तवाकं यथाविधि पठति।[4]

ततः प्रस्तरादानादि धुरिनिधानान्तम् । तत्र प्रस्तरमध्यस्योपभृद्द्वयान्जनम्, होतुर्मैत्रावरुणस्य च शंयुवाकपाठः, तदन्ते मैत्रावरुणस्य स्वदण्डहोम आहवनीये, सर्वाभिः स्रुग्भिः संस्रवहोमः, "घृताच्च्यस्त्य धुर्यौ पात सुम्म्नास्त्य सुम्म्ने मा धत्त" इत्यूहश्चेति विशेषाः । ततो वेद्यालम्भः ।

ततः पत्नीसंयाजार्थं स्फ्यमाददानो होता स्रुगसी आददानोऽध्वर्युः जाघनीमाददानोग्नीध्रश्चेति त्रयो गार्हपत्यं प्रति गच्छन्ति । तत्र चान्यत् सर्वं प्रकृतिवत् । सोमयागे त्वष्टृयागे च जाघन्या औपरिष्टभागादेव चतुश्चतुरवदानम् । तृतीययागे उत्तानाया जाघन्न्या अन्तःप्रदेशाच्चतुरवदानम् । गृहपतियागार्थं जाघनीं पर्यावर्त्यन्युब्जां कृत्वा तत औपरिष्टभागादवदानम् । ततो जाघनीं पर्यावर्त्योत्तानां कृत्वा तस्या अन्तत इडाया अवदानम् । नात्र पर्वान्जनम् । न चाप्यदब्धाहुतिः । सव्येनावृत्य दक्षिणाग्निहोमः । ततो वेद्योक्त्रविमोकौ । ततो वेदस्यावेदेः स्तरणम् होतृकर्तृकम् ।

---

1- मा०वा०श्रु०य०वे०म०सं०- 21/59-61; वस्तुतस्तु मै० संहितोक्तः (4/13/9), प्रैषो निरूढपशुबन्धे युक्तः ( तै०ब्रा०- 3/6/15/1)

2- का०हौ०सू० 4/11.

3- तत्रैव, 1/8.

4- देवताकीर्तने यथायथमूहः कर्तव्यः ।

ततस्त्रीणि समिष्टयजूंषि ध्रुवयैव जुहोति। देवागातुविद[1] इति प्रथमम्, यज्ञ यज्ञमिति[2] द्वितीयम्, एषते यज्ञो यज्ञपत[3] इति तृतीयम् । अथवा यॉ आवह[4] इत्यादिभिस्त्रीणि समिष्टयजूंषि जुहोति ।

ततो बर्हिहोमः ।

ततो हृदयशूलमादायाध्वर्युस्तडागादिस्थमुदकं प्रतिगच्छति । तेन सहान्येऽपि यान्ति सर्वे। तत्र प्राप्याध्वर्युर्जले प्रविश्य शुष्कार्द्रसन्निधौ "शुगसि तम्"[5] इत्यादिना मन्त्रेण हृदयशूलमुपगूहति । ततः सर्वे "सुमित्रियानः"[6] इत्यादिना मन्त्रेणाप उपस्पृशन्ति।[7]

---

1- मा०श०शु०य०वे०मा०सं०- 8/21.

2- तत्रैव, 8/22.

3- तत्रैव, 8/22.

4- तत्रैव, 8/19.

5- "शुगसितमभिशोचयोऽस्मान् द्वेष्टि यन्च वयन् द्विष्मो (का०श्रौ०सू० 6/10/9) मापो मौषधी र्हिं सीरद्धधाम्नो धाम्नो राजॅस्ततो वरुण नो मुन्च । यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण-नोमुन्च" (मा०वा०शु०य०वे०मा०सं०- 6/22) इति हृदयशूलोपगूहनमन्त्रः ।

6- मा०वा०शु०य०वे०मा०सं०- 6/22.

7- का०श्रौ०सू०- 6/10/5.

ततो यजमानः प्रत्यागत्य तीर्थेन प्रविश्याहवनीये "देवाना समिदसि"[1] इति मन्त्रेण समिधमादधाति । पत्नी च गार्हपत्ये[2] तूष्णीं समिधमादधाति ।

ततः प्रणीताविमोकः, राक्षसभागप्रक्षेपः, ततः पूर्णपात्रनिनयनाद्यावहवनीयोपस्थानान्तम्। ततो यजमान उत्तरवेदेः पश्चात् स्थित्वा व्रतविसर्गं कुरुते ।

ततो ब्रह्मयजमानौ मध्यमाहवनीयसमीपे दक्षिणत उपविशतः । अध्वर्युश्चाज्यं संस्कृत्य चतुर्गृहीतं गृहीत्वा समिधमादाय गत्वा मध्यमाहवनीयं परिस्तीर्य समिधमाधाय "उरू विष्णो"[3] इत्यादिना मन्त्रेण जुहोति। अस्या आहुतेः समृद्ध्यर्थं यजमानोऽध्वर्यवे यथोत्साहं दक्षिणां ददाति ।

ततो ब्राह्मणतर्पणप्रैषः । एकस्य तर्पणम्। ततः कर्मापवर्गसमिदाधानम् । ततः शतस्य ब्राह्मणानां भोजनम् । अग्निसमारोहणं कृत्वा गृहे गत्वा पौर्णमासेष्ट्यादिकम् । ततो भोजनम् ।

----

- - - - - - - - - - - - - - - - - - - - - - - -

1- मा०वा०शु०य०वे०म०सं० - 8/27.

2- मध्याहवनीये इति बोध्यम् ।

3- मा०वा०शु०य०वे०म०सं०- 5/38, 41.

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

इदमिदानीं सोमयागस्वरूपं निरूपयितुमारभ्यते। सोमयागः चतुष्प्रकारः- एकाहः, अहीनः, साद्यस्क्रः, सत्रं चेति। एका, तिस्रः, चतस्रः, द्वादश, अपरिमिता वा दीक्षाः सोमयागे भवन्ति। एकस्मिन् दिने कर्तव्यतया विहिता नियमा यथावदनुष्ठिता एका दीक्षा। ततो यावद्वारं दिनान्तरेष्वभ्यस्तास्ताव-त्संख्याका दीक्षा भवन्ति। ततो दिनत्रये, षट्सु द्वादशसु वा दिनेषु उपसदो नुष्ठेयाः। तत्र एकाह ज्योतिष्टोमादौ तिस्रः, चयने षट्, अहीनादौ द्वादशो-पसद इति विवेकः। तत्र दीक्षोपसदामनेकदिनानुष्ठेयत्वे पि एकस्मिन्नेव दिने सोमयागानुष्ठानं यत्र स एकाहः। सोमयागस्य द्वित्रादिषु दिनेषु पुनः पुरा-वृत्य अनुष्ठानं यत्र सो हीनः। तत्र त्रिरात्रप्रभृति दशरात्रपर्यन्ता अहीनाः। एकादशद्वादशरात्रावुभावहीनसत्रोभयात्मकौ। द्वादशरात्रस्यैव उभयात्मकतां केचि-दभिप्रयन्ति। त्रयोदशरात्रप्रभृतयः सहस्रसंवत्सरपर्यन्ताः सत्राण्युच्यन्ते। एकस्मिन्नेव दिने संकल्पप्रभृत्यवभृथान्तमनुष्ठानं यस्य स साद्यस्क इत्युच्यते।

सत्राण्यपि द्विविधानि- रात्रिसत्राणि अयनसत्राणि चेति। तत्र द्वादश-रात्रप्रभृति शतरात्रपर्यन्तानि रात्रिसत्राणि। ततः प्रभृत्ययनसत्राणि इति सामान्य रूपम्। इदानीं सर्वसोमयागप्रकृतिभूतस्य अग्निष्टोमाख्यस्यैकाहस्य सर्वसोमयागेभ्यः पूर्वमनुष्ठेयस्य अनुष्ठानप्रकारः संक्षेपतो निरूप्यते। तस्य आरम्भे पक्षद्वयम् - यस्य अनाहिताग्नेः सोमयागानुष्ठाने तीव्रेच्छोदिता स वसन्ततौ सोमयागोचितं कमलं निर्धार्य ततः पूर्वस्यां सप्तम्यामष्टम्यां दशम्यां वा दीक्षापक्षानुसारेण संकल्प्य अग्न्याधानार्थम्, अग्न्याधानविधिना अग्नीना-धाय समनन्तरमेव सोमयागार्थं संकल्प्य तं यथावदनुतिष्ठेत् इत्येकः पक्षः। न न अत्र पदोआधानोक्तकालापेक्षा। अथ वा आधानार्थं विहिते काले यथावद-ग्नीनाधाय, ततो ग्निहोत्रदर्शपूर्णमासपशुचातुर्मास्यादीन् यागान् यथाकालमनु-तिष्ठन्, लब्धायां सामग्रीसम्पत्तौ वसन्ततौ सोमयागमनुतिष्ठेद् इत्यपरः

स्तोत्राणि शस्त्राणि च भवन्ति । इम एव त्रयो रात्रिपर्याया इत्युच्यन्ते। रात्रावेव स्तूयमानत्वादेषां रात्रिस्तोत्राणीति संज्ञा। तेषां पर्यायो रात्रिपर्याय इति। षोडशिग्रहानन्तरं ग्रहो नास्ति, किं तु चमसा एव । अत्र सर्वेषां चमसगणनामिन्द्र एव देवता ।

एवं पर्यायेषु समाप्तेषु प्रतिप्रस्थाता अश्विदेवताकं द्विकपालं पुरोडाशं व्रीह्यानयनप्रोक्षणावहननपेषणादिपूर्वकं श्रपयित्वा वेधामासादयेत् । ततो ध्वर्यु-होतृचमसमुख्याश्चमसानुन्नीय सन्धिस्तोत्रमारम्भयेत् । समाप्ते तस्मिन् होता आश्विनशस्त्रं प्रारभेत् । तत्सूर्योदयानन्तरमेव समापयेत् । ततः पूर्व शस्त्रसमाप्तौ याः काश्चिदृचः शंसन्नेव सूर्योदयं प्रतीक्षेत । उदित एव सूर्ये शस्त्रस्यान्तिमामृचं पठेत् । उदयानन्तरं समाप्ते शस्त्रे, अध्वर्युहोतृचमसं चमसाध्वर्यवश्चान्यांश्चमसान् गृहीत्वा आश्रावणायनन्तरं जुहुयुः । अस्मिन्नेव समये प्रतिप्रस्थाता पूर्वसंपादितमाश्विनपुरोडाशं जुहुयात् । अत्र सर्वेषां चमसानां पुरोडाशस्य च अश्विनौ देवता। समग्रस्यैव पुरोडाशस्य होमो न अवदानादि कृत्वेति विशेषः । ततश्चमसभक्षणम् । अत्र होता वषट्कर्ता। अवशिष्टं प्रकृतिवत्समाप्य अवभृथं कुर्यात्। सर्वत्र अवभृथानन्तरम् उदयनीयेष्टिः, अनुबन्ध्यास्थाने मैत्रावरुण्यामिक्षा, उदवसानीया च प्रकृतिवदेवेति ।

एवं चतसृणां सोमसंस्थानां स्वरूपम्। तच्च संक्षेपेण निरूपितम् । एताभ्य एव चतसृभ्यस्सोमसंस्थाभ्यो ग्रहचमसस्तोत्राणामावापोद्वापादिना अन्यास्तिस्रस्संस्था प्रसूताः । ताश्च अत्यग्निष्टोम-वाजपेय-अप्तोर्यामनाम्ना व्यवहारं भजन्ते ।

अत्यग्निष्टोमसंस्था पञ्चमी

तत्र, अग्निष्टोमस्तोत्रानन्तरम् उक्थ्यस्तोत्राणि त्रीण्यकृत्वा षोडशि स्तोत्रशस्त्रादिप्रचारो यत्र क्रियते सा अत्यग्निष्टोमसंस्थेत्युच्यते । एवं च अग्निष्टोम एव तदुत्तरं षोडशिग्रहचमसस्तोत्रादीनामनुष्ठाने सा अग्निष्टोमसंस्थैव संस्थान्तरं भजत इति फलितम् । अत्यग्निष्टोमसंस्थायामखर्यां

क्षत्रियं एवाधिकारी न ब्राह्मणवैश्याविति केचित् ब्रूवते । परमाश्वलायना-
दिभिः त्रैवर्णिककर्तृकसंस्थामध्ये स्या अपि पाठात् तयोरप्यत्राधिकारं मन्वाना
याज्ञिकास्तथैवानुतिष्ठन्ति ।

वाजपेयसंस्था षष्ठी

वाजपेयसंस्थायां प्रातर्माध्यन्दिनसवने अग्निष्टोमवदेव । तृतीयसवने-
पि षोडशिग्रहस्तोत्रान्तं षोडशिवदेव । तदनन्तरं वाजपेयसंज्ञकमेकं स्तोत्रम् ।
एकश्चमसगणो होतृचमसमुख्यः । स्तोत्रं च सप्तदशस्तोमकम् । शस्त्रं होतुरेव।
अयं संस्थान्तर्गतः संस्थास्येव गण्यते । अतस्संस्थावाजपेय इत्यपि व्यवहारो
स्य। नापमापस्तम्बबोधायनादिभिर्विहितः न वा याजुषीषु शाखासु विधान-
मस्य दृश्यते । ताण्ड्यब्राह्मणे छन्दोगसूत्रे च अयमेव विहित इति कृत्वा केचि-
द्याज्ञिका अनुतिष्ठन्ति । तैत्तिरीयायुक्तो वाजपेय इतो भिन्नः । तत्र सप्त-
दश दीक्षाः, तिस्र उपसदः एका सुत्या । सप्तदश प्राजापत्याः सवनीयपशवः।
सप्तदशारत्निर्यूपः । तं सप्तदशभिर्वासोभिर्वेष्टयेत् । सप्तदश सोमग्रहाः
प्रजापतिदेवताकाः । तथा सुराग्रहा अपि सप्तदश। इदानीं याज्ञिकाः
सुराग्रहस्थाने पयोग्रहाननुतिष्ठन्ति । सुत्यादिने सर्वे ऋत्विजो हिरण्यमाला
धारयेयुः । ऋत्विजभ्यः सप्तदश सप्तदश स्याश्वगजशकटदासीदासनिष्कगो
जाविन्दुन्दुभीनां दक्षिणात्वेन दद्युः । सवनीयपशुकाले प्राजापत्यैरसह ऋतुपशु-
नापि पन्यौपाकृत्य पर्यग्निकरणान्तं कृत्वा प्रथमतश्चतुरः ऋतुपशूनुपाकृत्य
वपान्तं कृत्वा विरम्य ब्रह्मसामकाले वशिष्टैः पशुभिः प्रचरेत् । ततः सप्त-
दशशरावपरिमित नैवारचरुं निरूप्य तेन प्रचरेत् । सर्वमन्यत्प्रकृतिवत् । एष
आप्तो वाजपेयः । इतो प्यन्यः कुरुवाजपेयः कश्चिदस्ति । तस्याङ्गेषु
बहुवन्ति वैलक्षण्यम् । तत्सूत्रादितो वगन्तव्यम् ।

अप्तोर्यामसंस्था सप्तमी

अतिरात्रसंस्थावद् रात्रिस्तोत्राणि सन्धिस्तोत्रं च यथावदनुष्ठाय तदनन्तरं चत्वारि स्तोत्राणि अधिकतया यत्रानुष्ठीयन्ते सा अप्तोर्यामसंस्था। अप्तोर्यामशब्दव्युत्पत्तिः श्रुतावेवं वर्णिता- पुरा कदाचिद् प्रजापतिः पशूनसृजत् । सृष्टा स्ते ततो पगताः ।ताननेन क्रतुना आप्नोत् । यस्मादाप्नोत् तस्मादप्तोर्यामत्वमिति । अप्तोः प्राप्तः यामो यज्ञः अप्तोर्याम इति । एवं च सन्धिस्तोत्रान्तम् एकोनत्रिंशतं स्तोत्राण्यनुष्ठाय तदनन्तरं चत्वारि स्तोत्राणि तदर्थं चत्वारश्चमसगणा अप्यनुष्ठेयाः । तेष्वतिरात्रवदेव प्रथमद्वितीयगणयोरध्वर्युः तृतीयचतुर्थयोः प्रतिप्रस्थाता च कर्तारौ । इयमप्तोर्यामसंस्थेत्युच्यते ।

चयनम्

अथेदानीमग्निचयनं निरूप्यते। पशुयागेषु सोमयागेषु चोत्तरवेदिरूपता तत्रैव आहवनीयं निधाय सर्वे होमाः कर्तव्या इत्ययमेकः पक्षः । तस्या एवोपरि स्थण्डिलविशेषं कञ्चन निर्माय तदुपर्याहवनीयमवस्थाप्य तत्र होमा इत्यपरः पक्षः । तत्र तादृशस्थण्डिलनिर्माणप्रकारः चयनम् इति, निर्मितं, स्थण्डिलम्, चितिः इति च व्यवह्रियते वैदिकसम्प्रदाये। सा चितिर्द्विविधा-क्षुद्रचितिः, महाग्निचितिश्चेति । शर्कराख्यैः क्षुद्रपाषाणैः शतोपशतसंख्याकैः निर्मीयमाणा अल्पाकारा क्षुद्रचितिः । बृहतीभिस्सहस्रसंख्याकाभिरिष्टकाभिः बहुविधाभिरखण्डिताभिस्तत्तदाकारतया निर्मीयमाणः स्थण्डिलविशेषो महाग्नि-

---

1- षोडशी, अर्धा, पादा, पक्षा, पक्षमध्य, पक्षाग्या इति बहुविधा इष्टकाः । गार्हपत्यचितेरिष्टका एतदपेक्षया विभिन्न प्रकारा एव भवेयुः

चितिः । तत्र क्षुद्रचितयः षट् । तासां विधयो मन्त्राश्च तैत्तिरीयारण्यके तैत्तिरीयब्राह्मणान्तर्गते काठकाख्ये भाग एव च दृश्यन्ते। नान्यत्र । तासां विनियोगं प्रायेण निरूढपशुयागादौ एव याज्ञिकाः कुर्वन्ति । ताश्च एकदिनसाध्या एव। तत्साधनभूतानां क्षुद्रपाषाणानामत्यल्पत्वेन तैर्भूमिस्मरि स्थण्डिलनिर्माणस्य अशक्यतया उत्तरवेदिमध्ये वटं कृत्वा तत्रैव तानुपधाय तदुपर्येव आहवनीयमुपधाय यजेत् । महाग्निचितयस्तु भूमेरुपर्येव क्रियन्ते । ताश्चैकादशविधास्तैत्तिरीय उक्ताः । तासामेव च प्रमाणविवर्धनैकोत्तरशतविधत्वं वाजसनेयिशाखायामुक्तम्, आपस्तम्बादिभिर्निरूपितं च। परं तासु सर्वासु श्येनचितिरेव सुवर्णचित्यपरनामधेया प्राथम्यं प्राधान्यं च आवहति । अतः सैव याज्ञिकैर्यथावदनुष्ठीयते सति सामग्रीसमवधाने । अन्यास्तु नाममात्रावशिष्टाः। यथावदवगमोऽपि न तासां सुलभः । तैत्तिरीये शाखान्तरेषु च श्येनचितिमधिकृत्यैव प्रवृत्ता मन्त्रा ब्राह्मणानि च । सा श्येनचितिराकाशे पक्षौ प्रसार्य उयमानपक्ष्याकृतिश्चीयते । तत्र पंच प्रस्ताराः । एकैकस्मिन् प्रस्तारे शतद्वयमिष्टकानाम् । पन्चसु प्रस्तारेषु मिलित्वा सहस्रमिष्टका भवन्ति । स्वल्पमस्या अन्ते पृथक् चित्ररूपेण प्रदर्शितम् । अत्र सर्वेष्वपि प्रस्तारेषु नैकरूप्येणेष्टकानामुपधानम् । किं तु प्रथमतृतीययोरिष्टकैकल्पतया, द्वितीयचतुर्थयोरेकरूपतया। तथा सत्येव प्रस्ताराणां परस्परं संलग्नता स्यात् । इयमाहवनीयनिधानार्था चितिः । एवमेव गार्हपत्यार्थमपि चितिः सम्पादनीया । सापि प्रथमानुष्ठाने पन्चप्रस्तारैव । प्रमिष्टकानामेकल्पतैव तत्र । दीर्घचतुरस्राकारा च सा, न पक्षिरूपा। एवं पन्चभिः प्रस्तारैर्निर्मिता चितिर्जानुदघ्नप्रमाणा स्यात् । त्रिंशदङ्गुलं जानुदघ्नप्रमाणमिति सूत्रकाराः । तस्य पन्चमो ऽंशः इष्टकानामुत्सेधः । एवं च षड्ङ्गुलोन्नता एका इष्टका भवति। तिर्यक्प्रमाणानि इष्टकाचित्र एव तत्तदिष्टकास्वरूपनिकटे उल्लिखितानि । एवं सामान्यतः चयनसम्बन्धिनो विधयाः कथिताः । तदनुष्ठानप्रकारः संक्षेपतो निरूप्यते।

चयने उखासम्भरणम्

यस्मिन् वसन्तेऽग्निं चेष्यमाणो भवति ततो वत्सरात् पूर्वममावास्यायां पौर्णमास्यां वा प्रातरग्निहोत्रं हुत्वा चयनार्थं संकल्पं कुर्यात् – साग्निचित्येन

ज्योतिष्टोमेन सर्वपृष्ठ-सर्वस्तोम-अप्तोर्यामादिना वा यक्ष्य इति । ततः प्रकृत्यग्निष्टोमादिवत् सोमप्रवाकवरण-मधुपर्कदानादि देवयजनयाचनान्तं कृत्वा, गार्हपत्यादग्निं गृहीत्वा आहवनीयायायतने निक्षिप्य प्रज्वलय्य देवेभ्यः अग्नये सवित्रे च दर्शिचन होमान् हुत्वा खनित्रम्, अश्वरशनां, गर्दभरशनां च गृहीत्वा ताभ्यामश्वं गर्दभं च बद्ध्वा, कृष्णाजिनं पुष्करपर्णं मुञ्जतृणनिर्मितां रज्जुं, कमण्डलुं स्रुवं जुहूं हिरण्यं च गृहीत्वा, अश्वं पुरतो गमयन्तः अध्वर्युब्रह्मयजमानाः तत्पश्चात् गर्दभसहिता उखानिर्माणयोग्या यत्र मृदस्ति तत्र गत्वा तत्र वल्मीकमुद्धृत्य तमुपस्थाय मृत्खननस्थानमश्वेन आक्रमय्य, अश्वपादनिक्षेपस्थले हिरण्यं निधाय हुत्वा मृत्खननमभ्र्या त्रिः परिलिख्य तं देशं खात्वा, तत उद्गतां मृदं पुष्करपर्णे विवेष्ट्य, मृत्खनन-स्योत्तरभागे कृष्णाजिनमास्तीर्य तत्र पद्मपत्रमुत्तानं वितत्य तत्र मृदं सम्भृत्य मृदमभिमृश्य मृत्खने प आनीय, दन्तैर्दन्तरेण अभिपूर्य समृदं कृष्णाजिनमादाय मौञ्ज्या रज्ज्वोपनह्य, हुत्वा गर्दभस्य पृष्ठ आधाय, अश्वरशनां गर्दभ-रशनां च गृहीत्वा पूर्ववत् अग्रे अश्वं गमयन्तः त्वरमाणाः प्रत्यगत्य विहार-स्योत्तरभागे परिश्रिते स्थाने बद्धामेव मृदं पुष्पफलवतीष्वोषधीषु निक्षिप्य, बन्धनं विसृज्य, तत्र मृदि उखादृढीकरणार्थानि स्फुटितघटादिशकलानि, वेणवङ्गारान्, व्रीहितुषान्, पलाशकषायं, शर्कराः, पिष्टाः, कृष्णाजिना-जलोमानि, अन्यानि च तादृशानि वस्तूनि सम्मेत्य, स्थापयेयुः । ततो यजमानस्तां मृदम् अध्वर्यवे दद्यात् । ततो ध्वर्युः स्वयमेवोखां निर्मायात् । सा च चतुरश्रा परिमण्डला वा प्रादेशमात्रोर्ध्वप्रमाणा, अरत्निमात्रतिर्यक्प्रमाणा, बिलस्य अधस्तात् दव्यङ्गुलपरिमिते देशे रास्नावती दिचतुष्कदस्तनान्विता च कार्या। ततस्तामुत्तरतः सिकतासु प्रतिष्ठाप्य, मित्राय विनिवेष, तस्या एव मृदः अषाढ्कयाभिका चतुरश्रां रेखात्रययुतामिष्टकां निर्माय, गार्हपत्या-दग्निं गृहीत्वा तमश्वशकृता प्रदीप्य तेनोखां धूपयित्वा तमग्निं विसृज्य, अग्रेण गार्हपत्यमवटं खात्वा, तत्रोखापाकार्हाणि वस्तूनि प्रक्षिप्य, तदुपर्युखाम-वधाय, तथा तहाषाढाख्यामपीष्टकां निक्षिप्य, पाकसाधनैर्वस्तुभिः प्रच्छाद्य, गार्हपत्यादग्निमाहृत्य, तदुपर्यभ्याधाय, ते तथा पक्त्वा यथा लोहिते भवतः,

उद्वास्य, अजापयसोखां सिक्त्वा श्लक्ष्णीकृत्य, उखामषाढेष्टकां च सुरक्षितं निक्षिपेत् ।

चयने वायव्यपशुयागः

तदनन्तरं वायुदेवताकं पशुयागमनन्तरपूर्णिमायाम् अनन्तरामावास्यायां वा निरूढपशुबन्धयागवत् चयनाङ्गतया अनुतिष्ठेत् । अत्र वायुर्नियुत्वान् देवता। पशुपुरोडाशे तु प्रजापतिर्देवतेति विशेषः[1] । पशोः शिरश्छित्वा मृदा प्रलिप्य सुरक्षितं निदध्यात् । अस्येष्टकोपधाने उपयोगो भविष्यति । ततोऽग्निष्टोमवत् प्रवर्ग्यसम्भरणं कुर्यात् । तच्च पर्वण्येव भवति । तदानीमेव चनोपयिका इष्टका निर्माय अग्निं मथित्वा तेन ताः पचेत् । यथा ताः कृष्णा वक्रा अतिपक्वा अपक्वा वा न भवेयुः, यथा च लोहितवर्णा एव स्युः तथा पक्तव्याः । ततो दीक्षारम्भः । तत्र दीक्षाविषये दिनत्रयप्रभृति संवत्सरपर्यन्ता बहवः पक्षाः श्रुताः । दिनत्रयदीक्षापक्षे वासन्त्यां शुक्लषष्ठ्यां दीक्षारम्भः कर्त्तव्यः । पक्षान्तरेषु यथा वासन्त्यां पूर्णिमायां सुत्या स्यात् तथा आरम्भः कार्यो दीक्षायाः ।

उख्याग्निनिष्पादनधारणादि

यस्मिन् दिने दीक्षारम्भं चिकीर्षति तस्मिन् दिने प्रातरग्निहोत्रं कृत्वा, नान्दीश्राद्धं यागादीनां द्रव्यविभागनिर्देशं च कृत्वा गृह एव दीक्षणीयेष्टिं कुर्यात् । सा च त्रिहविष्का – अग्नये वैश्वानराय द्वादशकपालः पुरोडाशः, अग्नाविष्णुभ्यामेकादशकपालः पुरोडाशः अदित्यैचरुश्चेति । पत्नीसंयाजान्तां तामनुष्ठाय, ततः सोमयागवत् प्राग्वंशनिर्माणादिकं

---

1- सर्वत्र पशुयागेषु पश्वङ्गभूता एव देवताः पुरोडाशाङ्गभूताः भवन्ति। अत्र तु न तथा। पशुदेवता वायुः, पुरोडाशदेवता प्रजापतिः ।

मुष्टिकरणावधिकं क्रियाकलापमनुष्ठाय, मुञ्जतृणैः शणतृणैर्वोखामापूर्य, तामाहवनीयस्योपर्यधिश्रित्य परितो ऽङ्गारैः प्रदीपयेत् । उखामध्ये शुष्कदारुमयानि च वस्तून्याज्येन अक्त्वा प्रक्षिपेत् । यथा तप्ताया उखाया अन्तः स्थानि वस्तूनि स्वयं दह्येत तथा तां तापयेत् । अन्तःस्थेषु शुष्केष्वालितप्तेषु तत्र अग्निरुत्पद्यते । स उख्यो ऽग्निरित्युच्यते । उख्ये जाते आहवनीयमग्निमुपशमय्य, उख्ये ऽग्नौ वैकङ्कतीं शमीमयीं च समिधावाधाय, ज्वलन्तं तमग्निमुपस्थाय, पुनरौदुम्बराश्वत्थादिभिः काष्ठैरग्निमादीप्य मुञ्जतृणनिर्मिते हस्तषट्कपरिमितदैर्घ्ययुते शिक्ये साग्निम् उखामवधाय, सुवर्ण-निर्मितं हस्ततलपरिमितमेकविंशतिनिर्बाधयुतं वर्तुलाकारं रुक्मं यजमानस्य कण्ठे हृदयोपर्यवमुञ्चेत् । ततो यजमानः शिक्यपाशमपि कण्ठे प्रमुच्य, तदुपरि, कृष्णाजिनं स्कन्धयोर्निधाय, उख्यमादायोत्थाय, उख्यं नाभेरुपरि धारय-माणः चतुरो विष्णुक्रमान् प्राचः क्रमेत् । प्राङ्मुखः सन् चत्वारि पदान्यग्रतो गच्छेत् । तदेव विष्णुक्रमणमित्युच्यते । ततः प्रदक्षिणं पर्यावृत्य रुक्मं कृष्णाजिनं चोन्मुच्य निधाय शिक्यपाशमुन्मुच्य, पूर्वसज्जितायामौदुम्बर्यामासन्द्यां, प्रादेशमात्रपादायां मौञ्जवितानायां मृदा लिप्तायामुख्यं सादयित्वोपस्थाय, पुनः काष्ठैस्समिन्धीत। ततो मुष्टीकरणादिसोमिकपदार्थान् सनीहारप्रैषणा-न्तान् कृत्वा जाग्रत् तां रात्रिमतिवाहयेत् । श्वोभूते प्रातरुत्थाय सोमपरि-वेषणान्ते कर्मणि कृते यजमान उख्यमग्निमुपतिष्ठेत् । ततो मध्यन्दिने मध्यरा-त्रे च व्रतग्रहणादिकं प्रकृतिवदेव । एवं यावदीक्षं पूर्वेद्युर्विष्णुक्रमणम्, उत्तरेद्युर-ग्न्युपस्थानं च पर्यायेण कुर्वन्नासीत् । यदहर्दीक्षासमाप्तिः तदहर्विष्णुक्रम-णमुख्योपस्थानं चेत्युभयं कृत्वा उख्यमुद्यम्य शकटे संस्थाप्य, गार्हपत्यदक्षिणाग्न अपि साक्षादेव शकटे संस्थाप्य स्वयमपि सपत्नीकः शकटमारुह्य देवयजनस्थानं शकटमारुह्य देवयजनस्थानं प्रति प्रयायात् । प्राप्य देवयजनं गार्हपत्यं दक्षिणाग्निं च स्वस्वायतने निधाय, गार्हपत्यस्य पुरत उख्यं निधाय, तत्रौदुम्बरीं समिधमादध्याति ।

गार्हपत्यचितिमानादि

ततो गार्हपत्यस्थण्डिलचयनार्थं हस्तचतुष्टयपरिमितां भूमिं प्रोक्षणोद्धननादिभिः संस्कृत्य तं देशमेकविंशत्या शर्कराभिः (क्षुद्रपाषाणैः) परिश्रित्य, परिश्रितदेशे प्रगायता एकविंशतिमिष्टकाः प्रथमप्रस्तारे उपदध्यात्। द्वितीयप्रस्तारे तद्व्यत्यासेन तावतीरेवेष्टका उदगायता उपदध्यात् । प्रथम-प्रस्तारे प्रागायतास्तिस्रो रीयः । एकैकस्यां रीतौ सप्तेष्टकाः । द्वितीय-प्रस्तारे उदगायता इष्टकाः सप्तरीतयः । एकैकस्यां रीतौ तिस्र इष्टकाः। एवं प्रथमतृतीयपंचमेषु प्रस्तारेषु प्रगागता इष्टकाः, द्वितीयचतुर्थयोः प्रस्तार-योरुदगायताश्चेष्टका उपदध्यात् । एकैकस्मिन् प्रस्तारे एकविंशतिरिष्टका इत्याहत्य पंचस्वपि प्रस्तारेषु पंचोत्तरं शतमिष्टका भवन्ति गार्हपत्यचितौ। इष्टकाश्च दैर्घ्ये द्वात्रिंशाङ्गुलमिताः विस्तारे पादोनचतुर्दशांगुलमिताश्च भवन्ति । (32 । $13\frac{3}{4}$ ) । एतासामुपधानरीतिस्तु प्रतिकृतौ द्रष्टव्या। तत्रैकैकं प्रस्तारमुपधाय चात्वालदेशादार्द्रां मृदं सिकतां वा आहृत्य उपहितस्य प्रस्तारस्योपरि निवपेदालिम्पेद्वा सन्धीनामदर्शनाय । एवं सर्वप्रस्तारेषु पांसुनिवापः कार्यः । सेयं गार्हपत्यचितिः ।

गार्हपत्यचितेरुपरि उख्याग्निस्थापनम् ।

एवं गार्हपत्यचितिमुपधाय, तदुपरि उखागतमग्निं सर्वमपि सन्निवप वर्धयति च तं काष्ठशकलैः । ततस्तं मन्त्रैरुपस्थाप्य, रिक्तामुखां दधिमधु-सिकतादिभिरापूर्य, तां शिक्याद्पाकृत्य, शिक्यं, रुक्मसूत्रं, आसन्दीं, तुष-पक्वाः कृष्णास्तिस्र इष्टकाश्चादाय, नैर्ऋत्यां दिशि गत्वा, क्वचिदूषर-प्रदेशे शिक्यं निधाय, शिक्यपाशस्योपरि ताः कृष्णास्तिस्र इष्टका दक्षिणा-पवर्गा निधाय, शिक्यजालेन ताः प्रच्छाय, तासां दक्षिणतो रुक्मसूत्रमासन्दीं चा निधाय, ते अभिमन्त्र्योपस्थाय, पुनस्तत् सर्वमप्रतीक्ष्यैव देवयजमानस्य शुद्ध्यर्थं मार्जनं कृत्वा गार्हपत्यमुपतिष्ठेरन्नध्वर्युब्रह्मयजमानाः । अनन्तरं

---

।– प्रथमतो गार्हपत्यस्य चयनम् । तत आहवनीयस्य । दक्षिणाग्नेः स्थण्डिलं नास्ति ।

प्रकृतिवद् प्रायणीयेष्टिं कृत्वा, सौमिकीं महावेदिं विमाय, सोमं क्रीत्वा, आतिथ्येष्टिं कृत्वा, उत्तरवेदेरुपरि इष्टकोपधानार्थं वेणुदण्डेन मानं कुर्यात्। प्रसारितपक्षद्वयपक्षिसदृशः स्थण्डिलस्याकार इत्युक्तम् । स्थण्डिले च आत्मा, दक्षिणः पक्षः, उत्तरः पक्षः, पुच्छं, शिर इति पञ्च भागाः । तत्र आत्मा मध्यस्थानम् । दक्षिणोत्तरभागयोः पक्षद्वयम् । पुरतश्शिरः, पश्चात् पुच्छमिति भागसन्निवेशः । तत्र आत्मा चतसृष्वपि दिक्षु पुरुषैकप्रमाणः (120 अङ्गुलमितः) । पक्षौ च दक्षिणोत्तरतः प्रत्येकं किंचिदधिकपुरुषद्वय-प्रमाणकः ($247\frac{1}{2}$ अं) । पुच्छं च सान्तराले सपादपुरुषप्रमाणम् (150 अं)। शिरः सग्रीवं पुरुषैकप्रमाणम् । एवं रीत्या दक्षिणोत्तरतः पंचदशाङ्गुलाधिक-पुरुषपंचकप्रमाणा(615 अं) पूर्वपश्चिमतः सपादपुरुषत्रयप्रमाणा (390 अं) उत्सेधतस्त्रिंशदङ्गुला च आहवनीयचितिरिति सिध्यति । इदं च सार्धसप्त-विधमित्युच्यते । एवं गार्हपत्यचितिः षण्णवत्यङ्गुलायामविस्तारा जानु-दघ्नोत्सेधा भवति । प्रमाणमिदं गार्हपत्याहवनीयचित्योर्यजमानस्य प्रथमचयन एव भवति । द्वितीयावृत्तौ गार्हपत्यचितेर्ह्रासः, आहवनीयचितेर्वृद्धिश्च भवतः। तौ यथा— द्वितीयचयने गार्हपत्यचितेः त्रयः प्रस्ताराः त्रिषष्टि(63) रिष्टका एव च भवेयुः । तृतीयचयने एक एव प्रस्तारो भवेदिष्टकाश्चैकविंशतिः आहवनीयचितेस्तु द्वितीयचयने द्विसहस्रमिष्टका दश प्रस्ताराः नाभिमितो-त्सेधश्च भवेयुः । तृतीयचयने त्रिसहस्रमिष्टकाः पञ्चदशप्रस्ताराः, आस्यद-घ्नोत्सेधश्चेति विशेषः । नैकविधं चयनमतोऽधिकं कुर्यात् । विधान्तराणि स्वनुष्ठातुं शक्यन्ते । न तासां स्वरूपाण्यत्र विवृतानि ।

चयनस्थलकर्षणादि

एवमाहवनीयचितियोग्यं स्थलमुत्तरवेद्या उपर्येव विभाग, अध्वर्यु-ब्रह्मयजमानास्तत् स्थानमधिष्ठाय, लाङ्गलमेकं, षड्वा द्वादश वा बलीवर्दांश्च आनाय्य, लाङ्गले बलीवर्दान् षद् द्वादश वा बद्ध्वा तेन लाङ्गलेन तत् स्थलं कृष्ट्वा (अध्वर्युरेव कृषेत्, नान्येन कर्षयेत्) बलीवर्दानुन्मुच्य, तान्

अध्वर्यवे दत्त्वा, कृष्टासु सीतापद्धतिषु जलमासिच्य द्वादशसु सीतापथेषु ओषधीर्ग्रामोद्भवा वपेत् । ताश्च - तिलाः, माषाः, व्रीहयः, यवाः, प्रियङ्गवः, अणवः, गोधूमाः। यासां ग्रामीणैः पुरुषैः ग्रामेष्वेवोत्पादनं (कृषीवलैः) क्रियते ताः सप्त ग्राम्या ओषधयः । एवमकृष्टे स्थले पूर्ववदुदकमासिच्य आरण्या ओषधीः सप्त तत्र वपेत् । ताश्च - वेणवः, श्यामाकाः, नीवाराः, अरण्यतिलाः, अरण्यगोधूमाः, मर्कटकाः, अरण्यमुद्गाः(गार्मुताः) इति सप्त । धान्यानामेषां भूमिकर्षणादिकमन्तरा अकृष्टायामेव भूमावुत्पत्तिः। अतो धान्यानीमान्यकृष्टपच्यानीत्युच्यन्ते । अत एव अन्नान्यकृष्ट एव स्थल एतेषां वपनम् मुक्तम् । कर्षणकाले ग्निचयनार्थात् क्षेत्रात् चतसृष्वपि दिक्षु ये लोष्टा बहिर्भूतास्तानग्निक्षेत्र एव प्रत्यस्य, धान्यवापनस्थानं हस्तेन अभिमृश्य, तदुपर्युहस्वेदेस्समवायं कृत्वा तदुपरि सिकताः न्युप्य, चयनीयं तत् स्थानं शर्कराभिः (क्षुद्रपाषाणैः ) परिश्रित्य मध्यस्थाः सिकताः समीकुर्यात् । एतावत्पर्यन्तं कृत्वा, अनन्तरं प्रकृताविव पत्नीयजमानयोः व्रतदानं, तानूनप्त्रज्यस्पर्शनं, सोमाप्यायनं, द्यावापृथिवीनमस्कारादिकं च यथावत् कृत्वा, प्रवर्ग्योपसदावनुतिष्ठेत् प्रकृतिवदेव। पूर्वं प्रवर्ग्यानुष्ठानं तत उपसदनुष्ठानम् । एतच्च वैपरीत्येनापि कर्तुं शक्यत इति ज्योतिष्टोम एवोक्तम् । उपसदो न्ते सुब्रह्मण्याह्वानमपि प्रकृतिवदेव ।

<u>प्रथमचितेरुपधानम्</u>

तत उत्तरवेदेरुपरि विमिते स्थले चयनमारभेत । तत्र अध्वर्युश्चयनकर्ता भवेत् । यजमान एव वा स्वहस्तेन चयनं कुर्यादिति पक्षद्वयम् । चयने चेष्टका यथासौकर्यं खण्डयित्वा चितेर्यथामिलषितमाकारो न कदापि सम्पादनीयः । षट्प्रकाराभिरिष्टकाभिरिष्टकास्तत्तत्स्थलोपधानयोग्यतया

---

1- वेदिमध्ये पात्रविशेषेस्थापितस्य घृतस्य संज्ञा तानूनप्त्रमिति। ऋत्विजां यजमानस्य च यावत्क्रतुसमाप्ति परस्परं स्नेहाय, तत्स्पर्शनं विहितं प्रकृतौ तदेव अत्राभिसंहितम् ।

निर्मिताभिरखण्डिताभिः चितेराकासम्पादनम् । इष्टकानां षट् प्रकाराः पूर्वं निर्दिष्टाः, प्रदर्शयिष्यन्ते च प्रतिकृतिचित्रे। आकाशे पक्षौ प्रसार्य डयमानस्य पक्षिणो यादृशं स्वरूपं तादृशमेव स्वरूपं चयनेन भूमौ निष्पादयेत्। तत्रापि न पक्ष्यन्तरसदृशम् । किं तु श्येनसुपर्णसदृशमेवेत्यादि बोध्यम् ।

एवं चेष्यन् प्राग्वंशमण्डपस्य अग्रे आनडुहे चर्मणि प्रथमचित्यर्थाः इष्टकाः स्थापयित्वा, अध्वर्युब्रह्मयजमानाः अश्वमग्रतः कृत्वा, चितिस्थलं गत्वा स्थलमध्ये दर्भस्तम्बं निखाय, तमश्वेन आक्रमय्य, अश्वपादनिक्षेपस्थाने पद्मपत्रमुखानमुपधाय, तदुपरि रुक्मपुपधाय, तस्मिन् सुवर्णनिर्मितं पुरुषमुपरि-मुखं प्राक्शिरसम् उपधाय, तमभिमन्त्र्य, तस्य दक्षिणत आज्यपूर्णां काश्मर्यमयीं जुहूं, तस्य उत्तरे दधिपूर्णामौदुम्बरीं च तामुपधाय, ते उपस्थाय, इष्टका-मेकामविदुषा (मूर्खेण) ब्राह्मणेन चिति मध्य उपधापयीत् । ततस्तेन यजमाना-द्गृहीत्वा दत्तं वरमध्वर्युः प्रतिगृह्णीयात् । ततः परं प्रथमदिनानुष्ठितवा-यव्यपशोः शिरसः, कूर्मस्य जीवतः, उलूखलस्य सर्वौषधिपूर्णस्य, मुसलस्य चोपधानं च कृत्वा ततो यथाक्रममिष्टकोपधानेन प्रथमचितिं सम्पादयेत् । तत्र क्रमादयः सूत्रतो वगन्तव्याः । एवं प्रथमचितिं समाप्य, आपराह्णिकीभ्यांप्रवर्ग्यो-पसद्भ्यां प्रचर्य सुब्रह्मण्याह्वानान्तं कृत्वा विरमेत् । रात्रौ यजमानस्य व्रतग्रहणम् । एवं दीक्षात्रयपक्षे दीक्षातो नन्तरस्मिन् (चतुर्थे) दिने चयनमारभ्य, एकैकस्मिन् दिने एकैका चितिरिति आदितश्चतुर्थादिषु नवमान्तेषु षट्सु क्षिषु पञ्च चितय उपधीयन्ते । अत्र चयने बह्वुपसदः । एकस्या उपसदो दिनद्वये नुष्ठानमावृत्त्या। पञ्चम्या उपसदो दिने मध्याह्ने सावशेषां पञ्चमीं

---

1- कण्ठस्य अधस्तात् पाटलवर्णः उपरिष्टात् श्वेतः पक्षिविशेषः सुपर्णपद-वाच्यः । खगो यं मत्स्याशी जहुलमनुपदेशेष्वेव वसति । न धन्वसु शुष्केषु वा प्रदेशेषु । गरुडपदाभिधेयो यं भगवतो विष्णोर्वाहनमिति मत्वा यत्र कुत्रापि दृष्टदेवैव प्रणमन्ति मद्देशस्था जनाः । तद्दर्शनं च कल्याणकरं मन्वते श्येनस्तु प्रसिद्ध एव ।

2- वर्तुलाकारं (सूर्यसदृश) सुवर्णखण्डं रुक्ममित्युच्यते ।

चितिमुपधाय चितेरवरूढाय यजमानाय माध्याह्निकं व्रतं प्रदाय आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य विरमेत् । रात्रौ यजमानव्रतदानादि यथावत् । अथ श्वोभूते षष्ठ्या उपसदो दिने (आदितो षष्ठे दिवसे) प्रातः पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य, अवशिष्टां पञ्चमीं चितिमुपधाय, तदानीमेव आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य सुब्रह्मण्याह्वानान्तं कृत्वा, चितं स्थण्डिलमभिमृश्य, आज्येन हिरण्यशकलसहस्रेण च तत् प्रतिदिशं प्रोक्षेत् ।

शतरुद्रीयहोमः

ततः चितेरुत्तरस्य पक्षस्य वायव्यकोणास्थितायाः इष्टकाया उपरि अजाक्षीरेण मृगीक्षीरेण वा अर्कपत्रेण अध्वर्युर्जुहुयात् । तस्या इष्टकायाः समीपे लौकिकीभिरिष्टकाभिः पीठं कृत्वा तदुपर्यध्वर्युस्तिष्ठन् शतरुद्रीयं (रुद्राध्यायं) पठन् अविच्छिन्नया धारया जुहुयात्।[1] यथा धारायाः विच्छेदो न भवति तथा अन्यो जनः क्षीरमर्कपर्णे स्रावयेत् । शतरुद्रीयस्य तृतीयांशपाठं यावत् अर्कपर्णं जानुदघ्ने धारयेत् । उपरितनतृतीयांशं यावत् नाभिदघ्ने, अन्तिमांशं यावदास्यदघ्ने धारयन् जुहुयात् । सर्वत्र रुद्रा एव देवताः । ततस्तमर्कपर्णं यत्र पशवो न सञ्चरेयुस्तस्मिन् देशे निरस्येत् । ततो यजमानश्चतसृष्वपि दिक्षु रुद्रमुपतिष्ठते। अनन्तरमध्वर्युरुदकुम्भमादाय स्थण्डिलं त्रिः परिषिञ्चेत् । ततो दीर्घस्य वंशस्याग्रभागे वेतसशाखाम् अवकां (शैवालं) मण्डूकं च तत्रैव बद्ध्वा चितेरुपरि विकर्षेत् । ततः पृष्ठाख्यैः सामभिरध्वर्युः यजमानः प्रस्तोता वा चितिमुपतिष्ठेत् । एतदन्तं चयनकर्म ।

---

1- नात्र होमार्थमग्निस्थापनादिकम् । इष्टकाया उपर्येव धारया क्षीरस्य प्रस्रावणम् ।

## चितेरूपर्यग्निस्थापनादि

ततः प्रवर्ग्यमुद्वास्य शालामुखीये ग्नौ (प्रकृताहवनीये) कांश्चन होमान् हुत्वा अध्वर्युः चितिमारुह्य उत्तरवेदिवत् व्याघारणादिकं[1] कृत्वा, दध्ना मधुमिश्रितेन, आज्येन वा चितिं प्रोक्ष्य यजमानेन सहावरुह्य, कृष्ण-मृगचर्मनिर्मिते उपानहावुभे अभ्युन्मुच्य, अध्वर्युः वैश्वकर्मणसंज्ञकाः षोडश आहुतीर्हुत्वा औदुम्बरीस्तिस्रः समिधो घृतावता आहवनीय आधाय पशुबन्धवदग्निं प्रणयति। तच्चैवम् - आहवनीये काष्ठान्याधाय ततो ज्वलन्तमग्निं क्वचित् पात्रे गृहीत्वा सिकताभिस्सयम्य, आग्नीध्रीयं यावद्गत्वा, कंचन श्वेतवर्णमश्मानमाग्नीध्रीये निधाय, ततः चितेः पुच्छसमीपं गत्वा हस्तस्थितमग्निं प्रतिप्रस्थातृहस्ते दत्वा, स्वयमध्वर्युश्चितिमारुह्य स्वयमातृण्णाख्यायाः[2] इष्टकाया उपरि पांशुकान्[3] सम्भारान् न्युप्य, तदुपर्यग्निं प्रतिप्रस्थातृहस्तात् गृहीतं प्रतिष्ठापयेत् । अतः परमयमेव चित्योऽग्निः राहवनीयो भवति । यतो यं प्रणीतः स गार्हपत्यः । पुरागार्हपत्यः प्राजिहितसंज्ञकः । ततस्तत्रैव अग्नावाहनीये कांश्चन होमान पूर्णाहुतिं च हुत्वा, ततो वैश्वानरेष्टिमुपक्रम्य तदनुष्ठानमध्ये तद्वैः सार्कं सप्तभ्यो मरुद्गणेभ्यो हविर्निर्वापादिकं कृत्वा वैश्वानरयागानन्तरं सप्तानां मरुद्-गणानां यागान् कृत्वा तदीयं तन्त्रं परिसमाप्य, ततो वसोर्धारां जुहुयात्।

## वसोर्धाराहोमः, यजमानाभिषेकश्च

तदित्थम्- उदुम्बरवृक्षनिर्मितां हस्तचतुष्टयदैर्घ्याम्, अल्पदण्डां पश्चिमभागे गर्तवतीं दीर्घबिलां जुहूं निर्माय, तामधस्तात् आर्द्रया मृदा

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- व्याघारणं घृतस्य क्षारणम् ।

2- पुरुषैर्न कृतम्, किं तु स्वयमेव यत्र च्छिद्रमुत्पन्नं सा स्वयमातृण्णा ।

3- पशुयागे ग्न्यायतने प्रक्षेप्तव्यतया श्रुताः सम्भाराः पांशुकाः ।

विलिप्य घृतेन पूरयित्वा तेन तस्मिन्नग्नौ जुहुयात्, यथा आरम्भप्रभृति समाप्तिपर्यन्तं मध्ये धारा न विच्छिद्येत् तथा अन्यः कश्चित् जुहुवां घृतं पूरयन्तिष्ठेत् । अवसितायां वसोर्धारायां जुहुवां यदाज्यमवशिष्यते तस्मिन्ननं पक्त्वा (लौकिके ग्नौ पाकः) तेन अध्वर्युब्रह्मोद्गातृहोतृन् महर्त्विजो भोजयित्वा भुक्तवद्भ्यस्तेभ्यः चतस्रो धेनुर्वरत्वेन दत्वा सप्तभिर्ग्राम्याभिः सप्तभिश्च आरण्याभिः पूर्वोक्ताभिरोषधिभिर्यवागूः पृथक् पक्त्वा ताभिः पृथक् पृथग्घुत्वा हुतशिष्टानां यवागूनामंशं पात्रान्तरे किंचित् किंचिद्व अवस्राव्य, चितेः दक्षिणपक्षसमीपे औदुम्बरीमासन्दीं प्रतिष्ठाप्य, तदुपरि कृष्णाजिनमास्तीर्य, तत्र यजमानमुपवेश्य तं तेन यवागूशेषेण अभिषिन्चेत् । ततो राष्ट्रभृद्धोमान् अन्यांश्च कांश्चन होमान् हुत्वा सौमिकं कर्म आरभेत्। तत उपरवाख्यान् चतुरो वटान् दक्षिणहविर्धानमण्डपस्य पश्चिमभागे उपरि-भिन्नानन्तः सम्भिन्ना‍न् अग्निष्टोमवदेव तत्र खात्वा धिष्ण्यांश्चिनुयात्।

## धिष्णोपधानम्

तत्र आग्नीध्रीये धिष्ण्ये ष्टाविष्टकाः अश्मना पूर्वनिक्षिप्तेन सह नव, द्वादश होत्रीये धिष्ण्ये, एकादश ब्राह्मणाच्छंसीये, वा्मार्जालीये, अन्येषु प्रशास्त्रीयनेष्ट्रीयाच्छावाकीयपोत्रीयेषु धिष्ण्येषु अष्टावष्टौ चोपदध्यात् । एवं ब्रह्मसदने ष्टौ । चात्वालशामित्र-अवभृथस्थानेष्वप्यष्टावष्टावुपधाय सर्वेषां पुरीषेण(मृदा) आच्छादनं कुर्यात् । तत अग्नीषोमीयपशुयागतन्त्रमारभेत् ।

## देवसुवां हवींषि

ततो ग्नीषोमीयवपायागानन्तरं तदीयपशुपुरोडाशकाले अष्टौ देवसुवां हवींषि निर्वपेत् । तानि च – अग्नये गृहपतये पुरोडाशार्थं कृष्णाः व्रीहयः । सोमाय वनस्पतये चर्वर्थाः श्यामाकाः । सवित्रे सत्यप्रसवाय आशवो व्रीहयः । रुद्राय पशुपतये चर्वर्थाः गवीधुकाः । बृहस्पतये वाचस्पतये चर्वर्थाः नीवाराः । इन्द्राय ज्येष्ठाय पुरोडाशार्थं व्रीहयः । मित्राय

सत्याय चर्वर्था: आम्बा व्रीहय: । वरुणाय धर्मपतये चर्वर्था यवा इति ।
तानि पशुपरोडाशेनैव सह अनुष्ठाय वसतीवरीग्रहणादिकं कृत्वा पशुयागं
समाप्य, रात्रौ यजमानस्य व्रतदानादिकं कृत्वा विरमेत् ।

सौमिकव्यापार:

ततः प्रकृतिवत् महारात्रे प्रबुध्य सौमिकव्यापारमारभेत् ।
तत्र यदा होता प्रातरनुवाकशास्त्रमारभेत ततः पूर्वमेव अध्वर्युः कश्चिन्मन्त्रैरग्नियोगं कुर्यात् । ततो होता प्रातरनुवाकं यथावत् पठेत् । सौमिकव्यापाराश्च क्रमशः कुर्वन् यत्संस्थापकं क्रतुमनुष्ठातुमिच्छति यजमानः, तदनुसारेण कर्माण्यध्वर्युः कुर्वीत । ततो यज्ञपुच्छमवभृथस्नानान्ताम्, अनुबन्ध्यास्थानिकीमाहुतिं च कृत्वा पूर्ववताग्निविमोकं कृत्वा दश आकृतिहोमान् हुत्वा कर्म अवशिष्टं समापयेत् । ततो यजमानो ग्निमाप्तिसंज्ञकैर्मन्त्रैस्सस्थाय प्राजिहितमग्निमरण्योः समारोप्य, गृहं गत्वोदवसानीयादिकं यथोक्तमनुतिष्ठेत् । आगामिनि पर्वणि सौत्रामण्याख्येन पशुयागेन यजेत । ततो परेद्युर्मित्रावरुण्या चामिक्षया। एतावता समाप्तमग्निचयनम् । परिसमाप्ते यज्ञे यजमानो नियमानिमान् धारयेत् – संवत्सरं यावत् गुरोरपि प्रत्युत्थानं न कर्तव्यम् । सत्यां वृष्टौ न धावेत् । तृतीयचयनं कृत्वा न स्त्रियमुपेयात इत्येव । अन्ये च सोमक्रतौ नियमा भवन्त्येव ।

सौत्रामणीयाग:

सौत्रामणी नाम पशुयागः । स द्विविधः प्रोक्तस्तैत्तिरीये
बौधायनापस्तम्बादिभिश्च – चरकसौत्रामणी कौकिलसौत्रामणी चेति ।
तत्र चरकसौत्रामणी स्वतन्त्रा, चयनाङ्गभूता च । अस्यां त्रयः पशवः –
अजो धूम्रवर्णो श्विदेवताकः । मेषः सरस्वतीदेवताकः । मेष एव चेन्द्रदेवताकः
निरूढपशुबन्धकत्वेन त्रयाणां सहैव अनुष्ठानम् । अत्र वपायागानन्तरं सुराग्रहग्रहणं यद्यपि ब्राह्मणश्रौतसूत्रादावुक्तं तथापि तस्य कलौ निषिद्धत्वात्

तद्विकल्पतया आपस्तम्बादिभिः पयोग्रहाणां विधानात् तैरेव यागो नुष्ठीयते। तत्र त्रयो ग्रहाः । पशुयागीया देवता एव अत्रापि देवताः । तैर्हुत्वा पितृनुपस्थाय पशुरोडाशयागमनुतिष्ठेत् । त्रयः पुरोडाशाः । इन्द्रः, सविता, वरुण इति क्रमेण तत्र देवताः । ततो इग्यागाद्यनुष्ठानपूर्वकं सौत्रामणीं समाप्य, वारुणैककपालेन अवभृथेष्टिं कृत्वा स्नात्वा अग्नीन् समारोप्य गृहमागच्छेत् । इयं चरकसौत्रामणी। कौकिलसौत्रामण्याम् – ऐन्द्रः, आश्विनः, सारस्वतः, ऐन्द्रः, ऐन्द्रो वायोधसश्चेति पन्च पशव इतीयात् विशेषः । इति सौत्रामणीस्वरूपम् ।

राजसूयः

अतः परं राजसूयाख्यं क्रतुं निरूपयामः । क्रतुरयं राज्ये भिषिक्तेन राज्यधरं वहता क्षत्रियेणा नुष्ठेयः । अयं च प्राचीनसमये तादृशैरेव राजभिः विशेषतः सूर्यवंशीयैः सोमवंशीयैश्चा नुष्ठित इति ज्ञायते । महाभारते च युधिष्ठिरेणानुष्ठितो राजसूययागस्साधु वर्णितो स्ति । तदनन्तरकालिकाश्च राजानो तं बहवो न्वतिष्ठन्निति पुराणेभ्यः शिलालेखादिभ्यश्च प्रमाणेभ्यो वगच्छामो वयम् । अयं च बह्वीनामिष्टीनां द्वयोः पशुयागयोः सप्तानां दर्विहोमानां षण्णां च सोमयागानां समुदायरूपः । अतो त्र इष्टिपशुसोमयागानां समप्राधान्यमेव, नेतरेतराङ्गभावः । पशुयागाङ्गभूता इष्टयः, पशुयागाश्च प्रकृतितो तिदेशप्राप्ता यथावदनुष्ठेया एव । तेषां परं तत्तदङ्गत्वमप्रतिहतं वर्तत एव ।

किंचिदधिकैकवत्सरसाध्यो यं क्रतुः । अत्र षट् सोमयागाः, द्वौ पशुयागौ । एकोनत्रिंशदुत्तरशतमिष्टयः (129) सप्त दर्विहोमाश्चानुष्ठेयाः ।

---

1- आप०श्रौ०सू० 18·8 ·1; कात्या०श्रौ०सू० 15·1·1;

राजा सूयते अभिषुयते सोमो यागार्थमत्रेति व्युत्पत्ती राजसूयशब्दस्य

यज्ञस्या स्य फाल्गुनशुक्लप्रतिपदि आरम्भः कर्त्तव्यः । ततो वर्षमेकं चातुर्मास्यानुष्ठानम् । तानि चातुर्मास्यनिरूपणप्रकरणोक्तरीत्या नुष्ठेयानि । ततः पवित्रादीनां षण्णां सोमपान गानां क्रमेणानुष्ठानम् । अत्र यागशिष्टस्य सोमस्य भक्षणे विकल्पः । अवश्यं स भक्षयितव्य एवेति यो नियमो ब्राह्मणस्य सो स्य नास्ति । यदि तु सोमभक्षणेच्छा, तदा पूर्वं यागार्थं सोमक्रयणकाल एव न्यग्रोधवृक्षस्यावरोधान्[1] तदङ्कुराणि वा सोमवदेव क्रीत्वा सर्वांश्च सौमिकव्यापारान् तत्रा नुष्ठाय, ततस्तानि पिष्ट्वा दध्ना सम्मेल्य, तेन यजमानचमसमापूर्य सोमकाले इतरैः सोमचमसैः सह हुत्वा सोमावशिष्टं तमेव न्यग्रोधावरोधरसं[2] क राजानं यजमानं पाययेत् । अध्वर्य्वादयस्तु ऋत्विजः स्वस्वग्रहचमसस्थं सोमरसमेव भक्षयेयुः । यजमानस्य तु राज्ञो ग्रहेषु भक्षणं नास्ति। एवं सर्वेष्वपि सोमयज्ञेषु राज्ञो भक्षणं फलचमस्यैव, न सोमस्य । राजन्यकर्तृकेपि यागे स्मिन् ब्राह्मणा स्वर्त्विजः । तेषां तु सोमभक्षणं भवत्येव । इति सामान्यविषयाः । विशेषास्तु - चैत्र्याः पौर्णमास्याः पूर्वस्मिन् दिवसे पवित्रास्यसोमयागार्थं दीक्षां कुर्वीत । दिनत्रये दीक्षाः । दिनत्रये चोपसदः । सप्तमदिने सुत्या । अग्निष्टोमसंस्थाको यं क्रतुः । सहस्रमत्र गावो दक्षिणाः सप्तसु दिवसेषु क्रतुमिमं परिसमाप्य अष्टमदिनप्रभृति अनुमत्यादीनष्टौ यागान् एकैकस्मिन् दिने एकैकक्रमेण अनुतिष्ठेत् ।

ते च यथा -- 1-अनुमत्यै पुरोडाशो ष्टाकपालः, 2- आदित्यश्चरुः, 3- आग्नावैष्णव एकादशकपालः, 4- अग्नीषोमीय एकादशकपालः, 5- ऐन्द्र एकादशकपालः, 6- आग्नेयो ष्टाकपालः ऐन्द्रं दधि, 7- ऐन्द्राग्नो द्वादशकपालः, वैश्वदेवश्चरुः, सौम्यः श्यामाकश्चरुः, 8- सरस्वत्यै सरस्वते च चरुः । इष्टौ यागाः । ततस्तदनन्तरदिनप्रभृति संवत्सरपर्यन्तं चातुर्मास्यपशुभिर्यजेत् ।

---

1- न्यग्रोधस्य वटवृक्षस्य अवरोधाः शाखाभ्यो वाङ्मुखतया प्ररोहन्तो मूलविशेषाः ।

2- द्र०- ऐ०ब्रा० 13.

ततः - 1- आग्नेयो ष्टाकपालः, 2- रौद्रो गावीधुकश्चरुः, 3- ऐन्द्रं दधि, 4- यवमयो वारुणश्चरुः इति हविश्चतुष्टयविशिष्टेन इन्द्रतुरीयाख्येन यागेनेष्ट्वा, तस्यामेव निशायां पन्थेधनसंज्ञकं कर्म कुर्यात्। ततः सूर्योदयात् पूर्वम् अपामार्गहोमान् । कुर्यात् । अत्र समीपादपामार्गाख्यानि तृणविशेषबीजान्यानीय, तानि चूर्णयित्वा, दक्षिणाग्नेरेकमुल्मुकं गृहीत्वा स्वतस्सिद्धं मरुस्थलं गत्वा, तत्र तमग्निं प्रतिष्ठाप्य प्रज्वाल्य, पर्णमयेन स्रुवेण अपामार्गचूर्णानि तस्मिन्नग्नौ जुहुयात् । ततस्तमग्निमुपस्थाय, प्रत्यावृत्य पुनस्तं देशमनवेक्षमाणो यज्ञस्थलभागस्य अग्निहोत्रं हुत्वा पन्च देविकाहवींषि निरुप्य तैर्यजेत् ।

तानि च - 1- धात्रे पुरोडाशो द्वादशकपालः, 2- अनुमत्यै चरुः, 3- राकायै चरुः, 4- सिनीवाल्यै चरुः, 5- कुह्वै चरुः इत्येवंरूपाणि। कर्मपंचकमपीदम् एकस्मिन्नेव दिने एकप्रयोगेण समानतन्त्रेणा नुष्ठेयम् । तस्य च एका गौरेको वृषभश्च दक्षिणा। ततो हविस्त्रयविशिष्टानि त्रीणि कर्माणि। अर्थात् हविस्त्रयविशिष्ट एकस्समुदायः । स एकं कर्मेत्युच्यते । एवं समुदायत्रयं त्रीणि कर्माणि। तत्र आग्नावैष्णवस्काद्वशकपालपुरोडाशद्रव्यकः ऐन्द्रावैष्णवः तादृशः, वैष्णवस्त्रिकपालः इत्येकः समुदायः । एकमिदं कर्म । अग्नीषोमीय एकादशकपालपुरोडाशद्रव्यकः, इन्द्रासोमीयः सः, सौम्यश्चरुः इत्यपमेकः समुदायः । एकमिदं कर्म । सोमापौष्णश्चरुः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः त्रित्यमेकं कर्म। एतदनन्तरमेकहविष्का एका इष्टिः । सा च वैश्वानरद्वादशकपालकया। ततो वारुणो यवमयश्चरुः । इति मिलित्वा षट् कर्माणि एकदिनकर्तव्यानि । ततो द्वादशेष्टयः, एकैकस्मिन् दिने एकैकेति द्वादशसु दिवसेषु द्वादशेष्टयो विहिताः ।

ताश्च - 1- बार्हस्पत्यश्चरुः, 2- ऐन्द्र एकादशकपालः पुरोडाशः 3- आदित्यश्चरुः, 4- नैर्ऋतश्चरुः, 5- आग्नेयो ष्टाकपालः पुरोडाशः, 6- वारुणो दशकपालः पुरोडाशः, 7- मारुतः सप्तकपालः पुरोडाशः,

8- सावित्रो द्वादशकपालः पुरोडाशः, 9- अश्विनो द्विकपालः पुरोडाशः, 10- पौष्णश्चरुः, 11- रौद्रो रण्यगोधूमसम्पादश्चरुः इत्येवं स्युः । एतदतिरिक्तश्चरुरेकश्चतुर्थतया तैत्तिरीयब्राह्मणे विहितः - भगाय चरुरिति। द्वादशापीमानि रत्निनां हवींषि इत्युच्यन्ते। यागा इमे न स्वगृहे नुष्ठेयाः। किन्तु ब्रह्मादीनां द्वादशानां गृहं गत्वा तत्रैवा नुष्ठेयाः । तत्र प्रातः स्वगृहे ग्निमरण्यादिषु समारोप्य तत्तद्गृहं गत्वा तत्र मथित्वा रणी, अग्निमुत्पाद्य, आहवनीयादिषु कुण्डेषु वं प्रतिबध्य यजेत । एवं प्रतिदिनमेकैष्टिरिति द्वादशसु द्वादशेष्टयः कर्तव्याः । ततः परं स्वगृह एव इन्द्राय सुत्राम्णे पुरोडाशः, इन्द्राया हौमु च एकादशकपाल इत्तोष्टिद्वयमनुष्ठाय, तदनन्तरस्मिन् दिवसे अभिषेचनीयाख्याय सोमयागाय यजमानो दीक्षेत । तत्र दीक्षणीयेष्टिर्मैत्राबार्हस्पत्या भवति । तत्र विशेषः --

श्वेतां श्वेतवत्सां गाम् आम्रफलरसलेपितायां स्थाल्यां दुह्यात् । तत्रैवा तञ्चनमन्तरेण तद् पयो यदा दधि सम्पद्यते तद् स्वयं मूर्तमित्युच्यते । तदा तत्र बदरफलादिकं प्रक्षिपेत् । तदा स्वयमेव तद् पात्रात् बहिः प्रवहेत् । तद् स्वयंमथितमित्यच्यते । तत्र खण्डितैस्तण्डुलैश्चरुं पक्त्वा तेन बृहस्पतये यागं कुर्यात्। अखण्डितैस्तु तैः आज्ये चरु सम्पाद्य तेन मित्रं यजेत। नात्र चरुमृदभाण्डे पचेत्। किन्तु वायुवर्षाघातादिना स्वयमेव भग्नपतितेन अश्वत्थवृक्षीयेण काष्ठेन निर्मिते चतुष्कोणयुते पात्रे चरुः पक्तव्यः । इध्मकाष्ठान्यपि न वृक्षाच्छेत्तव्यानि। किन्तु स्वयमेव पतितानि यानि स्युः तानि ग्रहीतव्यानि। एवं कुशा अपि स्वयं पतिता एव ग्राह्याः । वेदिरपि स्वयं निष्पन्नैव भवेत् । एवं पृथक् पृथक् हविषी सम्पाद, यागकाले प्रथमं बार्हस्पत्यहविषेष्ट्वा अनन्तरं मैत्रेण यजेत् । स्विष्टकृद्यागस्तूभयोरेक एव। शतपथ ब्राह्मणे तु यथोक्तेन प्रकारेण हविस्सम्पादनं पृथक् कृत्वा अनन्तरं ते द्वे अपि हविषी एकीकृत्य मित्रबृहस्पती उद्दिश्य एकीकृतेन हविषा तेन होमं उक्तः । एवं दीक्षणीयेष्टिं परिसमाप्य अभिषेचनीयाख्यसोमयागाय दीक्षयित्वा यावदग्नीषोमीयपशुयागमनुतिष्ठेत् प्रकृतिवद् । अत्र भिषेचनीयस्य दीक्षादिनानि तथा अभिवर्धयेत्

यथा तस्य संवत्सरस्य दशसु रात्रिषु अवशिष्टासु दशपेयस्य प्रधानहविरनुष्ठानं भवेत् । तत्र सोमक्रयकाले अभिषेचनीयाय दशपेयाय चाग्रे नुष्ठास्यमानय सहैव सोमक्रयं कुर्यात् । तत्रार्ध दशपेयाया वशेष्य, यजमानपुरोहितस्य गृहे वस्थाप्य अर्धेन यागं कुर्यात् । अभिषेचनीयगताग्नीषोमीयपशुपुरोडाशयाग-समाप्त्यनन्तरम् अष्टौ देवसुवा हवींषि निर्वपेत् ।

तानि च - 1- अग्नये गृहपतये पुरोडाशो ष्टाकपालः 2- सोमाय वनस्पतये श्यामाकश्चरुः, 3- सवित्रे सत्यप्रसवाय पुरोडाशो द्वादशकपालः, 4- रुद्राय पशुपतये गावीधुकः (अरण्यगोधूमकृतः) चरुः 5- बृहस्पतये वाचस्पतये नैवारश्चरुः, 6- इन्द्राय ज्येष्ठाय पुरोडाश एकादशकपालः, 7- मित्राय सत्याय चरुः, 8- वरुणाय धर्मपतये यवमयश्चरुः इति । एते ष्टौ यागा अनुष्ठेया इति यावत् ।

तत्र प्रधानयागानुष्ठानान्तरं स्विष्टकृयागात्पूर्व ब्रह्मा यजमानस्य राज्ञो हस्तं गृहीत्वा तद्राष्ट्रस्थाभ्यः प्रजाभ्यो राजन्यवैश्यादिभ्यो राजानं निवेदयेत् - एष वो भरता राजा इति। तस्य पित्रादिनामान्यपि कथयेत् - अमुष्य पुत्रः इत्यादि ततो यजमानो राजा विष्णुक्रमादीन् इष्टाविव क्रामेत्। ततो माहेन्द्रस्तोत्रात्पूर्वतनानि कर्माणि यथावदनुष्ठाय माध्यन्दिनसवनीयानां हविषां मारुतस्यैकविंशतिकपालपुरोडाशस्य च निर्वापं कृत्वा तानि यथा-वदनुतिष्ठेत् ।

ततो राज्ञस्तस्याभिषेकार्थं ततत्स्थानेभ्यो जलमाहरेदध्वर्युः । तद्यथा- समुद्रात्, पुनदात्, वहन्तीभ्यो द्भ्यः स्थावराभ्य इत्यादि। तच्च षोडशभ्यः स्थानेभ्यः तावत्प्रकारमानयेत् । तत्र दध्नः, पयसः घृतस्य, मधुनश्च गृह्णीयात् । आनीय वैतसे चतुष्कोणे बृहति पात्रे निनीय, मैत्रावरुणधिष्ण्यस्य अग्रे स्थापयेत् । ततस्ता अपः पालाशे औदुम्बरे आश्वत्थे नैयग्रोधे च पात्रे व्यानयेत् । ततो राजानं तार्प्यं, पाण्डरं वासः, उष्णीषं च परिधापयेत् । घृतावतः कम्बलः तार्प्यम् इत्युच्यते । ततः तं दर्भपुञ्जीलैः

पचयित्वा, दधि, उदुम्बरफलानि, बालतृणानि च आशयित्वा, तं जनेभ्यो-अयं वो भरता राजा इति, धनुस्तस्मै प्रदाय, बाणांस्त्रीन् दत्त्वा आहवनीयस्य अग्रभागे शार्दूलचर्म आस्तीर्य तस्मिन् शतसुवर्णपरिमितं हिरण्यं निधाय, तस्मिन् राजानमुपवेश्य पार्थसंज्ञकान् षड्ढोमान् हुत्वा ऊर्ध्वबाहुं तिष्ठन्तं तं सामवेदीयैः ऋत्विग्भिः माहेन्द्रस्तोत्रगानं यदा क्रियते, तदा ध्वर्युः पालाशेन पात्रेण पूर्वभागे पश्चिमाभिमुखस्तिष्ठन्नभिषिञ्चेत् । औदुम्बरपात्रेण दक्षिणभागे उत्तराभिमुखस्तिष्ठन् ब्रह्मा, पश्चाद्भागे पूर्वाभिमुखस्तिष्ठन् होता, उत्तरभागे दक्षिणाभिमुखस्तिष्ठन्नुद्गाता चाभिषिञ्चेयुः । एवमन-भिषिक्तक्षत्रियः, वैश्यः, कश्चिद् मित्रभूतश्चाभिषिञ्चेयुः ।

ततः नववस्त्रपरिधानपूर्वकं षट् पार्थहोमाननुष्ठाय, रथं कञ्चिदानीय तत्र राजानमारोहयेत् । रथस्तु अश्वत्रययुक्तो भवेत् । पार्श्वद्वयवर्तिनौ च सारथी भवेताम् । तस्य समीपे पुरतः सधनुः राजन्यो व्यवस्थितो भवेत् । तस्मै इषुन् प्रास्य तं जित्वा धनुः पत्न्यै प्रदाय पादयोः वराहचर्मनिर्मिते उपानहौ धृत्वा रथादवरुह्य सौवर्णान् मणीन् कण्ठे प्रतिमुच्य रथविमोचनीयसंज्ञकान् होमान् हुत्वा आहवनीयस्याग्रभागे चतुरस्रां वेदिं निर्माय, तस्यां खादिर-काष्ठनिर्मितां आसन्दीं प्रतिष्ठाप्य, तस्यां चर्मपटमास्तीर्य, तदुपरि यजमान उपविशेत् । तस्य परितः ऋत्विजः ग्रामीणा वैश्याश्चोपविशेयुः । पुरस्तात् अध्वर्युः , दक्षिणभागे ब्रह्मा, पश्चाद्धोता, उत्तरभाग उद्गाता चोपविशेयुः । उपविष्टान् तान् प्रति राजा हे अध्वर्यो ! त्वं ब्रह्मासि, ब्राह्मणो सि, त्वं सवितासि इत्येवं ब्रूयात् । स तु हे राजन् । त्वमेव ब्राह्मणो सि, ब्राह्मणधर्मान् परिपालयन् अस्माननुष्ठापयसि इत्यादि प्रतिब्रूयात् । एवं क्रमेण चतुर्भिः ऋत्विग्भिः राज्ञि स्तुते सति, ततो ब्रह्मा स्फ्यं यजमानहस्ते दद्यात् । स परम्परया अक्षावापहस्तं यदा गच्छति तदा तेन स कितवः, तद्गोदननादिना भूमिं समीकृत्य, तत्र सुवर्णमयान् अक्षान् शताधिकान् प्रास्य, तेभ्यः पञ्च गृहीत्वा, अयं समग्रायाः भुवो राजा भवतु इत्यभिप्रायेण तस्मै दद्यात् । ततो राजा मंगलशब्देस्तानाह्वयेत् । ततो हिरण्यये राज्ञा दत्ते आसने उपविशन् होता शुनःशेपकथां श्रावयेत् । सा च

कथा ऐतरेयब्राह्मणे सप्तमपञ्चिकायां तृतीयाध्याये वर्णिता। तया सह तत्त-म्बन्धनी: ऋचो ऽपि परश्शताः ऋक्संहितागताः परस्सहस्रा वा होता शंसेत्। तां श्रुत्वा स्वा सने उपविष्टो ऽध्वर्युः तं प्रतिगृणीयात् । राजा च शृण्वन्नासीत्। कथान्ते तत्तदासनं तस्मै तस्मै दत्त्वा अभिषेचनीयदीक्षासमये, पत्न्या धृतं स्वर्णं वा ऽध्वर्यवे प्रदाय, मारुतैकपालेष्टिम् आमिक्षायागं च वैश्वदेवमनुष्ठाय, अवान्तरमाहेन्द्रयागं परिसमाप्य, अवभृथदेशं गत्वा अवभृथेष्टिं विधाय, स्नात्वा सपरिवारो गृहमागच्छेत् । एतावता अभिषेचनीयस्समाप्तः।ततः श्वोभूते संसृपां हवींषि दशसंख्याकान्यनुतिष्ठेत् ।

तानि- 1-आग्नेयो ऽष्टाकपालः पुरोडाशः, 2- सारस्वतश्चरुः, 3- सावित्रो द्वादशकपालः पुरोडाशः, 4- पौष्णश्चरुः, 5- बार्हस्पत्यश्चरुः 6- ऐन्द्र एकादशकपालः, 7- वारुणो दशकपालः, 8- सौम्यश्चरुः, 9- त्वाष्ट्रो ऽष्टाकपालः, 10- वैष्णवस्त्रिकपालः पुरोडाश इति दश। अयमत्र क्रमः - दशानां संसृपां हविषां मध्ये सप्त हवींषि प्रतिदिनं क्रमेणैकैकं कृत्वा सप्तमे सप्तम्यामिष्टावतीतायाम् अपराह्णे दशपेयाय संकल्पं कृत्वा सद्य एव द्वादशपुण्डरीकस्रक्प्रतिमोकलक्षणां दीक्षां कुर्यात् । तदानीमेव प्रथमामुपसदं कृत्वा तदन्ते संसृपामष्टमं हविर्निर्वपेत् । अष्टमे दिने उपसदन्ते संसृपां नवमं हविः निरूप्य, नवमे दिवसे तृतीयोपसदन्ते संसृपां दशमं हविर्निरूप्य, तस्मिन्नेवा हनि अग्नीषोमीयपशुप्रचारं कुर्यात् । दशमे ऽहनि सोमो ऽभिषूयते । अभिषवकाले अभिषेचनीययागसमये एतदर्थं क्रीत्वा स्थापितं सोम-स्यार्धमाभिषुणुयुः । ततो ग्रहचमसादिपात्रसंसादनकाले प्राकृतेभ्यो दशभ्यश्च-मसेभ्यो ऽधिकान् दश चमसान् सादयेत् । तानितरचमसपूरणकाले पूरयेत् । चमसहोमकाले एकैकं चमसं दश दश ब्राह्मणा इति शतं ब्राह्मणास्तत्रा वस्थिता भवेयुः । ते च ब्राह्मणाः दशपुरुषं यावदविच्छिन्नसोमपातृकुलोत्पन्ना भवेयुः । चमसान् हुत्वा होमानन्तरं भक्षणार्थम् अध्वर्य्वादिषु सभामण्डपं गच्छत्सु इमेऽपि शतं ब्राह्मणास्ताननुगच्छन्तस्सदः प्राप्य तेषु स्वं स्वं चमसं भक्षयत्सु इमे स्वस्वचमसस्थं सोमरसं दशसंख्यया पिबेयुः । अत एव च कारणात् अस्य क्रतोर्दशपेय इति संज्ञा सम्पन्ना ।

अत्रदक्षिणायामस्ति विशेषः । स चेत्थम् – अध्वर्यवे सुवर्णमयी दर्पणी । उद्गात्रे हिरण्मयी माला । वर्तुलं स्वर्णाभरणं होत्रे । प्रस्तोत्रे प्रतिहर्त्रे चा श्वः । ब्राह्मणे बालगर्भिण्यो दश गावः । मैत्रावरुणाय वन्ध्या गौः। ब्राह्मणाच्छंसिने बलीवर्दः । नेष्ट्रे पात्रे च धौतवस्त्रम् । अच्छावाकाय यवपूर्ण स्थूलशकटम् । अग्नीधे नोवहनसमर्थ वृषभ इति देयाः । सर्वमन्यत् प्रकृतिवत् । एवं दशपेयाख्यं सोमयागं परिसमाप्य, तदुत्तरभाविन्यां वैशाख्या पूर्णिमायां केशवपनीयाख्यसोमयागार्थं दीक्षेत । अभिषेचनीयाख्यं सोमयागमनुष्ठाय ततः पशुयागद्वयं कुर्यात् । संवत्सरपर्यन्तं केशानां वपनं न कारयितव्यम् । तदेतत् वृत्तं भवति । अतस्तद्विसर्जनार्थं कश्चन सोमयागः कार्यः । स एव केशवनीय इत्युच्यते । सो तिरात्रसंस्थाको भवेत् । तत्र स्तोत्रेष्वयं विशेषः प्रातस्सवने सर्वाण्यपि स्तोत्राणि एकविंशस्तोमकानि। माध्यन्दिने सर्वाणि स्तोत्राणि सप्तदश स्तोमकानि । तृतीयसवने अग्निष्टोमवत् द्वादश स्तोत्राणि । तत उक्थ्यस्तोत्राणि त्रीणि। षोडशिस्तोत्रमेकम् । रात्रिपर्याणि स्तोत्राणि द्वादश। सर्वाण्यपि इमानि स्तोत्राणि पंचदशस्तोमकानि कार्याणि। अतिरात्रस्तोत्रानन्तरं पूर्वदिवसरात्रिशेषे उत्तरदिवसस्योषः काले यज्ञसमाप्तिसम्पादकमेकं चरमं स्तोत्रं तृतीयपर्यायस्यान्ते रथन्तरसाम्ना गातव्यम् । तत् सन्धिस्तोत्रमित्युच्यते। तत् त्रिवृत्स्तोमयुक्तं कार्यम् । एवं च अस्मिन् क्रतौ स्तोमानाम् एकविंशादारभ्य त्रिवृत्पर्यन्तमवरोहणक्रमेण निवेशो वगन्तव्यः ।

इतः परं व्युष्टिद्विरात्रः, क्षत्रस्य धृतिरिति सोमयागद्वयमवशिष्टम्। तत्र व्युष्टिद्विरात्रे प्रथमदिनमग्निष्टोमसंस्थाकम् । द्वितीयमहरतिरात्रसंस्थाकम्। पूर्णिमायां प्रथममहरनुष्ठेयम् तदनन्तरमष्टमाष्टम्यां उत्तरमहः । सर्वमन्यत् तत्तत्प्रकृतिवत् । ततः क्षत्रस्य धृतिः । सोऽग्निष्टोमसंस्थाकः । त्रिवृत्पञ्चदशसप्तदशाख्यैः त्रिभिरेव च स्तोमैर्युतः । सर्वमत्रा न्यत् यथाप्रकृति। एतावता समाप्तो राजसूयक्रतुः । राजसूयं परिसमाप्य सौत्रमण्या यजेत । तदनुष्ठानप्रकारः पूर्वमेवोक्तम् ।

अश्वमेधः

अथेदानीमश्वमेधाख्यमहायागस्य स्वरूपं निरूपयामः । यो नाभिषिक्तछत्राधिपतिः सार्वभौमः, अर्थात् – समग्रस्य भूमण्डलस्य शासिता, यस्य वशे न्ये सामन्ता राजानो वर्तन्ते तेनैवायमनुष्ठेयो यज्ञः । न साधारणक्षत्रियस्य ब्राह्मणवैश्ययोर्वा तत्र अधिकारः । अयं मुख्यः कल्पः । असार्वभौमस्याप्यश्वा गौणतया मन्यन्ते सूत्रकाराः आपस्तम्बप्रभृतयः । कात्यायनस्तु राजसामान्याधिकारिकं राजसूयवदिमं यज्ञं कथयति । अतः राजयज्ञः इत्यप्यस्य व्यपदेशं पश्यामो ग्रन्थेषु । श्रौतकर्मसध्ये यागो यं प्रधानतमलभत स्थानम् । यद्यप्ययं सोमयागः तथापि अत्र सवत्तीपशुरश्वः, स च महोपकारकेषु परिगणित इति कृत्वा तस्यैव नाम्ना यागो यं अश्वमेधः इति व्यवहारं भजते । सर्वफलप्रदो यं क्रतुः । ब्रह्महत्यादिमहापातकनाशकः । नैतादृशं कर्मान्तरमस्ति श्रेष्ठतमं श्रुतिस्मृतिपुराणादिषु इत्युक्तं सर्वत्र । ब्रह्महत्यादीनि महापातकानि कृत्वा यस्तदपनोदकं श्रुतिस्मृत्यादिविहितं न शक्नोति प्रायश्चित्तमनुष्ठातुं सो वभृथ आश्वमेधिके स्नात्वा तस्मान्महापापाद्विमुक्तो भवेत् । राज्ञस्तु सर्वलाभप्रदः, सर्वराजजयचिह्नभूतो यमिति सर्वस्याप्त्यै, सर्वस्य जित्यै, सर्वमेव तेनाप्नोति, सर्वं जयति इति श्रुतेरुद्घोषः।

यागस्यास्याङ्गभूता बहवो ग्राम्या आरण्याश्च पशवः । तेष्वश्च एव प्रथमः प्रधानभूतश्च । सो पि न साधारणः । किन्तु – यज्ञशरीरे पूर्वभागे कृष्णवर्णः, पश्चार्धे श्वेतः, ललाटे शकटारपुण्ड्युतः गभीराकृतिश्च भवितुमर्हति किं च पूर्वमसकृत्¹ पायितसोमरसाभ्यां मातापितृभ्यामश्वाभ्यां जातः जातमात्र एव जलान्तरपानात् पूर्वं पायितसोमरसो यो श्वः तं यथावत् वर्धयित्वा रक्षेत् । सति समये तेनैव यागं कुर्यात् । तत्र कस्यांचिद्दुष्टायां चैत्र्यां

---

1 – मातापितृभ्यामपि उत्पत्त्यनन्तरमेव कृतसोमपानाभ्यां भाव्यमिति सूत्रकार
द्र० – आप०श्रौ०सू० 20·2·11.

पौर्णमास्यां सांग्रहणीं नगर्भेष्टिं कृत्वा, तदनन्तरमैशाख्यां प्रजापतिदेवताकं पशुयागमनुष्ठाय, अनन्तरामावास्यायाम् ऋत्विज आहूय, अमावास्येष्टि-मनुष्ठाय यत्राश्वमेधयागः कर्तव्यतया निर्धारितः स्थानं तद्गत्वा, वपनं कारयित्वा, अहतं नूत्नं वासः परिधाय तद् दिनं समग्रं मौनव्रतं धारयन्नासीत्। मध्ये प्राप्तं सायंप्रातःकालिकमग्निहोत्रं तु मन्त्रेण कुर्वीत । ततो द्वितीये ह्नि प्रातरुद्यं यन्तमादित्यं मन्त्रैरुपस्थाय, प्राग्वंशाख्यं यज्ञमण्डपं प्रविश्य, एकादश पूर्णाहुतीः अन्याश्च काश्चनाहुतीः यजमानो जुहुयात् । ततः चतुर्भ्यो दिग्भ्य आहृतासु अप्सु ब्रह्मौदनं पक्त्वा तद् महर्त्विग्भ्यः अध्वर्युब्रह्महोतृद्गातृभ्यो दत्त्वा तेन तानाशयित्वा समुचिते काले यागार्थं संकल्प्य, तं यज्ञियाश्वमानीय, तेन सह चतुरक्षं श्वानं च आनीय तडाग-ह्रदादिमहाजलं तावुभौ प्रवेश्य नीत्वा, यत्र शुनः पादा भूमिं न स्पृशन्ति तत्र सैध्रकेण १ मुसलेन[1] तं श्वानं हत्वा अश्वस्य पादानामधस्तात् प्रास्येत्। तत्रैव स्थितमश्वं चतसृषु दिक्षु अश्वस्य परितो वस्थितामहर्त्विजो राजपुरुषा-न्विताः प्रोक्षेयुः। प्रोक्षणप्रकारश्चेत्यम् - अश्वस्य पूर्वदिशि राजपुत्रशतेन परिवृतो ध्वर्युः प्रोक्षेत् । राजपुत्राः ये अभिषिक्त क्षत्रियाणां पुत्राः स्वयमनभिषिक्ता राज्यार्हाश्च तेषां शतेन सह प्रोक्षणं विहितम् । क्षत्रियाः सन्तोऽपि ये राज्यानर्हाः शूराश्च तैः सहितो ब्रह्मा अश्वस्य दक्षिणभागे उत्तराभि-मुखस्तिष्ठन् अश्वं प्रोक्षेत् । सारथीना ग्रामनेतॄणां मिलितानां शतेन ब्रह्मा अश्वस्य पश्चिमभागे प्राङ्मुखस्तिष्ठन प्रोक्षेदश्वम् । क्षत्तॄणां काशाभिसारिणां च मिलितनां शतेन सहोद्गाता उत्तरस्यां दिशि दक्षिणाभिमुखस्तिष्ठन् प्रोक्षेत् । प्रोक्षणकाले भूमौ पतितान् जलबिन्दूनभिमन्त्रयेत् ।

ततो ध्वर्युरेक एव सर्वदेवतासम्बन्धितया तमश्वं चतुर्षु दिग्विभागेषु उपरिष्टाच्च प्रोक्ष्य, अश्वमुत्सृजेत् भूपरिभ्रमणार्थम् । तेन अश्वेन सह

- - - - - - - - - - - - - - - - - - - - - - - - -

1- सैध्रकौ महासारो वृक्षविशेषः द्र० सायणभाष्य- तै०ब्रा० ३.८.४.।

तद्रक्षणार्थं चतुश्शता इषुधन्विनो वीरपुरुषा गच्छेयुः । स यावद्भूमिं यथेष्टं परिभ्रम्य एकस्मिन् वर्षे आगच्छेत् तावत् ते तं रक्षेयुः । यदि कश्चिद्राजः शूरत्वं स्पर्धया मध्येपथं गृह्णीयात् तदा रक्षिणस्तेन सह युद्ध्वा अश्वं परावर्त्यानयेयुः । यदि न शक्यते, पुनः पूर्ववत् तादृशमेव अश्वमेकमानीय पुनः प्रोक्ष्य रक्षिभिः सह विसृजेत् । यावदश्वः पुनः स्वस्थानं न परावर्तते तावद्यागो नानुष्ठातुं शक्यते । अतो यमश्वमेधो महाधनिनाऽपि सत्ता नानतिबलेन अनुष्ठातुं शक्यते । किन्तु यस्सर्वान् स्वबलेना निभवितुं शयनोति तेनैवायमनुष्ठेयः । श्रिया, यशसा, जपेन च य आत्मनः श्रेष्ठ्यां प्रेप्सति, स स्यात्र अधिकारीति श्रुतयः स्मृतयश्च । एवं शतमश्वमेधान् यो राजा यथावदनुतिष्ठति स देवाना राजा इन्द्रः भवतीति पुराणान्युद्घोषयन्ति ।

स यावत् परिभ्रम्यः पुनः स्वस्थानमागच्छति तावत् यजमानः प्रतिदिनं विष्णुक्रमणसंज्ञकान् कांश्चन होमान् कुर्वन् सायं प्रातश्च वीणागाथिनौ ब्राह्मणराजन्यावाहूय ताभ्यां स्वापदानं गापयेत् । तत्र प्रातः (दिवा) ब्राह्मणः राज्ञा कृतं दानयज्ञादिपुण्यकर्म वीणायां गायेत् रात्रौ राजन्यस्तदीयशौर्यवीर्यबलपराक्रमादिकं गायेत् वीणायामेव । तदुभयं शृण्वन्नासीत राजा । ततो हिरण्मय आसन आसीनो होत्रा शस्यमानं पारिप्लवं शृणुयात् ।

एवं प्रतिदिनं यावद्वत्सरं कुर्वन् यज्ञियाश्वस्य प्रत्यागमनं प्रतीक्षमाण आसीत् तत्र अश्वभ्रमणकाले विविधा विचित्रमाश्च होमा आहवनीयाद्यग्निषु मध्येपथम् अश्वपदनिक्षेपस्थलादौ च कर्तव्यतया विहिताः । स्वमश्वाङ्गानि मुखदन्तहनुस्मादादीनि गमन-धावन-क्रन्दन-ह्रेषण-शयना-घ्राण-प्रभृतीन्यश्वचरितानि च देवतीकृत्य तेभ्यो होमाः कर्तव्याः ।

अत्र सुत्यात्रयमित्युक्तम् । तत्र प्रथमदिनकर्तव्यायां सुत्यायां न कोऽपि विशेषोऽनुष्ठाने। द्वितीयदिने प्रातस्सवने बहिष्पवमानस्तोत्रार्थं गत्वा तत्रोद्गातारम् उद्गीथाख्यद्वितीयभक्तिगातारं निवार्य तस्य स्थाने अश्वमेव

प्रकृतमुद्गीथाय वृणुयात् । तस्य समीपे वडवाः स्त्रीरूपा अश्वाः स्थापयेत् । ता दृष्ट्वा स यज्ञियो अश्वः यं शब्दं कुर्यात् स एव उद्गीथः । ततस्तस्मिन्नेव दिने प्रातस्सावनिकग्रहग्रहणानन्तरमश्वप्रभृतीनां पशूनां यागोऽनुष्ठेयः ।

तत्र यूपा एकविंशतिसंख्याका भवेयुः । ते वेदेरुत्तरकोणादारभ्य दक्षिणकोणपर्यन्तं निखातव्याः । तत्र आहवनीयाग्नेः साक्षात् पूर्वभागे यो निखातव्यः स मध्यमः । स च राज्जुदालवृक्षनिर्मित एकविंशत्यरत्निपरिमाणो भवेत् । स एवाग्निष्ठशब्देनोच्यते । तत्रैवाश्वो नियोक्तव्यः । तस्य यूपस्य दक्षिणोत्तरयोः द्वयोः पार्श्वयोः पीतुद्रुम (देवदारु) वृक्षनिर्मितौ द्वौ यूपौ भवतः । तदनन्तराः उत्तरभागे त्रयः दक्षिणभागे च त्रयः इत्याहत्य षट् बिल्ववृक्षनिर्मिता यूपा भवन्ति । तदनन्तराः एकस्मिन् भागे त्रयः इति कृत्वा द्वयोः पार्श्वयोः षट् खादिरा भवन्ति । तेषामप्यनन्तरं एकैकस्य भागस्य त्रयः इति षट् पलाशवृक्षनिर्मिता भवन्ति । एवमाहत्य एकविंशतियूपा निखातव्याः । ततो अश्वशरीरं समन्ततो रशनया आवेष्ट्य, तस्यां तत्स्थानस्थितायां रज्ज्वां बन्धनीयाः तूपराख्यः पशवस्त्रयोदश। ते अश्वाङ्गे बध्यमानत्वात् पर्यङ्ग्या इत्युच्यन्ते । तद्बन्धनप्रकारश्चैत्थम् - 1- अश्वस्य ललाटे आग्नेयम्, 2- तस्य पश्चाद्भागे पौष्णम्, 3- अश्वस्योपरिभागे ऐन्द्रपौष्णम्, 4- बाह्वोः दक्षिणोत्तरयोः आग्नेयौ कृष्णग्रीवौ, 5-त्वाष्ट्रौ अवध्यौ: (ऊर्वोः) 6-बार्हस्पत्यौ श्वेतपृष्ठौ पार्श्वे, 7- श्वेतवर्णोदरयुक्तं धातृदेवताकमश्वस्य अधोभागे, 8- श्वेतमजं पुच्छे, 9-सूर्यदेवताकं कृष्णवर्णमजं दक्षिणपार्श्वे, 10- यमदेवताकं कृष्णवर्णं वामपार्श्वे। विचित्रो यं प्रकारो नान्येषु यागेषु दृश्यते । अश्वमेधे सुपर्णचितिं निर्माय तदुपर्यग्निं प्रतिष्ठाप्यापि यागोऽनुष्ठातुं शक्यते । एकविंशतिसंख्यकेषु यूपेषु नियोज्यमानानां पशूनाम् आहत्य संख्या नवत्युत्तरं शतत्रयम् (390) एते ग्राम्याः पशव उच्यन्ते

---

1- चतुर्विंशतिरङ्गुल्यो रत्निः । एवमेकविंशत्यरत्निपरिमितः 504 अङ्गुलिपरिमितो भवेदूर्ध्वतायाम् । अन्ये यूपाः पञ्चारत्नयः ।

ग्राममेव वसन्तीति । तत्तद्यूपान्तरालेषु धारयितव्या: आरण्या: पशव: । अरण्यमात्रवासिनस्त आरण्या उच्यन्ते। संख्येयं पशूनां तै त्तिरीयशाखानुसारेण। माध्यन्दिनशाखानुसारेण तु एकोनपञ्चाशदुत्तरशतत्रयं (349) ग्राम्या: पशव: । षष्ट्युत्तरं शतत्रयं (360) आरण्या: पशव: । अत्र ग्राम्या: पशव: तत्तद्-गुणाकृतिविशिष्टा अजा एवोपदिष्टा बहुलतया। जात्यन्तरस्यापि क्वचिद-त्यल्पशो विधानमस्ति। ते यूपेष्वेव बन्धनीया: । आरण्येषु पशुषु सिंहगज-व्याघ्रश्वापदादय:, नैके च पक्षिविशेषा:, मीनमण्डूकसरीसृपादयश्च संगृहीता:। ते च तैस्तै: शाकुनिकैर्मृगयुभिश्च जालवागुरादिभिर्गृहयित्वा यूपान्तरालेष्व-वस्थाप्या: । सर्वेषु पशुषु तिष्ठत्सु प्रत्येकं तेषामुपाकरणपर्यग्निकरणे कृत्वा, आरण्यान् ततो मसार्थ अरण्यं नीत्वा सिंहव्याघ्रादीन् तत्रोत्सृजेदुपायेन । ग्राम्याणां पशूनां तु संज्ञपनादि सर्वं पाशुकं कर्मानुष्ठाय तदनन्तरमेव तद्दिद-नीयसौमिकव्यापारानुष्ठानं कर्तव्यम् ।

तत्र, अश्वसंज्ञपनार्थं धूतावलं कृत्वा बलं भूमौ प्रथममास्तीर्य, तदुपरि चर्ममयमाच्छादनपटमास्तीर्य तदुपरि सुवर्णफलकमास्तीर्य तदुपर्यश्च प्राक्शिरसम् उदीच्यपादं शायपित्वा संज्ञपयेत् । संज्ञपनं प्राणवियोजनम् । तत: राज्ञ: पत्न्य: महिषी, वावाता, परिवृक्ती इति तिस्रोऽपि अश्वं परियन्ति । ततो महिषी मृतस्याश्वस्य पार्श्वे च शयानां तं गर्हेत् ग्राम्यैर्वचनै: । अनन्तरं तस्य विशसनं कृत्वा चन्द्राख्यं मेद उद्धरेत्, यतो ह्यश्वस्य वपा न विद्यते । तत: तूपरगोमृगयोर्वपे उद्धृत्य तत् त्रयमपि श्रपयित्वा प्रजापतये आश्रावण-प्रत्याश्रावणे कृत्वा तद्धविस्त्रयमपि युगपत् प्रजापतये जुहुयात् । ततो ह्यश्वलोहितं स्विष्टकृदर्थं क्वचित् पात्रे निक्षिप्य, प्रजापतदेवताकान् षड्ढोमान् हुत्वा, यजमानं व्याघ्रचर्मणि सिंहचर्मणि वा उपवेश्य ऋषभस्य चर्मणि यजमानस्योपरि धार्यमाणे सति यजमानशिरसि सुवर्णं शतकृष्णलमितं निक्षिप्य यजमानमभिषि-ञ्चेत् । ततो यजमानो मुखं विमृज्य, अध्वर्युणा प्राजापत्यासु षट्सु आहुतिषु क्रियमाणासु विष्णुक्रमान् क्रमेत् । ततो वैतसे कटे अश्वं निपात्य प्राक्शिरसं तदङ्गान्यवद्येत् । एवमश्वस्य पुरोभागे पश्चिमशिरसं तूपरं पश्चाद्भागे

प्राक्शिरसं गोमृगं च शाययित्वा तदङ्गानामवदानं कुर्यात् । अश्वस्य दक्षिणतः प्लक्षशाखा वितत्य पशून् शाययित्वा हृदयाद्यङ्गानां मुद्धरणं कृत्वा वेद्यामासाद्य, अश्वतूपरगोमृगाणां निरवशेषं होमं कृत्वा यत्र ते शायितास्तमपि कटमग्नौ प्रक्षिपेत् । तत आहवनीये आज्येन शरीरहोमान् हुत्वा, अश्वस्य लोहितेन स्विष्टकृतं हुत्वा, गोमृगस्य कण्ठेन अश्वशफेन अयस्मयेन कमण्डलुना च क्रमश आहुतित्रयं हुत्वा ततो यथाप्रकृति पत्नीसंयाजान्तमनुष्ठाय तदहर्विरमयेत् ।

तदनन्तरदिवसे सर्वस्तोममतिरात्रसंस्थाकं सोमयागमनुतिष्ठेत् । इदं तृतीयं सुत्यादिनम् । तस्मिन् दिने सौमिकान् व्यापारान् यथाप्रकृत्यनुष्ठाय सवनीयपशूपाकरणकाले एकादश पशून् प्राजापत्यान् वैश्वदेवान् वा पशुयागान् अन्ते प्राजापत्यमेकं पशुयागं च कृत्वा ततो यथाप्रकृति कर्तव्यानि सर्वाणि कर्माण्यनुष्ठाय, अवभृथेष्ट्यनुष्ठानपूर्वकमवभृथस्नानं विधाय, अत्रिगोत्रोद्भवं, केशरहितमस्तकं, सर्वदा स्वेदनशीलं, श्वेतकुष्ठं पिंगलवर्णाक्षियुतं कंचन पुरुषमानीय तस्य शिरसि होमविशेषत्रयमनुष्ठाय तस्मै शतं सुवर्णानि अनोयुक्तानि दत्त्वा ग्रामं गच्छेत् । ग्रामिणा अपि पुरुषाः सहैव गच्छेयुः । ततस्त्वधात्वधीयेष्टिमुदवसानीयास्थाने कृत्वा तदनन्तरम् ऋतुपशुभिः संवत्सरं यावद्यजेत। तत्तदृतावनुष्ठेयतया ये विहिताः पशवस्ते ऋतुपशव उच्यन्ते समाप्तोऽश्वमेधः ।

अश्वमेधस्य सर्वयज्ञश्रेष्ठता

अयं चातिकठिनः क्रियासमूहः । अतिकुशलैः कण्ठाग्रविलसत्पद्धतिभिः ऋत्विग्भिरेवा नुष्ठापयितुं शक्यते । न सामान्यपुरुषैः । यतोऽस्य प्रयोगो ऽत्यन्तं जटिलः प्रकृतावपरिचितपदार्थशतसंकुलश्च । किंचास्या नुष्ठानमनेकशतवत्सरेभ्यः पूर्वमेव विलुप्तम् । यतस्तादृशा अधिकारिणो बहोः पूर्वमेव विलोपं गताः । परं विक्रमोपसंवत्सरत्रयोदशचतुर्दशशतकपर्यन्तं भारतीये राजभिर्यथाकथंचिदनुष्ठित आसीदिति वयमितिहासमुखादवगच्छामः । परमतिप्राचीन

वैदिककालादारभ्या स्मद्देशे प्रसिद्धिं गतो यं यागः , आत्मीकानैरेव वेद-म्प्रथमतया ज्ञात इति श्रुतिपरामर्शेनावगम्यते । सति चैवं स्तद्विषयकं परिज्ञानमस्माकं भारतीयानां पाश्चात्यदेशादधिगतम् । ग्रीकप्रभृतिषु पाश्चात्यदेशेषु अतिप्राचीनादारभ्य समयात्, प्रथमम् - अश्वस्य हविष्द्वसम्पादनेन देवताभ्यो दानमित्यादिका प्रसरं गता आसीत् । अनन्तरं भारतदेशीयैस्त्या शिक्षिता तेभ्य एव इति यत् केचन पाश्चात्याः पण्डिताः कथयन्ति तत् सर्वथा वस्तुयाथार्थ्यापलापमात्रम् । यतस्त्वेवं वैदिकी परिपाटिरास्माकीनैव अस्मद्-यज्ञैव देशान्तरीयाभ्यस्ताभ्यो तिप्राचीना, अनिर्ज्ञातोत्पत्तिकाला इत्यत्र नास्ति संशयस्य कियानप्यवकाशः । अस्मत एव च प्रथमरब-देशीयैः शिक्षिता, ततो इजिप्ट-देशीयैः, ततो रोमकैः, तेभ्यश्चाङ्गलैः । एवमास्माकीना सभ्यता देशान्तरं गता । आङ्गलास्सभ्यतामिमां रोम-देशादेवाशिक्षन्त इति कृत्वा ते तमेव देशमस्या ९ परमं मूलं मन्वते । तदिदं तेषामुपरिप्लवनमात्रम् । परं तेष्वपि केचित् तत्त्वविमर्शकाः तत्त्वं नापलपितुमीहन्ते । अस्तु, न नात्र दूरतरं गन्तुमिलषामो विस्तराद्भीताः । अतो अश्वमेधयागः अनादिकालिको वैदिकानां कर्मणां मध्ये प्राधान्यं परमं गतः सार्वभौमकर्तृको महापुण्यप्रद इति सिद्धम् ।

## पुरुषमेधः

एवं पुरुषमेधोऽपि वेदेषु विहितो दृश्यते । पुरुषमेधोऽपि अश्वमेधवत् सोमयाग एव। स पञ्चसुत्यात्मकः पञ्चाहः अहीनः क्रतुः । अत्र श्रवणमात्रेणैवं प्रतीयते- यथा अश्वमेधे अश्वस्य संज्ञपनविशसनादिकं कृत्वा यागः क्रियते तदीयाङ्गैः, एवमत्रापीति । कथयन्त्यपि लिखन्त्यपि च केचनैवं तत्र । परं वस्तुगत्यां नैव तथा । पुरुषां चोदितानां तत्त्वेतायै यथाविधि उपाकृत्य तत उत्सर्ग एव, न विशनादिकम्, वपादीनामुद्धरणम्, अग्नौ प्रक्षेपणात्मको होमो वा । तैत्तिरीयवाजसनेयब्राह्मण-योरेषां विधिकदम्बकं दृश्यते । तत्र पुरुषपशवः द्व्यूनं द्विशतं(198) विहिताः तत्त्वेवतोद्देशेन। अजा अपि तैस्सह विधानमुपगताः । अजानामेव यूपेषु बन्धनसंज्ञपनविशसनवपोद्धरणादयो

व्यापारा अनुष्ठेयतयोक्ताः । पुरुषपशूनां तत्तद्देवताभ्य उपाकरणानन्तरं तान् नारायणात्मना ध्यात्वा तथैवोत्सृजेत्(जीवतामेव परित्यागः कार्यः)। तेषां परमपुरुषात्मना ध्यानसमय एव पुरुषसूक्तमन्त्राः पठनीयाः । तदर्थमेव प्राधान्येन सूक्तमिदं प्रवृत्तम् । अतश्च हिंसायाः पुरुषमेधे अवसर एव नास्ति । सत्यामेवं वस्तुस्थितौ यत् कैश्चिदेवमुच्यते - वैदिकसभ्यतायां पूर्वकाले पुरुषमेधोऽपि प्रथित आसीदिति, तत् पुरुषमेधशब्दश्रवणमात्रेण सञ्जातभ्रमाणां पुरुषाणां तेषां स्वमनीषाविलासमात्रम्, न तु तात्त्विकी स्थितिरिति विचारयामः । कुतः ? कस्यामपि शाखायां क्वचिदपि वा श्रौतसूत्रे पुरुषमेधे पुरुषस्य हिंसाया अश्रवणात् । किन्तु सर्वेषु वेदेषु श्रौतसूत्रेषु च तान् पुरुषपशूनिकत्र संघीकृत्य, उपाकृत्य, भगवन्नारायणरूपेण ध्यात्वा तथैव तानुत्सृज्य, त्यक्तरागद्वेषः स्वीयं सर्वमपि एवं तस्मिन् यज्ञे दक्षिणात्वेन ऋत्विग्भ्यो ब्राह्मणेभ्यश्च दत्त्वा अरण्यमुपेयात् इत्येव विधिर्दृश्यते । अतः पुरुषाणामनित्येषु पदार्थेषु वैराग्योत्पादनार्थैव अथमेतावान् परिकर इत्येव प्रतीयते ।

यत्तु ऐतरेयब्राह्मणगतं शुनःशेपोपाख्यानं पुरुषमेधे प्रमाणतया प्रदर्शयन्ति, न तदपि युक्तम् । तत्र हिंसाया अविधानात् । जीवत एव शुनःशेपस्य परित्यागोक्तेः । तत्र कारणकथने या कापि भङ्गी समाश्रिता भवतु, फलतो जीवत उत्सर्गस्यैव विधानम् । अतः पुरुषमेधे पुरुषाणां पर्यग्निकरणानन्तरमुत्सर्ग एव शास्त्रसम्मत इति फलति । एवं पुरुषानुत्सृज्य, अजैर्यथावत् पाशुकं कर्मानुष्ठाय तत्संवलितान् सौमिकानपि व्यापारान् तदुक्तसंस्थानुसारेण यथाविध्यनुष्ठाय उदवसानीयया समापयेत् ।

## सर्वमेधः

एवं सर्वमेधाख्यः क्रतुरपि सोमयागविशेष एव । तत्र दश सुत्याः, द्वादश दीक्षाः, द्वादश उपसदः । एवं चतुस्त्रिंशद्दिनसाध्यो यं क्रतुः । इष्टकाभिस्सम्पादितायाश्चितेरुपरि आहवनीयाग्निस्थापनं कृत्वा तत्रैव याग श्र कर्तव्यः । सुत्यासु पंचमी सुत्या आश्वमेधिकमध्यमसुत्यावदनुष्ठेया । षष्ठी

सुत्या पौरुषमेधिकमध्यमसुत्यावत् । षष्ठ्यां सुत्यायां पुरुषान् पर्यग्निकरणान्ते सुर्वानुत्सृज्य अजादिभिः पशुभिः यागा अनुष्ठेयाः । सप्तम्यां सुत्यायां परिशुद्धानि आर्यभोजनयोग्यानि सर्वाणि व्रीह्यादीन्यन्नान्यानीय, यथावत् पक्त्वा आहवनीये जुहुयात् । ओषधीः वृक्षांश्च आनीय, अल्पशो स्पर्शस्तान् खण्डयित्वा आहवनीये जुहुयादिति विशेषः । अत्राऽपि कर्मणि मनुष्याणां संज्ञपनादिकं किमपि न विहितम् । किं तु उपाकरणान्त उत्सर्ग एव । अतः पुरुषमेधसर्वमेधयोः मनुष्यस्य मारणविशसनादिकमस्तीति कथनं सर्वथा भ्रममूलकमेव।

सवनिरूपणम्

एतदतिरिक्ताः सवा नाम केचन एकाहविशेषाः सोमयागाः तैत्तिरीयब्राह्मणे विहिताः । एकदिनसाध्यास्त इति कृत्वा ते एकाहपदव्यपदेशभाजो भवन्ति। ते च 1-बृहस्पतिसवः, 2- वैश्यसवः, 3- ब्राह्मणसवः, 4- सोमसवः, 5- पृथिसवः, 6- गोसवः, 7- ओदनसवः, 8- मरुत्स्तोमः(पंचशारदीयः), 9- अग्निष्टुत्, 10- इन्द्रस्तुत्, 11- अप्तोर्यामः, 12- विघन इति द्वादश। सूयते ईश्वरत्त्वेन (यजमानः) अभिषिच्यत एभिरिति सवाः इति आचार्यसायणः । तेषामनुष्ठाने विशेषाः परमत्र लिख्यन्ते ।

तेषु प्रथमो बृहस्पतिसवः - तत्र सर्वे स्तोमाः त्रिष्वपि सवनेषु त्रिवृतः (नवसंख्याकाः) । अग्निष्टोमसंस्थाकत्वं पृष्ठस्तोत्रे रथन्तरसामैव च तत्र नियमेन भवति । न ज्योतिष्टोमवत् बृहद्रथन्तरयोर्विकल्पः । तत्र परिस्रजी होता भवति । यस्य शिरसि स्रगाकारेण परित एव केशास्सन्ति, न तु मध्ये, स परिस्रजी (खलतिः) इति सायणः । स च होता सन्ध्याकालवर्णसदृशरक्तवर्णः पुनः पुनरतिवेगेन चक्षुरुन्मीलननिमीलनयुक्तः वेदत्रये सम्यग्ज्ञानवांश्च भवेत् । अस्मिन् यागे त्रयस्त्रिंशत् (33 गावः दक्षिणात्वेन ऋत्विग्भ्यो देयाः । ताः समशो विभज्य एकैकस्मिन् सवने एकादश(11) इति कृत्वा त्रिष्वपि सवनेषु दद्यात् । यागसमाप्त्यनन्तरं यजमानं कृष्णाजिने उपवेश्य, तमृत्विजो जलेन प्रथमं तत आज्येन चाभिषिञ्चेयुः । सर्वमन्यत् प्रतिसोमयागवत् ।

द्वितीयो वैश्यसवः — तत्र।-आग्नेयो ष्टकपालः पुरोडाशः 2- पौष्णश्चरुः, 3- सावित्रो ष्टाकपालः पुरोडाशः, 4- त्वष्टृदेवताको ष्टाकपालः पुरोडाशः, 5- वारुणो ष्टाकपालः पुरोडाशः, 6- द्वादशकपालो वैश्वदेवः सः, 7- एकादशकपालो मारुतः स इति सप्त हवींषि। ततः श्वेतवर्णः चतुर्वर्षः स्त्रीपशुरेक इति अष्टौ यागीयद्रव्याणि । अन्तिमस्य पशुयागस्य प्रधान-होमानन्तरं स्विष्टकृद्यागात् पूर्वं तत्र वृषभचर्म आस्तीर्य, तत्र यजमानमुपवेश्य, दध्ना तमभिषिन्चेत् इति विशेषः । सर्वमन्यत् प्रकृतिवत् ।

तृतीयो ब्राह्मणसवः - तत्र ।- आग्नेय्यो ष्टाकपालः पुरोडाशः, 2- सौम्य एकादशकपालः पुरोडाशः, 3- सावित्रो ष्टाकपालः पुरोडाशः, 4- बार्हस्पत्यो ष्टाकपालः पुरोडाशः, 5- आग्नीषोमीय एकादशकपालः पुरोडाशः, 6- सारस्वतो ष्टाकपालः पुरोडाशः, 7- वारुणो ष्टाकपालः पुरोडाशः, 8- द्यावापृथिव्य एककपालः पुरोडाशः इत्यष्टौ पुरोडाशद्रव्यका यागाः । इष्ट्यादिसमाप्त्यनन्तरं कृष्णाजिनमास्तीर्य तस्मिन् यजमानमुपवेश्य घृतेन अभिषिन्चेत् । अनेतावन्तो विशेषाः । सर्वमन्यत् यथाप्रकृति ।

चतुर्थः सोमसवः - अत्र सोमयागानुष्ठानं नास्ति । किन्तु राजसूये ये सप्त सोमयागाः पवित्रोदयो नुष्ठेयतयोक्ताः, तान सर्वान् सोमयागान् वर्जयित्वा अन्ये अनुमत्यादिसौत्रामणीयागान्ताः सर्वेऽपि यागा इष्टिपशुयागात्मका अनुष्ठेयाः।

पंचमः पृथिसवः - अत्र राजसूयोक्तानि - सोमयागाः, पशुबन्धः, चातुर्मास्यानि इत्येतानि वर्जयित्वा अन्यत्सर्वमनुमत्यादिकं सौत्रामण्यन्तकर्मजात-मनुष्ठेयम् ।

षष्ठे गोसवः - अत्र सवनत्रयगतेषु सर्वेष्वपि स्तोत्रेषु षट्त्रिंशस्तोमाः । उक्थ्यसंस्था। पृष्ठस्तोत्रे बृहत्साम । पवमानस्तोत्रेषु (बहिष्पवमानमाध्यन्दिन-पवमानाख्येषु) त्रिष्वपि कण्वरथन्तराख्यं साम गातव्यम् । अयुतसंख्याका गाः अत्र दक्षिणाः । यज्ञान्ते अचिरदुग्धेन क्षीरेण अत्र यजमानस्य अभिषेकः कार्यः ।

सप्तम ओदनसवः – सुत्यादिने सूर्योदयात्पूर्वमोदनं पक्त्वा, उदित आदित्ये तेनौदनेन आहवनीयाग्नौ आहुतिचतुष्टयं हुत्वा ततः आज्ये, पयसि, दधनि, जले च पृथक् पृथक् पात्रावस्थापिते सक्तून् प्रक्षिप्य, आलोड्य, तत्तमन्थान् कृत्वा, तान् यजमानाय भक्षार्थं प्रयच्छेदध्वर्युः । ततो यजमानहस्ते हिरण्यं बद्ध्वा तैरेव भक्षणावशिष्टैर्मन्थैः परस्परं संसृष्टैः यजमानमभिषिञ्चेत् । आज्यादीनि द्रव्याणि सक्तुभिः संमिश्रितानि मन्था इत्यच्यन्ते । अत्र साक्षादवभृथो नास्ति । किन्तु तत्स्थाने दर्भपुञ्जलीलोद्धूतेन जले यजमानस्य प्रोक्षणमेव । ततोऽग्रे स्थापितं यजमानो रथमारोहेत् । अत्रापि सर्वमन्यत् यथाप्रकृति ।

अष्टमो मरुत्स्तोमः पञ्चशारदीयः – पशुयागसंवलितो यं सोमयागः । अयं पञ्चभिर्वत्सरैरनुष्ठेयः । अत एवास्य पञ्चशारदीय इति व्यवहारः । परं न सर्वाण्यपि दिनान्यभिव्याप्य अस्यानुष्ठानम् । किन्तु चातुर्मास्यवत् तत्तात्पर्वाविकालेष्वेव । अयं चात्रानुष्ठानप्रकारः – प्रथमवत्सरे संकल्पं कृत्वा सप्तदशसंख्याकान् पञ्चवर्षीयानल्पकायान् पुंस्पशून् अस्पृष्टगर्भान् वर्षत्रयवयस्कान् स्त्रीपशूंश्च आनीय सहैवोभयानपि उपाकृत्य, प्रोक्ष्य, पुंपशूनुत्सृज्य, स्त्रीपशूनालभेरन् । एवं द्वितीयवर्षेऽपि पूर्वोत्सृष्टान् पुपशून्, अन्यांश्च स्त्रीपशूनानीयं पूर्ववत् पुंपशून पर्यग्निकरणान्ते उत्सृज्य स्त्रीपशूनालभेरन् । एवं तृतीयचतुर्थवर्षयोरपि पुंपशवः पुराणाः नूतनाश्च स्त्रीपशव आनेयाः । पूर्ववदेव च तेषामनुष्ठानप्रकारः । एवं पञ्चसु वर्षेषु पशुयागानेव अनुष्ठाय षष्ठे वर्षे शरदृतौ कार्तिकमासे पञ्चसु दिवसेषु पञ्च सोमयागा अनुष्ठेयाः । तत्र ये पशवः पूर्वेषु वर्षेषु परित्यक्ताः । तानानीय, प्रथमे दिने त्रयः, द्वितीये दिने त्रयः, एवं तृतीयचतुर्थयोरपि त्रयस्त्रयः, पञ्चमे पञ्च इति सप्तदशानामपि पशूनां सवनीयपशुत्वेन अनुष्ठानं कर्तव्यम् । तत्र पुंपशूनपनाम् इन्द्रो मरुतश्च देवताः, स्त्रीपशूनां केवलमरुतः । पञ्चमे वर्षे पंचरात्राय सोमयागाय दीक्षयित्वा पञ्च संस्थाः क्रमशः एकैकस्मिन् दिने नुष्ठेयाः । तत्र प्रथमदिने त्रिवृत्स्तोमः सर्वेष्वपि स्तोत्रेषु । ततो द्वितीयादि

दिवसेषु पञ्चदशः, सप्तदश, पञ्चदशः, सप्तदश इति स्तोमाः । अग्निष्टोमः, उक्थ्यः, अतिरात्रः इति क्रमेण संस्था भवन्ति । अत्र पशुयागानामङ्गत्वं सोमयागानां च प्राधान्यं भवति । अतः सोमयागा इत्येते ।

एवमग्निष्टुदिन्द्रस्तुदप्तोर्यामविघनाख्याश्चत्वार एकाहाः तैत्तिरीयब्राह्मणयुक्ताः । तत्र विघने- त्रिवृत्पञ्चदशयोः स्थाने द्वादशस्तोमः सप्तदशैकविंशयोः स्थाने चतुर्विंशस्तोमश्च कर्तव्यौ। अन्यत् सर्वमत्र यथा प्रकृति । अप्तोर्यामस्तोत्रादिगतविशेषस्तु पूर्वमेव अभिहितः संस्थानिरूपणप्रस्तावे । इत्येकाहनिरूपणम् ।

द्वादशाहक्रतुः ।

अथेदानीं द्वादशाहक्रतोः स्वरूपं निरूप्यते । द्वादशाहो द्विविधः अहीनात्मकः सत्रात्मकश्चेति । अहीनलक्षणस्य सत्र लक्षणस्य च सत्त्वात् । तथा हि - एकादियजमानकता, यजिधातुना विधानम्, दक्षिणाविधिः इत्यादीनि अहीनलक्षणानि । बहुकर्तृकत्वम्, आसते, उपयन्ति, आसीत, उपेयुः इत्यासोपायिचोदनाचोदितत्वम्, सत्ररूपेण संस्तवः, उभयतो तिरात्रत्वम् इत्यादीनि सत्रलक्षणानि । तदुभयान्यप्यत्र दृश्यन्ते । अतो यमुभयात्मकः । एकाहानामग्निष्टोमो यथा प्रकृतिभूतः एवमहीनानां सत्राणां चायं प्रकृतिभूतः संवत्सरादर्वाक्तनानाम् । तदुपरितनानां तु तेषां गवामयनं प्रकृतिभूतम् ।

अत्र द्वादशाहे द्वादश दिनानि दीक्षाः । ततो द्वादशसु दिवसेषूपसदामनुष्ठानम् । अन्तिमोपसदनि आरम्भतश्चतुर्विंशे दिने उपसदनुष्ठानानन्तरम् अग्नीषोमीयपशुयागानुष्ठानम् । तस्मिन्नेव दिने महारात्रे बुद्ध्वा सोमाभिषवार्थ क्रियाकलापानुष्ठानम्, श्वोभूते बहिष्पवमानादिः तृतीयसवनसमाप्त्यन्तो व्यापारः, पुनर्यथावद्रात्रौ अभिषवक्रियानुबद्धकर्मकलापहत्यादिद्वादशदिनपर्यन्तावर्तनीयक्रियाजातरूपाः द्वादश सुत्याः ।

एवं षट्त्रिंशद्दिनानुष्ठेयो यः द्वादशाहाख्यः क्रतुः । सर्वान्त एवावरूद्धेष्टिः, नैकैकसुत्यासमाप्तौ। तत्र द्वादशानामप्यह्नां संस्थाविशेषाः विशेषेण विहिताः । ते यथा-प्रथमदिनमतिरात्रसंस्थाकम् । द्वितीयमग्निष्टोमसंस्थाकम् । तत्र बहिष्पवमानाद्येषु द्वादशसु स्तोत्रेषु त्रिवृदेव स्तोमः । तृतीयदिनमुक्थ्यसंस्थापकं पन्चदशस्तोमकम् । चतुर्थदिनमुक्थ्यसंस्थापकं सप्तदशस्तोमकम् । पन्चमदिनं षोडशिसंस्थाकमेकविंशस्तोमकम् । षष्ठदिनमुक्थ्यसंस्थाकं त्रिणव(सप्तविंशति) स्तोमकम् । सप्तमदिनमप्युकथ्यसंस्थाकं त्रयस्त्रिंशस्तोमकम् । अष्टमहरूक्थ्यसंस्थाकं चतुर्विंशस्तोमकम् । नवममहरूक्थ्यसंस्थाकं चतुश्चत्वारिंशस्तोमकम् । दशमहरग्निष्टोमसंस्थाकं चतुर्विंशस्तोमकमितरेषु स्तोत्रेषु, अग्निष्टोमस्तोत्रे परं त्रयस्त्रिंशस्तोमकम् । एकादशदिनमग्निष्टोमसंस्थाकमष्टचत्वारिंशस्तोमकम् । द्वादशमहरतिरात्रसंस्थाकम् । दशमदिनस्यातिरात्रसंस्थाकत्वं क्वचिच्छ्रुतम् । एवं रथन्तरम्, बृहत्, रथन्तरमिति क्रमेण होतुः पृष्ठे सामानि । अत्र रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवताख्यानां षण्णां साम्नां पृष्ठसामानीति व्यवहारः । द्वादशाहे स्मिन् द्वितीयादिसप्तमान्तानि दिनानि पृथगेकसंवीकृत्य तस्य च संघस्य षडहः इति संज्ञा कृता श्रुत्यैव। तत्र षडहे पूर्वोक्तानि सामानि क्रमश एकैकस्मिन् दिने एकैकतया पृष्ठस्तोत्रे (होतुः पृष्ठे) गीयन्ते स्तोत्रसम्पादकतया । अत एवास्य षडहस्य पृष्ठ्यः षडहः इति संज्ञा । अत्र उक्त एव विषयः पटिकारूपेण प्रदर्श्यते -

(व्यूढ) द्वादशाहे संस्थास्तोमपृष्ठसामनिरूपणी पटिका

| अहः | संस्था | स्तोमः | अग्रता | साम |
|---|---|---|---|---|
| प्रथममहः | अतिरात्रसंस्था | त्रिवृदाद्यः | ऐन्द्रवायवाग्रता | रथन्तरम् |
| | | पृष्ठ्यषडहः | | |
| द्वितीयमहः | अग्निष्टोमसंस्था | त्रिवृत् | ऐन्द्रवायवाग्रता | रथन्तरम् |
| तृतीयमहः | उक्थ्यसंस्था | पन्चदशः | शुक्राग्रता | बृहत् |
| चतुर्थमहः | उक्थ्यसंस्था | सप्तदशः | आग्रयणाग्रता | वैरूपम् |

| | | | | |
|---|---|---|---|---|
| पञ्चममहः | षोडशिसंस्था | एकविंशः | आग्रयणाग्रता | वैराजम् |
| षष्ठमहः | उक्थ्यसंस्था | त्रिणवः (27) | ऐन्द्रवायवाग्रता | शाक्वरम् |
| सप्तममहः | उक्थ्यसंस्था | त्रयस्त्रिंशः | शुक्राग्रता | रैवतम् |
| अष्टमहः | उक्थ्यसंस्था | चतुर्विंशः | शुक्राग्रता | रथन्तरम् |
| नवममहः | उक्थ्यसंस्था | चतुश्चत्वारिंशः | आग्रयणाग्रता | बृहत् |
| दशममहः | अग्निष्टोमः, अतिरात्रः, उक्थ्यो वा | चतुर्विंशः | ऐन्द्रवायवाग्रता | रथन्तरम् |
| एकादशमहः | अग्निष्टोमसंस्था | अष्टाचत्वारिंशः | ऐन्द्रवायवाग्रता | रथन्तरम् |
| द्वादशमहः | अतिरात्रसंस्था | त्रिवृदादयः | ऐन्द्रवायवाग्रता | रथन्तरम् |

अत्र द्वादशाहे प्रथमस्य अह्नः प्रायणीयम् इति चरमस्य उदयनीयम् इति च संज्ञा । आरम्भसमाप्तिसम्बद्धे इति तदर्थः। दशममहः अविवाक्यम् इत्युच्यते । अनुष्ठानकाले त्र सम्भवन्तो दोषा न वक्तव्या इति तदर्थ इति व्याख्यातारः । अतः स्तोत्रानुसारेण शस्त्राणामपि वृद्धिविशेषादयो भवन्ति। एवं पदार्थान्तरेष्वपि सन्त्यनुष्ठाने प्रकृत्यपेक्षया बहूनि वैलक्षण्यानि, न तान्यत्रोल्लिखितानि ग्रन्थगौरवभिया।

## ग्रहाग्रता

सत्रेषु काचिद्ग्रहाग्रता विहिता । तस्याः स्वरूपं विविच्यते किंन्चिदत्र । सुत्यादिवसेषु प्रातस्सवनादिषु त्रिष्वपि सवनेषु ग्रहाः गृह्यन्ते हूयन्ते च । तत्र प्रातस्सवने बहुषु ग्रहेषु धारातो गृह्यमाणेषु यस्य ग्रहस्य प्रथमं ग्रहणं - यां देवतामुद्दिश्य पात्रे सोमरसः प्रथमं गृह्यते तन्निष्ठा अग्रता (प्राथम्यम्) । यथा - इन्द्रवायु उद्दिश्य प्रथमं पात्रे सोमरसग्रहणे स ऐन्द्रवायवो ग्रहः प्रथमं गृहीत इति ग्रहाणामैन्द्रवायवग्रहाग्रत्वम् । एवं शुक्राग्रता आग्रयणाग्रता इत्यादि बोध्यम् । तत्र व्यूढद्वादशाहे अहस्सु अग्रताः

पटिकायां प्रदर्शिताः । समूढाख्यः कश्चिद् द्वादशाहो स्ति । तत्र प्रथमदशमद्वादशेष्वहस्सु ग्रहाणामैन्द्रवायवाग्रता। द्वितीयादिष्वहस्सु पूर्वोक्ताहर्ववर्जितेषु क्रमेण ग्रहाणामैन्द्रवायवाग्रता, शुक्राग्रता, आग्रयणाग्रता, एतासामेव च पुनर्वारत्रयमावृत्तिः । अर्थात् द्वादशाहद्वितीयदिने प्रातस्सवने ग्रहग्रहणकाले आश्वैन्द्रवायवग्रहं गृहीत्वा ततो न्ये ग्रहा गृहीतव्याः । तृतीयादिने शुक्रग्रहं प्रथमं गृहीत्वा ततो न्ये ग्रहा इत्यादि। इयमेव त्र्यनीया इति याज्ञिकैर्व्यवह्रियते । सेयं त्र्यनीका द्वादशाहादिष्वपरितनेष्वेव क्रतुषु प्रवर्तते । अग्रता तु ज्योतिष्टोमे पि काम्यतया (तत्तत्फलोद्देशेन अनुष्ठेयतया) विधीयते ।

## <u>गवामयनम्</u>

अथ गवामयनाख्यं संवत्सरसत्रं निरूप्यते । क्रतुरयमेकोत्तरषष्ट्यधिकशतत्रयदिनसाध्यः(361) । स त्रिधा विभक्तः -- पूर्वपक्षः विषुवान् उत्तरपक्ष इति । तत्र अशीत्यधिकशतदिनसाध्यं (180) पूर्वपक्षः । अर्थात् तावत्संख्याकाः सुत्याः । तदनन्तरमेकमहः यस्य विषुवानिति संज्ञा । ततो शीत्युत्तरशतदिन(180) साध्यम् उत्तरं पक्षः (तावत्संख्याकाः) । समुदितस्यास्य गवामयनमिति संज्ञा । अर्थवादे क्रतुरयं गोभिरनुष्ठित इति प्रशंसार्थमुक्तत्वात् गवामयनमिति नामास्य सम्पन्नम् ।

| <u>तत्रैवमहः क्लृप्ति</u> | | <u>दिनसंख्या</u> |
|---|---|---|
| प्रथमदिनं प्रायणीयसंज्ञकमतिरात्रसंस्थाकम् | | 1 |
| द्वितीयदिनं चतुर्विंशस्तोमकमुक्थ्यसंस्थाकम् | | 1 |
| ततो भिप्लवाख्यषडहस्य चतुर्वारमावृत्तिः | 6 4 = 24 | |
| ततः पृष्ठ्यषडहः सकृत | 6 अयं एको मासः प्रथममासः | 30 |
| एवमेव चत्वारो भिप्लवाः षडहाः | 4 6 = 24 | |
| एकः पृष्ठ्यषडहः | 6 द्वितीयो मासः | 30 |

| | | |
|---|---|---|
| एवं तृतीयोमासः | | 30 |
| एवं चतुर्थो मासः | | 30 |
| एवं पंचमो मासः | | 30 |
| त्रयो निष्ठवाः षडहाः | 3 6 = | 18 |
| एकः पृष्ठ्यषडहः | | 6 |
| ततो भिजित्संज्ञकम् एकमहः | | 1 |
| स्वरसामसंज्ञकानि त्रीण्यहानि | | 3 |
| | सर्व मिलित्वा | 180 |

| | | |
|---|---|---|
| ततो विषुवाख्यं मध्यममेकमहः (अस्य चेतरापेक्षया सर्वोत्तमत्वमुक्तं श्रुतौ) | | 1 |

तत उत्तरं पक्षः – पूर्वपक्षस्युक्ताहनां वैपरीत्येनानुष्ठानम् । तच्च यथा–

| | | |
|---|---|---|
| प्रथमतः त्रयः स्वरसामानः | | 3 |
| ततो वि वजित्संज्ञकमेकमहः | | 1 |
| एकः पृष्ठ्यः षडहः | | 6 |
| त्रयो मिप्लवाः षडहाः | 6 3 | 18 |
| महाव्रताख्यमेकमहः (उपान्त्यदिने नुष्ठेयम् ) | | 1 |
| अतिरात्रसंस्थाकमेकमहः (अन्त्यदिने नुष्ठेयम् ) | | 1 |

| | | |
|---|---|---|
| एवं सप्तमोमासः | | 30 |
| अष्टमे मासि एकः पृष्ठ्य षडहः । चत्वारो निप्लवाः (मिलित्वा) | | 30 |
| एवमेव नवमो मासः | | 30 |
| एवमेव दशमो मासः | | 30 |
| एवमेव एकादशो मासः | | 30 |
| द्वादशे मासि – त्रयो मिप्लवाः षडहाः | | 18 |
| गोष्टोमः , आयुष्टोमश्च | | 2 |
| द्वादशाहस्य दशाहानि | | 10 |
| | सर्व मिलित्वा | 180 |

एवमेकषष्ट्यधिकशतत्रयदिनसाध्यं गवामयनाख्यं संवत्सरसत्रम् । तदन्तर्गतौ षडहौ द्विप्रकारौ। तथा पि वेदे सोमयागसमूहविशेषा: षडहास्त्रिविधा निरूपिता-

षडहस्वरूपनिरूपणम् ।

1- पृष्ठ्य: षडह:, 2- अभिप्लव: षडह:, 3- अभ्यासङ्ग्य: षडह इति ।

तत्र द्वादशाहान्तर्गतत्वेन पृष्ठ्य: षडहो निरूपित: । तत्र च - रथन्तरादीनां षण्णां साम्नां क्रमेण षट्सु दिनेषु होतृपृष्ठाङ्गतया गानम् । अभिप्लवषडहे तु रथन्तरम्, बृहत्, रथन्तरम्, बृहत्, रथन्तरम्, बृहत्, इत्येवं रूपेण गानम् । पृष्ठ्यषडहे त्रिवृत्, पञ्चदश, सप्तदश:, एकविंश:, त्रिणव:, त्रयस्त्रिंश इति क्रमेण स्तोमा: सर्वेषु स्तोत्रेषु । अभिप्लवषडहे एवं स्तोमप्रक्लृप्ति: --

प्रथमे हनि अग्निष्टोमवत् रथन्तरपृष्ठम् ।

| | | |
|---|---|---|
| द्वितीयदिने गोष्टोमे प्रातस्सवने - | बहिष्पवमाने | पञ्चदशस्तोम: |
| प्रातस्सवने | आज्येषु | त्रिवृत् |
| माध्यन्दिनसवने | माध्यन्दिनपवमाने | सप्तदश: |
| माध्यन्दिनसवने | पृष्ठस्तोत्रेषु | सप्तदश: बृहत् |
| तृतीयसवने | आर्भवपवमाने | एकविंश: |
| तृतीयसवने | अग्निष्टोमस्तोत्रे | एकविंश: |
| तृतीयसवने | उक्थ्यस्तोत्रेषु | एकविंश: |

गोष्टोमस्योक्थ्यसंस्थाकत्वादत्रैव समाप्ति: ।

तृतीयमहरायुष्टोमसंज्ञकम् । तदप्युक्थ्यसंस्थाकम् ।

| | | |
|---|---|---|
| तत्र प्रातस्सवने - बहिष्पवमानस्तोत्रे | त्रिवृत् | स्तोम: |
| प्रातस्सवने आज्यस्तोत्रेषु | पंचदश: | स्तोम: |
| माध्यन्दिनसवने - माध्यन्दिनपवमानस्तोत्रे | सप्तदश: | |

माध्यन्दिनसवने पृष्ठस्तोत्रेषु सप्तदश: बृहद्

तृतीयसवने सर्वेषु एकविंश: स्तोम: ।

चतुर्थमह: पुनर्गोष्टोमात्मकम् उक्थ्यसंस्थाकम् । पञ्चममह: आयुष्टोमाख्यं रथन्तरपृष्ठकम् उक्थ्यसंस्थाकम् । षष्ठमह: पुनर्ज्योतिष्टोमाख्यं बृहत्पृष्ठम् अग्निष्टोमसंस्थम् । अयमभिप्लवषडह: ।

इतोऽन्य: अभ्यासंग्य: षडह: । तत्र स्तोमक्लृप्तिरेवम् --

| | | | |
| --- | --- | --- | --- |
| प्रथमे ह्नि | प्रातस्सवने | त्रिवृत्स्तोम: | अग्निष्टोमसंस्था |
| | माध्यन्दिनसवने | त्रिवृत्स्तोम: | |
| | तृतीयसवने | पञ्चदश: | |
| द्वितीये ह्नि | प्रातस्सवने | पञ्चदश: | उक्थ्यसंस्था |
| | माध्यन्दिनसवने | पञ्चदश: | |
| | तृतीयसवने | सप्तदश: | |
| तृतीये ह्नि | प्रातस्सवने | सप्तदश: | उक्थ्यसंस्था |
| | माध्यन्दिनसवने | सप्तदश: | |
| | तृतीयसवने | एकविंश: | |
| चतुर्थे ह्नि | प्रातस्सवने | एकविंश: | उक्थ्यसंस्था |
| | माध्यन्दिनसवने | एकविंश: | |
| | तृतीयसवने | त्रिणव: | |
| पंचमे ह्नि | प्रातस्सवने | त्रिणव: | अतिरात्रसंस्था |
| | माध्यन्दिनसवने | त्रिणव: | |
| | तृतीयसवने | त्रयस्त्रिंश: | |
| षष्ठे ह्नि | प्रकृत्यतिरात्रापेक्षया | भिन्नातिरात्रसंस्था । | |

अयमभ्यासंग्य: षडह: ।

पूर्वमहर्येन स्तोमेन समापितं तेनैव स्तोमेनाहरन्तरस्योपक्रमोऽभ्यासंग: । तद्युक्तोऽभ्यासंग्य इति । एवं त्रिविधा एवं षडहा: प्रायेण श्रुतावुदीरिता: ।

## महाव्रतनिरूपणम्

इतः परं महाव्रताख्याहर्निरूपणं क्रियते । इदमुपान्त्यदिने नुष्ठेयमित्युक्तम् । अस्यापि संवत्सरसत्रे विषुवदहर्वद् मुख्यत्वमस्ति । अत एव तदह्न्यपि बहवो विशेषा विहिताः । इदं च पञ्चविंशस्तोमकम् । अनेक-विशेषयुक्तत्वादेवास्य महाव्रतत्वम् । स्तोत्रकाले उद्गाता औदुम्बरीमासन्दीमा-रुह्योपविश्य तत्र गायेत् । सा च आसन्दी प्रादेशमात्रोन्नता भवेत् । होता डोलामारुह्य तत्रोपविश्य शस्त्रं शंसेन्निष्केवल्याख्यम् । तदा अध्वर्युः फलक उपविश्यौदुम्बरे प्रतिगरं कुर्यात् । मैत्रावरुणादयो बृषीविशेषानधितिष्ठेयुः । कश्चिद्ब्राह्मणः सत्रिणः अनुवीत । कश्चिच्च शूद्रस्तान् निन्देत् । एवं वेदाः सर्वेष्वपि कोणेषु दुन्दुभीन् वादयेयुः । आग्नीध्रमण्डपस्य पश्चिमभागे गर्तं कृत्वा चर्मणा तमाच्छादयेत् । सो यं भूमिदुन्दुभिरित्युच्यते । तं वादयेयुः । प्रेक्षकाः सर्वेऽपि संस्कृतामसंस्कृतां च वाचं वदेयुः । राजपुरुषा रथारूढा धनुर्धरा देवयजनं परितो गच्छेयुः । मार्जालीयसमीपे अष्टौ दासकुमार्य उदकुम्भान् गृहीत्वा परिनृत्येयुः । एवं यजमानपत्न्यो वीणाविशेषैरुद्गातृसमगानं कुर्युः । ततः तन्त्रीशतयुक्तां महावीणां वादयेयुः शंखांश्च । तत्र मुखवीणाः काण्डवी-णाश्च वादयेरन् एते अन्ये च केचन विशेषा महाव्रते सन्ति । अन्यदितरार्हवत्।

---

## उत्तरार्धः

## पञ्चमाध्यायः

## सम्प्रदायपद्धतिः (सम्प्रदायशर्मप्रणीता)

। श्री गणेशाय नमः । अथ कात्यायन श्रौ सम्प्रदाय पद्धतिलिख्यते।
हेरंबसंहर विभो तरसांतराय वर्गनभर्गतनयात्र तवोपचारः । यद्दप्रमूलखननाय-विषाणहस्तः संतर्विकर्तोसि भगवनस्त्वयमुद्यतस्त्वम् । । । कृताधानस्य प्रथम-पौर्णमास्यां मातृपूर्वकं श्राद्धम् ततोन्वा रंभणीया पुनः खरस्थाने निर्लेपः पंचभू-संस्कारा: । उद्धरणं वैकल्पिक पदार्थविधारणम् । बद्धशिखः कुशोपग्रहः । षट्-समिधो गृहीत्वा अग्न्यन्वाधानमाहवनीय गार्हपत्त्य दक्षिणाग्निषु । व्याहृति पक्षे गार्हपत्य दक्षिणाग्न्याहवनीयेषु । तूष्णींपक्षे गार्हपत्या हवनीय दक्षिणाग्निषु युगपच्च समिदाधानं मंत्राभावात् । यजमानो वैतत्कुर्यात् । यजमानस्य मांस-मैथुन संकल्पः[1]। अशिखवपनं[2] क्षिकं अपराह्ने व्रतोपायनीयाशनम् । व्रतग्रहण मात्रवेत्सत्यनियमः[3]। अस्मिन्नेवोद्धरणे स्वयमेवाग्निहोत्र होमः । आरण्यशनं वा । अन्यतरागारे अधः शयनम्[4] प्रातः स्वयमेवाग्नि होत्र होमंहुत्त्वा तत-उदिते ब्रह्मवरणादि।[5] सद्यश्चेत्प्रतिपद्येवान्वारंभणीया । पुनरुद्धरणं । अग्न्यन्वा-धानम्। मांसमैथुन संकल्पः । वपनं वा पाक्षिकं व्रतग्रहणं । सत्यवदन नियमः । ततो ब्रह्मवरणादि ।[6] व्रतजपः गोपायमग्नीयोयजमानस्यैव।[7] अपरेणाहवनीयमति-क्रमणंवा । आसनेक्षणम् । तृणनिरसनं तत्पश्चाद्वेदि संस्काराः कार्याउत्तरतोत्वतः वाग्यमनप्रैषः । अनुज्ञानसप्रणयनम् ।

---

1- का०श्रौ०सू० 1/1/21, 2/1/8 - अहनिमांसंमैथुनेवर्जयेत् ।

2- का०श्रौ०सू० 2/1/7.

3- का०श्रौ०सू० 2/1/12 - कर्माङ्गमुत्तरेसत्यवदनम् ।

4- आहवनीय गृहशय्यवाधः क का०श्रौ०सू० 2/1/14.

5- का०श्रौ०सू० 2/1/16.

6- तदेव.

7- वाचस्पते यज्ञं गोपायेत्याह ।

- का०श्रौ०सू० 2/1/20.

माध्वबीयमुत्तरेण संप्रतिनिधानम् । आहवनीयगार्हपत्यदक्षिणाग्नीनां परिस्तरणम् । पात्रासादनम् । गार्हपत्यश्रापिणस्तस्यैव पश्चादुत्तरतो वा। आहवनीय श्रापिणस्तस्यैवोत्तरतः । शूर्पादिदशगणः । ततो नः पात्री वा । पवित्र छेदनानि च । अनः पक्षे पवित्रे पात्री च । पात्रीपक्षे पवित्रे उपवेशश्च। आज्यस्थान्युपसर्जनीयात्रं च । कुशमुष्टिरन्वाहार्य पात्रं च । वेदितृणमश्विश्च । योक्त्रस्रुवश्च । जुहूस्भृच्च ध्रुवासन्नहनावखदनानि च । पक्षेपरिधापो विधृत्यौ च । आज्यपुरोडाश पात्रयौ च । होतृषदन श्रृतावदानं च । औषधं पाशित्र हरणे च । अन्वाहार्य तंडुलाश्चन्तर्दानि कटश्च। पूर्णपात्र पक्षे समिच्च। इध्मा बर्हिषो स्पकल्पनम् ।[1] गार्हपत्त्यस्यपश्चादनस्यौषधं कृत्त्वा पूरपाग्नि होत्रहवण्योरादानं । वाग्यमनं[2] प्रतपनम् । उदकोपस्पर्शनम् । अतः प्रतिगमनम् । धूरभिमर्शनं भेदनम् । इषा मालम्पजयः आरोहणं दक्षिणा चक्रेण । हविः प्रेक्षणम्। अपद्रव्यनिरसनम् । उदकोपस्पर्शनम् । अविद्यमानेभिमर्शनम् । आलंभनं प्रतिदैवतग्रहणम् । चतुर्थं तूष्णीम् । शेषाभिमर्शनम् । प्राङ्‌ वेक्षणम् । अवरोहणगमनं श्रपणस्य पश्चात्त्सादनम् । पात्रीपक्षे स्फ्योपहितायामौषधं कृत्त्वा सूर्पादानादि सादनां ते विशेषः ।[3] धूरीषारोहण मंत्राणां पात्री विलेजपः ।[4] अवरोहण मंत्रेणोत्त्थानं पवित्रकरणं त्रिष्वपिद्विवचनांतो मन्त्रः सुच्यपः कृत्त्वोत्पवनम्।[5] सन्यहस्तकरणम् । उदिगनं तासामेवप्रोक्षणं ताभिरेवाद्भिः । मन्त्रमात्रमित्त्यपरे हविप्रोक्षणप्रैषः ।[6] अनुज्ञात्तस्य प्रतिदैवतं प्रोक्षणम् । पात्र प्रोक्षणे वज्रं प्रोक्ष्यतमे वगृहीत्वा कृष्णा जिनोलूखलमुशलशम्याध्व दृषलशूर्पयात्र्युपवेष

---

1- इध्म बर्हिषोश्च । - का०श्रौ०सू० 2/2/11.

2- का०श्रौ०सू० 2/3/2.

3- तदेव 2:3/6.

4- धूरीषारोहणानित्रिपात्रीबिले जपतिश्च - तदेव 2/3/29.

5- त्रीन्वा । - तदेव 2/3/32.

6- हविर्गहव्यामयः कृत्वाताभ्यामुत्पुनाति " सवितुर्व" इति ।

- तदेव 2/3/33; 36.

कपालानि। आज्यस्थाल्यादीनां यथा सादितानां प्रोक्षणम् । असंचरं प्रोक्षणी निधानम् ।[1] कृष्णाजिनादानम् ।[2] अवधूननम् । उदकालंभः । प्रत्यग्ग्रीवमास्तरणम् । सन्धासून्ये उलूखलनिधानं हविरवपनम् । वाग्विसर्गो यजमानस्य च।[3] मुसलादानं । मुसलयोजनम् । हविः कृदाह्वानं कुक्कुटाहननम् ।[4] कंडनंशूर्पादानं हविरुद्वपनं निष्पवनं उदकोपस्पर्शनम् । विवेकीकरणम् । वितुषीकरणमग्नीधः पत्नीवा तुषनिरसनादष्वर्योः । उदकोपस्पर्शनम् । पात्र्यामोव्याभिमन्त्रणम् । त्रिःफलीकरणम् ।[5] कण निधानम् । अग्निष्ठपवेषादानम् । अंगाराणां प्राचः करणं एकस्याहरणम् । मध्यमकपालेनावच्छादानम् । अभिचरतो नामादेशः । उदकालंभनं अभिचरतएव। सव्यांगुल्या सून्येगारकरणम् । एवं पश्चात् पुरस्ता दक्षिणतश्च कपालेष्वधस्तादंगार वर्जम् । दक्षिणमभितो द्वे। उत्तर तश्च । अग्निषोमी- यस्यचतुर्षु उपहितेषु दक्षिणमभितः प्रदक्षिणं द्वे द्वे उत्तरतस्त्रीणि। अंगारैरेभ्य् हनंभेदेन ।[6] दृशच अग्नीध्र एव उपसर्जन्यधि श्रयणं। उपधानेन् सह्युगपत्येषणकृ ष्णाजिनादानादिहषद्दुपलनिधानां तद् ।[7] तत्रैवतंडुलावपनम् । पेषणम् । अर्द्धपिष्टे ब्रह्मण आज्यनिर्वापः ।[8] यजमानस्यवेद बंधः । अपिष्टपेषणं । प्रोहणं ईक्षणम् । सपवित्रपात्रामावापः श्रयणस्य पश्चादंतर्वेदिवाउपवेशनम् । अग्नेध उपसर्जन्यानयनं [9] पवित्राभ्यां प्रतिग्रहणम् । सयंवनम्।[10] पिंडबंधनम् । निर्देशः।

- - - - - - - - - - - - - - - - - - - - - - - -

1- असन्चरे प्रोक्षणी निधाय । -का०श्रौ० 2/3/40.

2- शर्मासीति कृष्णाजिनादानम् । - तदेव 2/4/1.

3- वाचविसृजते । - तदेव, 2/4/6.

4- तदेव, 2/4/16.

5- त्रिफली करोति । - तदेव, 2/4/12.

6- भृगूणामगारैभ्यवृति । - तदेव, 2/4/38.

7- तदेव, 2/5/2; 5.

8- पिष्यमाणेषु निर्वपत्यन्योमहीनामित्याज्यम् । - तदेव 2/5/9

9- उपसर्जनीरा नयन्त्र्न्यः । - तदेव, 2/5/12.

10- संयौति जनयत्रैतेति । - तदेव 2/5/15.

आज्यपुरोडाशानां युगपदधि श्रयणं । ब्रह्माज्यं वेदोपग्रहेण। अध्वर्यु:प्रथमं पुरोडाशं स्फ्योपग्रहेण।[1] अग्नीतद्वितीयं पुरोडाशं कृशो पग्रहेण। तयोरेव प्रथनं अद्भिरभिमर्शनं च[2] सकृत्रिवा । पिष्टलेपायनयनम् । पात्र्यंगुलिप्रक्षालनम् । पर्यग्निकरणम् । उदकोपस्पर्शनम्। श्रयणम् । आलंभनम्[3]। न चेदृतंपुनर्मंत्रेणालंभ:। श्रृतानिवास:।[4] अप्त्योदकदानं अन्वाहार्याधिश्रयणम्।[5] अत्र वा व्रतोपायनम् । वेदिमानं[6]। परिसमूहनमग्नीध उक्तर करणं च 2 सतृण वृज्रादानम्। सन्यहस्तकरणं दक्षिणेनालभ्य जप: ।[7]प्राकरस्तंवयजुर्हरणाद्युत वज्रेणाय द्विव्यात्मनो नाविममर्शनम्।[8] वेदातृणानिधानम् । तत्र प्रहणम् । पुरीषादानम् । वेदिप्रेक्षणम् । उत्करेपुरीष-करणम् ।[9] पुनरेवभेवप्रहरणादुदकोपर्शनान्तम्। अग्निधोभिन्यास:। तत्र उदको पस्पर्शनम् । तृतीयं प्रहरणाद्युत्करकरणातम् । तत: तूष्णीं चतुर्थपुरीषं सतृणा मुत्करेकरोति । पूर्वपरिग्रह प्रैष:।[10] अनुज्ञातस्यपूर्वपरिग्रह: लेखाकरणम् । हरण-प्रैष: । हृत्वाग्नीधोलेखासंमर्शनम् । खननं त्र्यंगुलंखामूलाछेदन पक्षे आग्नी ध्र: प्रैष-पूर्वतरं खननात्करोति । उत्तरपरिग्रहप्रैष: । अनुज्ञातस्य उत्तरपरिग्रह: । आहार्यपुरीष पक्षे वेदिपुरीषमपनीया न्यात्स्याहरणम् । अनुमार्जनम् । प्रोक्षणी-धारणम् । प्रैषोग्नीध्रो वज्रमुद्यम्य। पक्षेप्रैष: । प्रोक्षणी रासदनम्। स्फ्यो दं च

---

1- धर्मोसीति पुरोडाशं युगपत् । - का०श्रौ० सू० 2/5/19.

2- तदेव 2/5/21.

3- मात्रैरित्या लभते । - तदेव 2/5/24.

4- तदेव 2/5/25.

5- अन्वाहार्य दक्षिणाग्नावधिश्रयति । - तदेव 2/5/27.

6- अपरेणाहवनीयं वेदिं खनति । - तदेव 2/6/1.

7- तदेव, 2/6/13.

8- तदेव, 2/6/14.

9- व्रजंगच्छेतिपुरीषमादत्ते। - तदेव, 2/6/16.

10- तदेव , 2/6/25.

प्रहरणं। धाराधो खनेजनम् । अपरेण प्रणीतानां स्फ्यमवर्हिषां सादनम्।[1] वेदाग्निनिष्पत्तिः । तैरैवस्त्रुक् संमार्गः । स्त्रुकं प्रतप्य उदकोपस्पर्शनं । संमार्गः । पुनः प्रतपनं उदकोपस्पर्शनम् । जुहूपभृतध्रुवाणां च संमार्जन वाद्येवमेव प्रतपनोदक स्पर्शनं तं तूष्णीं प्राशित्र हरणं श्रृतवदानम्। पुरोडाशपात्री भिडपात्रीं च । संमार्जन प्रासनं । पत्नीसन्नहनं।[2] आज्योद्वासनम् । पत्न्याज्यमेवक्षस्वेति प्रैषः ।[3] पत्न्याज्या वेक्षणम् । आध्वनीयश्रपि चेत्तत्रैवकृत्वा अपरेण प्रोक्षणीर्विधायोत्पवनम्। प्रोक्षण्युत्पवनं । आज्यावेक्षणं यजमानस्य वा।[4] आज्यग्रहणं। इध्म विस्रंसनं। इध्म प्रोक्षणप्रैषः । अनुज्ञातस्य इध्मप्रोक्षणं । वेदिप्रोक्षणम् । वर्हिपत्ति गृह्यपुरस्ताद्वेधि वेद्यां सादनं । प्रोक्षणप्रैषः । अनुज्ञातस्य बर्हि प्रोक्षणम् । मूलावसके: । प्रणीता सुपवित्रकरणम् ।[5] बर्हिः विस्रंसवनम् । पुरस्तात्प्रस्तरग्रहणं। पूर्वेण ब्रह्मणेप्रदानम् । सन्नहनविस्रंसनं । दक्षिणस्या वेदिश्रोणें T निधानम् । अन्ये वछादनम् । अपन्नतृणनिरसनम् । वेदस्तिरणम्।[6] विरोधाहवनीय श्रापिण इहे वोछासनम् । दक्षिणस्यावेदि श्रोणीनिधानम् । अन्यैरवच्छादनम् । आपन्न तृणनिरसने हवि षाकपालानां च सनित्तप्रस्तरादानम्। आहवनीयकल्पनम् । उल्मुकोद्वहनम्।[7] परिधिपरिधानम् । स्पृष्ट्य परिधिं समिदाधानम्।[8] अनुपस्पृश्यद्वितीयाधानं सूर्यस्त्वेतिजपः । आवृत्य विधृत्योस्तरणम् । तत्र प्रस्तरस्तरणम्।[9] अग्निन्यसनम् । सव्यासन्येजुहूं प्रतिगृह्य तत्रा सादनम्। बर्हिष्युप भत्तंध्रुवांच ।

---

1- का०श्रौ०सू० 2/6/44.

2- तदेव, 2/7/1.

3- तदेव, 2/7/4.

4- यजमानो वा । - तदेव, 2/7/10.

5- तदेव, 2/7/21.

6- तदेव, 2/6/22.

7- उल्मुकेऽउद्वहत्यनुयाजश्चेत् । - तदेव, 2/7/30.

8- अनुपस्पृश्य द्वितीयां समिदसीति । - तदेव, 2/8/3; 4.

9- तदेव, 2/8/5-7.

पुरोडाश विभस्मीकरणम्।[1] पुरोडाशपात्र्योस्थापनं। तयोरुपस्तरणम् । तत्र स्थाभिघारणम् । उदास्यप्राण दानम्।[2] कापालांजनम् । लंखययोदासनम् । आज्यस्थालीपूर्वकं हविरास्पदनम् । स्थाली जुहूपभृच्चवापुरोडाशानां यथा क्रममलालंभः।[3] स्पन्द्योपग्रहः पुरोडाशयोः । वेदोपग्रह आज्यस्थाल्यादीनाम् । आत्मालंभः । उदकोपपूर्वस्पर्शनम् । व्रतग्रहणमत्रवा[4]। प्रथमोऽध्यायः ।

---

1- पुरोडाशस्याधानासुदवेदनम् । - का०श्रौ०सू० 2/8/9.

2- तदेव, 2/8/14.

3- तदेव, 2/8/19.

4- अत्र वा व्रतोपायनम् । - तदेव 2/8/21.

होतृवदनकरणम् । समिधमादाय सामिधेन प्रैषः ।[1] सामिधेनीनामादौ यजमानस्य संतत्वन्प्रैषोव वा धनं च प्रतिप्रणवमाधानम् ।[2] समिद उत्पतः प्राक् सवेध्माधानमेकवर्धं आहवनीयोय वाजनंत्पूर्वा।घारहोमः।[3] अग्नि सम्मार्गप्रैषः । अग्निसम्मार्गोग्विधिः दक्षिणपरिधिपूर्वकं प्रदक्षिणयोगेन।[4] तूष्णीमुपरि। अंजलि करणम्। अपामुपस्पर्शनम्।[5] पाणिभ्यांजुहू परिगृह्योपभृत्याधानम्। आदानम्।[6] अतिक्रमणम् । परिधीनपरेणलपेनेतोगच्छति। दक्षिणेनामुतः।[7] अवस्थानजपः।[8] उत्तराधारहोमः।[9] असंस्पर्शगमनम्। ध्रुवासमं जनंनिधानम्। इध्मासन्नहनादीना-मन्यतमादानम्। आश्रायवणम्। प्रत्याश्रवणं होतृवरणम्।[10] आर्षेयनाम ग्रहणम्।[11] संगृपयोरूपवेशनम् । घृतवतीमित्युक्तेस्तु चोरादानम् । अतिक्रमणम् । आश्रा-वणप्रत्याश्रावण्यं पंचप्रयाजाः।[12] प्रथमसमिधो यजेति । यजेपजेत्युत्तरेषु । चतुर्थे-प्रयाज समानपनम् । प्रति प्रयाजमनुमंत्रणम् ।[13] यजमानस्याध्रुवापुरोडाशावुपभृता-नामभिधारणजुह्वा। आज्य भागयोरग्नयोनुवाचनम् । स्रुवेण ध्रुवाया माघायहनम्। चतुर्गृहीतग्रहणम्। प्रैषो होमः । उत्तरपूर्वार्द्ध आग्नयदक्षिण पूर्वार्द्धसौम्यम्। समिद्धघं तमेवोभौ देशमात्रविशेषः । हविः प्रचरणनुवाचनीस्यां ल्पाउपस्तरणम् । यथोक्त-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ०सू० 2/1/1.

2- प्रतिप्रणवमाधानम् । - तदेव० 3/1/10.

3- का०श्रौ० 2/1/11-12.

4- तदेव, 3/1/13-14.

5- तदेव, 3/1/15.

6- तदेव 3/1/16.

7- सव्येनेतो दक्षिणेनामुतः । - तदेव, 3/1/18.

8- अवस्थान जपः । - तदेव, 3/1/19.

9- इत इन्द्र इति जुहोत्युत्तराघारम् । - का०श्रौ० 3/2x1

10- तदेव, 3/2/2-7.

112 तदेव, 3/2/12-13

12-तदेव , 3/2//15-26.

13- तदेव, 3/3/30.

मवदान ग्रहणं प्रत्युपस्तरः । क्षताभ्यंगः । एवं सर्वह विषां उपांशु याग-
आज्यभागवत् । द्वितीय पुरोडाशयागः।[1] स्विष्टकृतिएकैकमवदानं प्रतिहविः।[2]
द्विरभिघारणे क्षताभ्यंगाभावः। उत्तरार्द्धहोमः। अग्निनिधानम् । संचराभ्युक्षणी।
प्राशित्रवदानम् । ब्रह्मणेपदानम्। पूर्वेणवा। ब्रह्मणः प्रति ग्रहणीसपात्रसंसदेशे अपो-
ह्यवर्हिषि पार्श्विकं सादनम्। नवेतदव्यमात्रादानम् । भक्षणीयात्रप्रक्षालनम् ।
नाभ्यालंभनम् । अध्वर्योरूदकोपस्पर्शनम्। इडावदानं अग्नीध्रोभागः । ब्रह्मभागः।
पूर्वार्द्धधिनमानभागं गृहीत्वा ध्रुवायाः पुरस्तद्वैधीकरोति। होतुरिडासमर्पणम्।
अविसृजतोदक्षिणाति क्रमणम् । इडाग्रहणी। होतु रंगुलीयं वार्जनमिडाशकाशाक्रियते।
इडायाभिवपंचशकलान्यादाया वीतरेडावदानम्। इडासमर्पणम् । अन्वारंभः । इडो-
पहूतेत्युच्यमानेआग्नय चतुर्द्धाकरणं यजमानस्य मंत्रान्ते वर्हिषिपक्षे पक्षस्यपुरोडाश-
स्यः । ऋत्विगादेशः । आलभ्यजनपः । विसृन्यामीमंदतेति जपः । उदकोपस्प-
र्शनम्। यथ्येदिदष्टं भागसमर्पणं भक्षायः उपहू तेद्यावापृथिवीत्युच्यमानेअग्नीध्रेष्ठउक्त
समपणम् । तत्प्राशनं भेदेन । उत्तरस्यांदेवयाज्यायामित्युच्यमानेयजमानस्यमयीद-
मितिजपः।[3] चतुर्द्धाकिरणादिसमर्पणे तं यजमानस्य इडाप्राशनम् । पवित्राभ्यां
मार्जनम्। पवित्रप्रतिपत्तिः। स्थापितं चेत्प्राशित्र मिहभक्षणम् । नाभ्या लंभनं
तम् । ब्रह्मभागपरिहरणम्। अप्रोक्षितश्चेद्यजमान स्य च । अन्वाहार्याभिधारणम्।
उदगुद्वासनम्। अन्तराब्रह्मयजमानयोराहणम् । वेद्यांनिधाय तीर्थेनप्रवेश्या लभ्यजपः।
दक्षिणादानं यजमानस्य।[4]

उल्मुक समासः । समिदादानं अनुयाजप्रैषो ब्रह्मानुमंत्रणी समित्प्रैषः ।
अग्नीध्रः समिदा इध्नम्।[5] होतुरनु मंत्रणम् । अजानत्तियजमानस्य अग्नि सम्मार्ग
प्रैषः । अग्नीध्र एवाग्निसम्मार्गः । ब्रह्मानुज्ञातस्यहविसमानीयानुयाजचरणम्।[6]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- पुरोडाशावन्तरेणाग्नीषोमांभुपांशवाज्यस्य । - का०श्रौ०सू० 3/3/24.

2- यावद्धविरूत्तरार्धास्विष्ट कृतः । - तदेव, 3/3/26.

3- तदेव, 3/4/1-33.

4- तदेव, 3/4/1-33.

5- तदेव, 3/5/1

6- तदेव, 3/5/2-5.

पुनः समानीय धारानुयाजः। अभिचरतोध्वर्योरनुमन्त्रणानि। प्रत्यनुमंत्रणामुदका-लंभश्च । सुग्मु हनंम् । अभ्युक्ष जुह्वाजुह्वापरिध्यंजनम्।[1] परिधिमालभ्य आग्ना-व्यसूक्त कप्रैषः।[2] तृणप्रेक्षेपः। आत्मालंभः । उदकोपस्पर्शनम्। परस्परसंवादः।[3] शयोर्वाक प्रैषः । परिधिप्रक्षेपः। संस्रुवाहुतिः। धुरिनिधानम्। पात्रीचेदकते-वेद्यालंभनपत्नीसं[4] याजेभ्यः।[5] संचरतुष्टयस्यान्यतमेनप्रगमनम्। उपविश्यपत्नीसंयाजा उपांशु तृतीयेपुरस्तादंतर्द्धानं पत्यस्त्वा रंभश्च।[6] त्वाज्येनेडाकरणं पूर्ववत्।[7] उपहूयप्राशनम्। इडीतं चेददध्वाहुतिः सांयंतं चेद्देद तृणां जन यथोक्तं प्रैषादि शंयंत। अस्मिन्पक्षे इडादध्वाहुतिः । गार्हपत्यंपूर्वदक्षिणे नायात क्षेतेनैर्वानः कृम्यदक्षिणाग्ना वकगृहीतेनाहुतिद्वयम्। पिष्टलेपाहुतिः।[8] पत्न्यावेदविमोकोपो-क्त्रस्य च ।[9] आवेदेस्तरणंवेदियावत्।[10] होतुः स्पष्टवचनेनाहवनीयं यावत्। समिष्टयजुर्होमः।[11] वर्हिहोमः।[12] आहवनीयं परीत्यवधी प्रणीतानि नयनम्।[13]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ०सू० 3/5/6-24.

2- तदेव, 3/6/1.

3- तदेव, 3/6/16.

4- तदेव, 3/6/17-21.

5- पत्नी संयाजेभ्यो गार्हपत्यगच्छन्ति । - तदेव, 2/7/1.

6- तदेव, 3/7/2-12.

7-शम्यन्तं भवतीडान्तं वा । - तदेव, 3/7/13.

8- तदेव, 3/7/13-19.

9- तदेव, 3/8/1.

10- स्तृणात्यावदेः । - तदेव, 3/8/3.

11- तदेव, 3/8/4-5.

12- तदेव.

13- तदेव, 3/8/6.

कणायावसनम्।[1] नात्रोदकस्पर्शनम्। परीत्यपूर्णपात्रनिनयनम्।[2] यजमानस्यग्रहणम्। विक्रमणम्।[3] भागभूमिदिगाहवनीयरूपविक्षणम्।[4] प्रदक्षिणावर्तनम्। गार्हपत्यो-पस्थानं यथागृहीतव्रतविसर्गः। भागप्राशनम् । प्रोषितश्चेद्धस्तेनहोमः । पूर्ण पात्रग्रहणादि भागप्राशनान्तं यजमानस्य। ब्राह्मणतर्पणप्रैषः ।[5] यजमानस्य ब्राह्मण तर्पणं।[6] कर्मापवर्ग समित् । आहुतिपक्षेस्थाल्या एकगृहीतेव जुह्वा होमः। उपस्थानं वा । स्वाहाकारः सर्वपक्षेषु । द्वितीयोऽध्यायाः। इष्टिः समाप्ता।।

- - ------ --------- - - - - - - - - - - - - - - - - -

1- का०श्रौ०सू० 3/8/7.

2- पूर्णपात्र निनयति परीत्य संततम् । - तदेव 3/8/8.

3- तदेव, 3/8/9-12.

4- अस्मादन्तादिति भागमवक्षेत । - तदेव 3/8/13.

5- तदेव, 3/8/3063।.

6- तदेव.

सान्नाय्य वतिदर्श चतुर्दश्यां दध्नाग्नि होत्रं हुत्वा प्राक्हुतशेष-स्थापनम् । पूर्वान्हे अग्नीविहृत्य पौर्णमासवदग्न्यत्वाधानम् । मांसमैथुन संकल्पः । वनपं वा। अपराह्णे पिंडपितृ यज्ञः।[1] तत्र प्राचीन वीतिकरणम् । नीविबंधनम्। दक्षिणाग्रे दक्षिणाग्रैर्दर्दक्षिसंस्थामयसव्यंपरिस्तरणं पात्रासादनम्।[2] सुकउलूखलं मुसलं । शूर्पचरुः । उदकम् । आज्यम् । मेक्षणम। स्फ्य। उदपात्रं सत्त-दाधिन्ना निर्व्रीह्यः। सूत्रादीनामन्यतमं। गार्हपत्यमपरेण। चरूसपूर्ण सृचं वा गृह्णाति। दक्षिणाग्नखुत्तरस्तिष्ठन अवहननम्। सकृत्फलीकरणम्। दक्षिणाग्नावेवा पूर्णस्यचरोः सारतं दुलस्यश्रपणम्। अभिधारणम्। दक्षिणेनोद्वासनम्। अपसव्येनाहरणम्। दक्षिणामुखस्यैवहोमेमेक्षणेनाहुतिद्वयम्। अपसव्येनैवामेक्षण प्रासनम्। दक्षिणेन दक्षिणा-ग्निमपरेण वा लेखककरणम्। परस्तादुल्मुककरणं।[3] लेखाधि पितृप्रभृतित्रिभ्योवनेजनम्। सकृदा न्निानि लेखायां कृत्वा यथाशक्तिंपिंडदानम्।[4] अत्रपितर इति जपः।[5] अपसव्ये नोर्दक्ष्वर्तनम्। आत्तमनातिष्ठेत् । पुनस्तेनैवा वृत्यामीमदन् ते तिजपः। सूत्रादीनामन्यतमस्यप्रदानम्।[6]उदकनिषेकः । उबायीपिंडा बधानम्। यजमानस्या वघ्राणं सकृदाछिन्नावधानम् । उल्मुकस्य च । पुत्रकामाया ऋतुमत्याः पत्न्या-मध्यपिंडस्य प्राशनम्।[7]तस्मिन्पक्षे अनवघ्राणम्। उदकोपस्पर्शनम् । ततः पार्वण-श्राद्धमिति ।

जीवत्पितृकस्यपिंडपितृ यज्ञाभावः।[8] चतुर्दश्यां वोपक्रमः ।

---

1- का०श्रौ०सू० 4/1/1.

2- परिस्तीर्य तं पूर्ववत्पात्रासादनर्मकशः । 5 तदेव, 4/1/4.

3- उल्मुकं परस्तात्करोति मेक्षणानीति । - तदेव 4/1/10.

4- तदेव, 4/1/11.

5- तदेव, 4/1/13.

6- सूत्राविप्रतिपिण्डम् । - तदेव, 4/1/16.

7- आधत्तेतिमध्यमपिण्डं पत्नी प्राश्नातिपुत्रकामा। - तदेव, 4/1/22.

8- जीवत्पितृकस्यहोमान्तर मनारंभोवा । - तदेव, 4/1/24-30.

व्रतोपायनीयाशनमतृशामखा छेदनं यथोक्तम्।[1] सन्नमनम्। अत्रवाव्रतग्रहणम्।[2] वत्ससंसर्गः प्रतिवत्सं शाखयो पस्पर्शनम् । व्याक्षत्यवत्सेन मातृण्येमेकस्या उपस्पर्शनम्। इन्द्रायभागमिति महेन्द्राय भागमितिवर्मन्त्रविशेषः उपवेषकरणं शाखायां कुशयोसूवृतो वापवित्रस्यबंधनम्। अन्यतरागोपगूहनम् । केचिद्रूप गुहनोत्तरकालमुपवेषनिष्पत्ति पवित्र बंधनेकुर्वन्ति । सूत्रसन्निवेशात् । तदयुक्तंदिदष्टार्थत्वादुपग्रहनस्यकथमिति चेत् । प्रयोजनविद्यमानत्वात् । नचदृष्टेसत्यदृष्टकल्पना साध्वी।अतः सामर्थ्यात्पूर्व मुपवेशनिष्पत्तिः । पवित्र बंधनं चा उक्तं चविरोधेर्थस्तत्परत्वादिति। यवाग्नाग्निहोत्रहोमः । हुत्उपसृष्टाप्रैषः । दोग्धृप्रतिप्रैषः । स्थाल्यादानम् । अधिश्रयणम्। उपरिशाखा पवित्रकरणम् । वाग्यमनम्। गांधुक्षेतिप्रैषः । अशूद्रेणदोहनं यजमानस्य स्थाल्या मन्वारंभः । दोग्धुरासेचनं कुर्वतः अध्वर्योजपः । कामधुक्षइत्यध्वर्योः प्रश्नः । अमुकमितिदोग्धुः सविश्वायुरित्यध्वर्योः । एवमितरेउत्तराभ्यांप्रतिमंत्रंविसृष्ट वागुत्तर अनन्वारंभश्च। आसेकजपोकर्तव्यो। परिक्षालनासेवोध्वर्योः एव मितरेउत्तराभ्यां प्रतिमंत्र विसृष्ट वागुश्रपयि त्वोद्वासनम्। प्राग्युत शोषेण यथा देवतमानं चनम्। प्रातराग्नेय। एव प्रातर्यवाग्निहोत्रं हुत्वा ब्रह्मवरणादि।[3]ब्राह्मणतर्पणीतिविशेषः । अनुदिते तत्रप्रकृमः । कपालान्यष्टाशाखोपवेषः । कुश मुष्ट्यनंतरं दोहन चतष्टयं। नियोज्यं दोहनं शाखा पवित्रम्। उपावेत्ति दोहनं चतुष्टयम् । उद्धरणपात्र्येक। आग्नेयस्यैवग्रहणम्। आज्यनिवपिपरिक्षा जनातादोहः । एकत्वाद्निर्देशः । पयोवर्ज पर्यग्निकरणम् । पुरोडाशपयसी अनिवार्याद्वास्य आग्नेय दधिपयसां प्राणदानम्। आसादनालंभो च आग्ने याद्नंतरमुपांशु यागः । ततो दधिपयोभ्यांशृतस्याग्रेप्रथममनवदानम्। प्राशित्र भागचतुर्द्धाकिरणानां दधिपयसोरभावः । शाखापवित्रेणासह पवित्राभ्यांमार्जनम् । तत्स्थापनं शाखानमत्त्चपक्षे प्रेत पितृकस्यापि विकल्पः

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 4/2/1-2.

2- व्रतमुपैति । - तदेव, 4/2/5.

3- तदेव, 4/2/6-49.

याभेव। सहशाख्याप्रस्तरानुप्रहरणम् । परिधिष्वृयमा नेषु अग्नीधाखीय वद्यं जुहोति । प्रसन्नाप्यापक्षे आग्नेय ऐन्द्राग्नोद्वादशकपालोद्वितीयः।[1] तयोरंतरेणा निवोमीय उपांशुयागः । वैष्णवोवेतिविकल्पः पक्षे आदित्येष्टिः । जीवत्पितृकस्य चतुर्दश्यामुपवासः। ततो अमा वास्यायांयागः । पिंडपितृ यज्ञस्यापिविकल्पः । पिंडपितृयज्ञस्यानंगत्व पक्षेपेत पितृकस्या पिविकल्पः:[2]। अंगत्वपक्षेतु प्रेतपितृकस्य अमावास्यायामेवोपवासनियमः । दाक्षायणा पक्षे प्रथमपौर्णमास्यां मातृश्राद्धं अन्वारंभणीया । पुनस्धृत्याग्नीषोमीयोब्राह्मणम तर्पणं तः । हिरण्य दक्षिणापक्षे हिरण्यमस्फूर्ज मयिधेहीतिविशेषः । पुनस्धृत्यान्यन्वा धानं । मांसमैथुनसंकल्पः।[3] वपनं वा।[4] अपराह्वे व्रतोपायनीयाशनम्। शाखाछिदनम्।[5] सन्न मनम्। अपाकरणम्। इन्द्रायभागमिति देवतानियमः । उपवेषनिष्पत्तिः । पवित्र वंधनं[6] शाखो पगूहनम्। रात्रावनियत द्रव्यस्य समेवाग्नि होत्रहोमः । उपसृष्टिष्टौ। आतं चनातो दोहः । प्राप्तवृंह्मवरणादिब्राह्मणतर्पणाति विशेषः । आग्नेय एव पुरोडाशः । शाखोपवेशः पक्षेन्वाहार्यस्थाने हिरण्यम् । दध्नश्च प्राणदानम्। आग्नेयेनयागंत त्वाऐन्द्रेण दध्नायागः। प्राशित्रभाग चतुद्धर्धाकरणधानिचनदध्नः । समस्य मार्जनम् । पक्षेहिरण्यमसीति। सहशाख्याप्रस्तरानुप्रहरणम् । परिधिभिः । सहोप वेषहोमः पक्षेवैमृधान्वार्यदक्षिणः । मांसस्त्र्यनृत्तमौत्रकृत वाससी वर्जनमाप्रयोग परिसमाप्तेः ।

---

1- प्रातराग्नेय ऐन्द्राग्नश्च द्वादश कपालोऽसन्यतः । - का०श्रौ०सू० 4/2/36.

2- जीवत्पितृकोऽपि । - तदेव, 4/1/24.

3- का०श्रौ०सू० 2/1/8.

4- तदेव, 2/1/7.

5- तदेव, 4/2/1.

6- तदेव, 4/2/15.

अमावास्याय मै द्राग्नो द्वादश कपाल:[1] हिरण्य दक्षिण वा। पुनरूद्धरणम्। अग्न्यान्वाधानम्। मांसमैथुनं संकल्प: । वपनं वा । अपराह्ने पिंडपितृ यज्ञ: । श्राद्धं । व्रतोपायनीयाशनं अतृह्या शाखाछेदनम्। सन्नमनम्। उपवेष निष्पत्ति: । पवित्र वंधनं। रात्रौ स्वयमेवाग्निहोत्र होम: । अपाकरणं मित्रावरूणा भ्यामितिविशेष: । शाखोपगूहनम्। प्रातर्ब्रह्मवरणादौविशेष: । कपालान्यष्टौ । शाखोपवेष: । कुशमुष्टयं नंतरंहोहन चतुष्टयम्। उद्धरणाया अनंतरं वाजिन भींडं । दक्षिणाहिरण्यं वा। दक्षचोपकल्पनाम्। निरूप्याज्यमुपसृष्ट-पादिवरिश्रा लनीतोदाहे: । शृतेवादध्यानयनम्। दधनिवादोहनम् । तदर्ययर्य-ग्निकरणम् । पात्रयनं तरं वाजिन भां उ संमार्ग:।[2] तत्रस्थामिध्यारणम दत्वा वावाजिननिषेक: पयस्यानं तरंप्राणदानं वाजिनस्या हवीष्यशाधवाजिनमुत्करे आसादयति।[3] तदनन्तरं मालंभ: । आग्नयेन प्रचर्य पयस्या याग: । पयस्यात: प्राशित्रं न गृह्यते । भाग चतुर्द्धाकरणेनस्त: । समस्यमार्जनं । पूर्ववत्पवित्रे । दक्षिणायां हिरण्य मसीतित्त वा।[4] सहशाखयाप्रस्तरानुप्रहरणं। प्रहृत्यतृणम्। आत्मालंभ: उदकोपस्पर्शनम् । वाजिनयाग:। तत्र जुह्वामुपस्तार: यािकथचिद्वा-जिनग्रहणमवसिं चतोवर्हि: प्रत्युपस्तरणम्। अनुवाचनम्। अतिक्रम्या श्राव्यप्रैष: । प्रतिवषद्वारंहुत्वादिग्व्याधारणम्। शेषस्योपहूय भक्षणं। यथोक्तम् । परिधिभि सहोपवेष: । विमुच्यवास्तृर्वोवाजिनयाग:।[5] पुनरूद्धत्यपक्षे आदित्येष्टि: । पुनरूद्धत्यपक्षे आदित्येष्टि: । संवत्सर पक्षेपौर्णमास्यामन्वारंभणीयापूर्वकोग्वीषोमी यथोक्त: । पुनरूद्धृत्य दध्नापक्रम: । प्रतिपपथाग्ने येन ऐद्रेणच दध्नायाग: ।

---

1- ऐन्द्राग्न्यौमावस्यायाम्। - का०श्रौ०सू० 4/3/1.

2- वाजिनं निषिच्योत्करे करोति । - तदेव, 4/4/9, 4/4/7

3- तदेव.

4- द्वाक्षायणे वा दक्षिणा। - तदेव, 4/4/28.

5- का०श्रौ० 4/4/9-25.

पयेविमृध: । मांसमैथुन संकल्प: ।[1] पुनरूद्धूतर्य द्राग्नोयथोक्त: । तत आग्नेय-स्य मैत्रावरूणया: । पयस्यायाश्चप्रकृम: । तत्र अग्न्यन्वाधानं शाखाछेदनं सन्न मनं उपवेषनिष्पत्ति: । पवित्रबंधनम्। दध्नाग्निहोत्रहोम:। अपाकरणम्। शाखो पगूहनं प्रातर्यागो यथोक्त: । तदनं तस्मादित्यो वा । एवमन्वहम् । प्रति-कामममाग्नेयो:ऽन्वारंभणीयापूर्वक: । उपां शुमष्टाकपाल: । वृष्ट्यर्थ चत्र कृता वेदोद्धरणकाले ब्रूयात् । वृष्टिकामोस्मीति । प्राङ् प्रयाजेभ्योयजमानोध्वर्यु-ब्रूयात् पुरोवात्तं च विद्युतं च मन साध्यायेति । अग्नीधमश्राणि मनसाध्यायेति। होतारं स्तनयितुं च वर्षं चमसाध्यायेति। ब्रह्माणं पुरोवातं विद्युतं चा भ्राणि चस्तन यितु च वर्ष चमनसाध्यायेति। अन्वारंभणीयायामग्न्यन्वाधानादि ब्रह्मणतर्पणान्तेतिविशेष: । कपालानित्रयोविंशति: चरोस्मकल्पनम्। कणां ते चर्चक: । उप धाने अग्नाविध्मो: कपालान्येकादशचरो: स्थानकरणम्। सारस्वत-स्यन्दादशकपालानि पिष्टेक्षणं। तंडुलेक्षणम। पाआसंपवित्रायापिष्टमाप:। सारस्वते चेरौ सपवित्रेतंडुलावाप: । चरो: संयवनप्रथनाद्रिम मर्शनाभिवासाना नामभाव: । पुरोडाशयो: संवपनं । निर्देश: । इदमग्वाविध्मो: । इदं सरस्वत: । दक्षिणापृष्ठोही तमद्युनोवादद्यात् । तत्र गौर सीतिविशेष: । मिथुनपक्षेइमौवोगावौप्रतिगृह्येतम्। पृष्ठोही पक्षेइयं वोगौरिति प्रयोग:।[2] इन्द्रायविमृध एकादशकपालोप्राह्मणतर्पणान्त: । इन्द्रायविमृधेजुष्टंगृह्वामिति गृहणे विशेष: । यागेइन्द्रायविमृधेनुब्रूहीति। इदं विमृधे यज । व्यूहने इन्द्रस्य-विमृध उजितिं । इन्द्रोविमृत्तमपनु दत्वित्युपभृति । दाक्षायण पक्षेपि । अन्वाहार्यदक्षिण: । आदित्यश्चरू रमावास्यायांतत्रा[3]वन्यन्वाधानादौब्राह्मण तर्पणातेतविशेष: । दशगण: कपालवर्जम्। उपवेषोद्धरणपात्र्योरभाव: । चरोरूपकल्पनम्[4] अदितिर्देवता । चरूधर्माक्षोक्ता: । अन्वाहार्यएव दक्षिणा।

---

1- का०श्रौ०सू० 4/4/30

2- पृष्ठोही दक्षिणा मिथुनौ वा । - तदेव, 4/5/23.

3- इन्द्राय विमृधएकादशकपाल पौर्णमास मन्द । - तदेव, 4/5/24.

4- आदित्यश्चरूरमावस्यायाम् । - तदेव, 4/5/26.

5- आग्रायणमिन्द्राग्नमग्र पाकस्य व्रीहीणां यवानां च । - तदेव, 4/6/1.

शरद्वसंतयोराग्रयणम् । तत्र प्रथमप्रयोगेमातरः श्राद्धं अन्वारंभणीया। द्यावापृथिवीपुरोडाशपक्षे[1] अहतवासःपरिधानम्। त्रेधाबर्हिश्च। कुशप्रस्वः प्रस्तर-विशेषः । द्यावापृथिवीय आज्यन्यागपक्षे[2]अहतवासः परिधानं त्रेधाबर्हिः कुश-प्रस्तराणामभावः । पक्षेपयसः[3] प्रणयनम्। ब्रह्मन्नप्यणसिप्रणेष्यामीति विशेषः पात्रासादनेकपालान्यैंद्राग्न्यस्य द्वादश। पक्षेद्यावापृथिवीय स्यैकमुपसर्जनीपात्र-द्वयम्। पक्षे उद्धरणपात्रीद्वयं एका वा दक्षिणा प्रथमजः द्यावापृथिवीयपुरोडाशपक्षे बर्हिश्चतुष्टयम् । अंतार्वौदनमाज्यं च । चरोश्चोपकल्पनम् । पुराणपक्षेद्वितीय-स्यहविरावपनादि मुसल मात्रमेव। यौजनं कु क्रियते। नशूर्पादानमंत्रः । पाक्षिक-पर्चकः। एककपालैतस्यस्वेति विशेषः । उपसर्जनीद्वयाधिश्रयणपक्षे संवयः उद्धीभिः समोष्ट्यौरसेनसं रे वन्तुबजतीभिः पृच्यतां संमधुमन्नमधुमतीभिः पृच्यमामिति-विशेषः क्षीरोपसर्जनी ग्रहणे। प्राणादानस्यांतेद्यावापृथिवीयस्यातादयदनम्। आज्येन वेत द्यावापृथिवी यस्य उपांशु यागवद्। दक्षिणामंत्रेगौरस्यूर्जमराथेहीतिविशेषः। दर्शपूर्णमा सानी जानस्यववसंतात्तिकमेवसंतेस्वयजनीहिसातरः श्राद्धम्। दक्षिणाग्नौ चातुष्प्राशपचनम्।[4] ब्राह्मणभोजनम्।[5] चतुर्णां यथाशक्तितो दक्षिणा। अग्निहोत्रे नैवाग्रयणसंपत्ति मिश्रतोबवैरग्निहोत्र होमः सायंप्रातः । दत्ताशितायां वागोः पयसा[6] तद्वायवेषु नियमेनव्रीहीणाम भक्ष्यत्वात् एवेष्वेति नियमः शितायाः। पयसादीक्षि तस्याग्रयणकाले आपाते तदा शितायां वागोः पयसा व्रतम्।[7]

---

1- द्यावा पृथिवीय एक कपालः । - का०श्रौ० सू० 4/6/4.

2- आज्यस्य वाजयेत् । - तदेव, 5/6/5.

3- तपणशितायावापयसा । - तदेव, 4/6/11.

4- तदेव, 4/6/10

5- तदेव, 4/6/10.

6- तदेव, 4/6/12

7- दीक्षितव्रतम्। - तदेव, 4/6/13

उपसत्सु भाग्रयणकाले रौहिणौ कुर्वीत: आग्रयणकाले एवमेव नवै: सुत्यासु वनीया: । वर्षासु यजनी देहिमातृपूजापूर्वकं श्राद्धम्। अन्वारंभणीया पूर्वकं सौम्य: श्यामाक चरु:।[1] श्रीमादीना मन्यतमा दक्षिणा। चरुधर्माश्चवोक्ता: । वैणवोग्रीष्मेदा-रण्यस्य।[2]

अग्न्याधेये[3] मातर: श्राद्धम् अग्न्यगारकरणं। वपनं वा, क्षौमवास: परिधानम्। गार्हपत्यागारे योनि चतुष्टयान्यतमस्याग्ने: स्थापनम्। अशनम्। उपास्तमयजपो यजमानस्य। पूर्वेण यजमानस्य प्रवेशनं दक्षिणेन पाल्या:।[4] पश्चादग्ने स्वपेशनं द्वयो: । दक्षिण: पत्नी अरणि प्रदानंऽअस्तमिते अजबंधनं अविद्यमानस्य । अर्माणत्रि: प्रसृति परिमाणानां चतुर्णां त्राणांमानम्। चतुष्प्राश्यभक्षणम। राद्धस्ते ब्रह्मौदनमिति प्रैष: । वरदानं चतुर्भ्योर्षिसंवत्सरं वामानादिर्वरदानां तौब्रह्मौदन: क्रियते । तत्रोत्तम रात्रिसंयोगेन अशनम्। अजबंधनम्।[5] जागरणं वा । वाग्बंधप्रैष: । संवत्सर चातुष्प्राश्य पक्षेगार्हपत्या-नुगमे ग्रामाग्निमाहृत्य चातुष्प्राश्य पचनम्।[6] तत्प्राशनं चतुर्णामपि । तमेवाग्नि विहृत्याग्नि होत्रहोम: । पुन: स्वयोन्या: आहरणम् । यजमानस्य अशनं वा पक्षे जागरणम्। व्युष्टायामुपशमनम्। दक्षिणावासंहरणमन्वाहार्य पचन पक्षे गार्हपत्यस्थाने परिसमूहनम्। उपलेपनम्। उल्लेखनं उद्धृत्य अभ्युक्षणंम्। तंत्रेण श्रौत स्मार्त्तं च । अन्वारम्भश्चप्रोक्षणादिश्रर्करात: एवमाह्वनीय दक्षिणाग्न्यो: । वाग्बंधप्रैष: । अश्वानयनप्रैषोध्वर्यो: । अश्वानयनम्। अनडुत्पक्षेप्रैषा भाव: ।

---

1- सौम्य श्यामाक श्चरु राख्यस्य । - का०श्रौ०सू० 4/6/16.

2- वैणवोग्रीष्मन् । - तदेव, 4/6/17.

3- अमावस्यायामग्न्याधेयम् । - तदेव, 4/7/1.

4- पश्चादग्नस्मविशतोदक्षिणत: पत्नी । - तदेव, 4/7/21.

5- गार्हपत्यगारेद्रजं बध्नाति न वा । - तदेव, 4/8/1.

6- तं चतुष्प्राश्यं पचति । - तदेव, 4/8/4.

स्थितेश्वेपुरस्वा त्मंथनं उदिते मनुदिते वा मंथनम्।उदिते तूद्धरणम्। जाते वरदानं मनसैके अभिश्वासो सोयजमान कर्तृको ।

ज्वलतोग्ने खधानं यथोक्तम् । रथंतरप्रैषः । गानं ब्रह्मणः । सोपयमनीके ने ध्मे नोद्धरणम् । अश्वःपुरस्ताद्गच्छति।[1] यजमानस्यधूमा नुगमनम्।[2] वामदेव्यप्रैषः मानम्। अश्वपादेनसंभाराक्रमणम्। प्राङ्·तयनम्। आवृत्यस्थापनम्। वह दितिप्रैषः । तदानम् । अग्निनापदं सकृद्दितर्वोपस्पृस्य निधानम्। पुरस्तात् परिक्रमणम्। इध्मपूर्वाद्धान्वारंभसार्प राज्ञी नां विकल्पः । इध्मान्वारंभो पस्थानो यजमानस्य।[3] गार्हपत्या दक्षिणाग्नेरमधानम्। दक्षिणासंहरणपक्षे सएवनित्यः सर्वदा। निर्मथ्य सभ्यस्थापनम्।[4] गोहाव्यध्वमितिप्रैषो-यज मानस्य ।

श्येतावारवंतीययज्ञायज्ञियानाप्रैषः । अग्निपरिगमनम्।[5] अश्वोत्सर्गः । पूर्णाहुत्या माज्यनिर्वापः[6] अधिश्रयणं सुकस्त्रुवसं मार्गः वैकेकती स्रुक। खादिरः स्रुवः । उद्गुद्वासनम्। उत्पवनम्। अवेक्षणम्। ग्रहणं समिदाधानम् । अन्वारब्धेहोमः। वाग्विसर्गो वरदानम्।[7] तूष्णीमग्नि होत्र होमः । तत्प्राक्सस्थ समित्पर्युक्षणम्। धारा च । चतुर्गृहीतमेकं गृहीत्वा हुत्वा पात्रां तरस्थापनम। पुनर्गृहीत्वा होमः समाि च्योतराहुतिः । गार्हपत्यदक्षिणाग्न्यो द्वे द्वे आहुती नाग्न्युपस्थानम् ।

---

1- स्थितेश्वो पुरस्तात् । - का०श्रौ०सू० 4/8/26.

2- तस्मामिश्वास प्राणममृतेदद्यऽइति । - तदेव, 4/8/29.

3- इध्मेनोद्धरणमुपयभ्य। - तदेव, 4/9/10.

4- दक्षिणाग्निमादधाति । - तदेव, 4/9/19.

5- तदेव, 4/10/2.

6- तदेव, 4/10/5.

7- वरं ददामीति वाग्विसर्जनम्। । - तदेव, 4/10/6.

तनूहवींषि। अग्न्यन्वा धानादो विशेषः[1] । ब्रह्मवरणाभावः। अग्नयेपवमानायाष्टाकपालउपांशु । दक्षिणागावः । तत्रगौर सीतिविशेषः द्वितीयादिहविष्कादावप्यष्टा कपालो । तत्रापिगौरसीतिविशेषः । तृतीया- आदित्यै चरुः । उपांशु होमप्रत्ययात् । कपा लोपवेषोद्धरणपात्रीवर्ज पात्रा- सादनम्। दक्षिणाधेनुः । आग्नेयोवाप्रागादिद पात्श्राव्यः । आदित्यैचरूपांशु। अभावोहाविषा। ब्रह्मचर्यादयोयमाः । पुराधे योत्रि त्रावरमग्नीनामुत्सर्गः । सद्योवायुनर्वस्वो वर्षा सुमध्यस् दिन वान येयं तनू हविषां मध्ये पद्यते ते नास्या उपांशु त्वं न भवतीति सम्प्रदाय इति भाष्येग्न्याधेय वत्सर्व सञ्चेति। नाग्न्य करणं विद्यमानत्वात् । अरणिप्रदान मुख्यस च । कुशीर्ष्वलताग्नेर्निधानम्। कुशैरेवाद्धरणम् । हविर्बास्थाने आग्नेयः । त्रिरात्र मुत्स र्गे[2] पक्षे अपूपाधानम्। स्मार्तानामभ्युक्षणां ते गार्हपत्येव्रीह्य पूपस्यनिधानम् । ततोन्वारब्धे अभ्युक्षणादि शर्करांतम्। एवथा वमाहवनीये तुल्यमन्यत् । वशायाः पक्षे पूर्वधरपराहैमैत्रा वरुणी व शामा लभ्यपुरोडाशांता निरूढवत्प्रणीतादिदण्डकोच्चारणवर्जम् । भागावदान नियमः रत्रिश्रितायां प्राप्त श्चरणम्। दक्षिणान्वाहार्यः प्रतिप्रणीतेनाग्निहोत्र- होमाः । अनंगत्वादग्निहोत्रहोमस्य । तुल्यंगन्यदशापि । आग्नेयेग्नन्वाधानादौ विशेषः कपालानिपंच । दक्षिणा हिरण्य मनड्वान्वाप्रथमे प्रयाजेग्नीन्ये जेतिद्वितीय आज्यभागो अग्नयेपव मानार्ये द्रुमते वा । प्रथमे वानुयाजेग्नीन्यजेति विशेषः । उत्तमोनुयाज उच्चैः । शेषमुपांशु । ब्रह्मचर्यादीनामनुष्ठानम्।

प्रसवरत उद्धरणम्। नर्येतिगार्हपत्यो पस्थानम्। शंस्येत्याहवनीयस्य। अर्थयति दक्षिणाग्नेः गमनं। वाग्विसर्जनम् । यथाकालं यजमानम्। अग्निहोत्रे उदकमक्षणम् । स्वद्रव्य परित्यागः पुनर्भक्षणंदश पूर्णमासयोरुद्धरणादि अभिध्यानम्। व्रतग्रहणम् । प्राङ्मुखस्य । प्रयाजानुमंत्रणं स्वद्रव्यपरित्यागः मयीदमिति जपः।

---

1- पुनराधेय माधान प्रतिज्ञानस्य । - का0श्रौ0सू0 4/11/1.

2- त्रिरात्रवरमग्नीनुत्सृज्य । - तदेव, 4/11/3.

पूर्णपात्र ग्रहणं विष्णुक्रमणम्। प्रीडीक्षणम् । प्रदक्षिणा वर्तनम् । प्राग्गमनम्। पुत्र नाम ग्रहणम् । व्रतविसर्ग इति । एवं सर्वनित्येष्वयद सान्निपातिकं तत्प्रोषितोपि करोति । न काम्येषु। आगच्छतोमत्पावाग्यमनम्। समित्पाणि रनुपेत्य कंचिदा-हवनीयो पस्थानम्। उपविश्यसमिदाधानम्। परिसमूहवप्रक्षेप: एवं गार्हपत्ये दक्षिणाग्नौ च । मन्त्रमात्रे विशेष: । तूष्णीं वोपस्थानं गछत आगछतश्च। गृहोप-गमनं प्रवेशनम्। तदहर्गृह्याणामहिंसा।

अग्निहोत्रे अनस्तमितेयजमानस्योद्धरणप्रैष: । उद्धरणं प्रत्यङ्मुखस्य वातायं निधानम्। तस्मिन्पक्षे प्रातर्होमोपितत्रैव । दक्षिणासं हरपक्षे नित्यो दक्षिणाग्नि: । इतरथागार्हपत्या दुद्धारणम् । प्रत्युपयसधवाम् । सदावा आहरणम्। निवा वसितेवा। तत्र किंचित्त्यक्ता दक्षिणाग्नौ। ब्राह्मणभोजनम्। अभावेगो: पयोधि श्रयितवैब्रूयादिति प्रैषोयजमानस्य अधिश्रयणं दक्षिणाग्नौ। उद्वास्य तद्ब्राह्मणं पाययित वैब्रुयादिति प्रैषोध्व र्यो: त्रयाणां ब्राह्मणानां पय: पानम् । आस्तमिते यजमानस्य संचरेणप्रवेशनं उपवेशनम् । पत्न्या उपवेशनम्। यजमानस्योदकभक्षणम्। वाग्यमनम्। कूर्चनिधानम्।[1] कुशान्वा। परिस्तरणम्। आहवनीयपर्युक्षणं समित्य पयुक्षणं[2] धारस्वगांधुक्षेतिप्रैष: । आशुद्रेणकृता यांस्थाल्या-मशूद्रेण चंद्रोह । दक्षिणेनप्रवेश आहवनीयं पूर्वेणा हृत्य गार्हपत्यं तुत्तरतो निरूह्यां गारा नधिश्रयणम्।[3] तृणेनावज्योततम्। उदकोसक:।[4] पुनरवज्योतनं निदध तस्त्रि-रूद्वासनम्। दध्न स्तंदुलानां च नाधिश्रयणम्। यवा ग्वानोदकासेक: । स्रुकस्रुव प्रत-पनम्। पाणिनासंमार्ग: । पुन: प्रतपनम्। उडलिथा मीतिप्रैष: । प्रतिप्रैवतूमुल्वेति तिष्ठत: । उन्नयनम्। उपरिसमिधं धारयतोगार्हपत्या दाहवनीयं प्रतिहरणं[5] मध्ये निगृह्योदगृह्य उपविश्य समिदाधानं प्रदीप्ता यांहोम: । कूर्चेसादनं गार्हपत्या

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अपरेणाहवनीयं कूर्च निरधाति कुशान्वा । - का०श्रौ०सू० 4/13/14.

2- आहवनीयं पर्युक्षणोदधारांनिन्यत्यागार्हपत्यात । - तदेव, 4/13/16.

3- का०श्रौ०सू० 4/14/1.

4- तदेव, 4/14/5.

5- तदेव, 4/14/12.

वेक्षणम्।[1] प्राग्वाहोमात्त्उत्तराहुतिः द्विः स्कक्कंपनम्। कूर्चेस्थापयनम्।[2] स्रुगगुपमार्जनम्। उत्तरतः कूर्चैमार्जनम्। तथा दक्षिणा व उत्तानेद उदकोपस्पर्शनम्। गार्हपत्येआहुति द्वयं दक्षिणाग्नौ च ।[3] अनामिकयाद्विः प्राशनम्। पात्रांतरे उत्सर्पणम् । भक्षणं निर्लिद्यः स्रुचासेकः । एवं द्वितीयस्य । तृतीयस्योच्चै। चतुर्थ स्रुचं पूरयित्वाकूर्चस्थानेत्रि निर्षेकः।[4] स्रुक स्रुव प्रतपनं निधानं[5] यथा पर्युक्षितम्। समिदाधानम्। वत्स पृंचेत्रि गदं व्याख्यातं इहगोपथे। भूर्भुवः स्वरितिवा। तच्च नियोगतः केचिदि दंतितद्युक्तम् । वात्सप्रेणसहविकल्पनत्वात्। अत एव च साय होमां गत्वम्। धारावर्ज पर्युक्षणम् । माहवनीयो पस्थानम्। आसनं सयनम् । चा गार्हपत्येवाग्विसर्गः । उदक भक्षणम् । अनीत्यनिाच्छकामतो दक्षिणाग्न्यभिधानम्। एवं प्रातरनुदित विशेषः । प्राक्तंस्थं समित्पर्युक्षणम् । धारा च । य एवरात्रौ संचरोग हीनः स एवप्रातः । उन्नयामीत्याहप्रातः । इतरे मंत्रायथा। सूत्रम्। समासनं सभ्यस्य भस्मोद्व तोपगमनम्।[6] यजमान पक्षे उन्नयने उद्धरणे च प्रैबाभावः होमः समाप्तः । चातुर्मास्येषु फाल्गुन्यां वैपूव देवम्।[7] तत्र मातृश्राद्धम्। अन्वारंभणीया वैश्वा नरपार्जन्यौ वा।[8] अग्नयेवैश्वा नरायद्वादशकपालः।[9]

---

1- का०श्रौ०सू० 4/14/16.

2- तदेव

3- तदेव, 4/14/25.

4- उपसृज्य श्रुचंकूर्चे निमार्ष्टि नमोदेवेभ्यः । - का०श्रौ०सू० 4/14/20.

5- स्रुकस्रुव आहवनीये प्रतप्यनिदधाति । - तदेव 4/14/29.

6- भस्मोद्व तमुपेयात् । - तदेव, 4/15/34 .

7- चातुर्मास्य प्रयोगः फाल्गुन्याम्। - तदेव, 5/1/1

8- वैश्वानरपार्जन्यौ निरूप्येच्छन । - तदेव, 5/1/2.

9- वैश्वानरो द्वादशकपालः । - तदेव, 5/1/3.

पार्जन्यश्चरु रिति।[1] अहतवास: परिधानम्।[2] प्राचीन प्रवणाध्यवसानम् । विहरणम्। अग्न्यन्वा धानम्। शाखाछेदनम्। सन्नमदनम्। उपवेषनिष्पत्ति: । पवित्र करणम्। पवित्र वंधनम् । अपाकरणं । विश्वेभ्यो देवेभ्य इति विशेष: । शाखोपगूहनं ब्रह्म वरणादौ विशेष: । पात्रासादने कपालानिबहूनि । शाखो-पवेष: कुशमुष्टयनं तरं दोहन चतुष्टयम् । उद्धरणया अनंतरं वाजिन भांडां दक्षिणा-प्रथमज: उपकल्पनीयेषु कुशप्रस्वप्रस्तरौ प्रसन्नद्वे धावर्हि: दधिचरुत्रयंम्* मंथनं चतुष्टयम्। पक्षेक्षुर चतुष्टयम्। कर्णांते चर्चक: इदमग्नेश्च सवितुश्च पूष्टश्च । मरुतांस्वत वसां च । अथवामरुतां च द्यावाप्टधिंव्योश्च। इदं सोमस्य। इदं सरस्वत्या:। कपालेषु यथोक्तौ मन्त्र: । एक कपाले तप्यस्वेतिविशेष: । प्रोह णां ते प्रक्षालनां तो दोह: । इक्षणां तेपोप्त विवेक: । इदं पूछा: । विरोधा द्धवोप्य धिश्रयंति पयस्यांवर्जयग्निकरणम् । चरुकपालेषु यथोक्तौ मंत्र इतिग्रन्थौं भूयश्चित्य: । पुरोडाशपात्र्यनंतरं वाजिनभां उसम्मार्ग: । तत्रस्थाभिधारण मदत्वा वाजिन निषेक: । वाजिनस्यापि प्राणादानं उत्करेआसादनम्। हविंष्या लभ्यवाजिनस्य च । तत आत्मा लंभ: । उदकोपस्पर्शनम् । अग्नि मंथनम् । तत्र शकलादानम् । वेधांनिधानम् । कुशतरुणोपधानम्। तदुपर्यरणेर्निधानम् । उत्तरयाज्यस्थाल्युपस्पर्शनम् । अभिभिधानं मध्यमाण्यानुवाचनम्। मंथनम्। जात प्रैष: । प्रह्रियमाणप्रैष: । प्रहरणम् । स्थाल्या: स्रुवेणाहोम: । नवप्रयाजा:।[3] चतुर्थसप्त मयो: समानयनं। पंचमेनानुमंत्रणं द्यावापृथिवीयस्य सर्वहोम: । अपरिवर्तनं च । पयस्याया: भाग चतुर्द्धाकरणा नामभाव: । समस्य मार्जनम्। दक्षिणायां गौर सीतिविशेष: अयं वोगौ: प्रतिगृह्यतामिति च । न वानुयाजा: चतुर्थे सप्तमे च समा नयनं द्वितीया नुयाजप्रभृति चजयजेति प्रैष: । प्रयाजेषुच । सह शाखय। प्रस्तरा नु प्रहणम् । स्वकाले वाजिन यागो भक्षांत: । परिधिभि: सहोप-वेषहोम: समिष्ट यजं त्रिनीन् एकं वा । कर्मापवर्गान्ते पक्षे वपनम्। दक्षिणाग्नि मपरेण गोदानोदनम् । वितारणम् । कुशांतर्द्धानम् । त्र्यायुषमिति यजमानस्य

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- चरुरुत्तर: । - का०श्रौ०सू० 5/14.

2- अहतवासा। - तदेव 5/1/22.

3- नवप्रयाजनवानुयाजम् । - तदेव, 5/2/7.

जपः।[1] क्षुरादानम्। वपनम्।[2] एव पश्चादुत्तरतश्च जपक्षुरादान वर्जम्। अधः शयनादीनां विकल्पः।[3]

आषाढ़शुक्ल चतुर्दश्यां करंभपात्रकरणम्।[4] तत्र दक्षिणाग्नेरुद्धरणम्। ब्रह्मणउपवेशनम्। प्रणीताप्रणयनम्। दक्षिणाग्ने रोत्तरतः पात्रासादनम्। दशगणे- कपाल स्थानेकर्तारम्। हषदुपलमध्ये शम्यापात्री पवित्र छेदनानि। पवित्रे उप- सर्जनी यात्रयं वाः। शूर्पाग्नि होत्र हवण्यादानादि पुजा संख्ये काधिकानां चतुर्मुष्टिकानां ग्रहणं सादनान्तं एकपुज द्विपुजाऽपुजानां चत्वारि। पवित्रकरणा- दिप्रोक्षणी निःशेषकरणां तंग पुर्चित्यं दर्शणीयत्वात्। कृष्णाजिनादानादि तुषवि प्रमोकां तंकंडनं कुक्कुटा हनन वर्जम्। दक्षिणाबनोकर्प रोपधानम्। नागाराणां प्रायः करणं देश रचनाभावात्। उपरिष्टात्वं गारो दीयतेधर्ममात्रत्त्वात्। नांगारैरभ्यूहनं भर्जनस्था धस्तात्तापन प्रसिद्धेः। दक्षिणाग्नौ उपसर्जन्यधि- श्रयणं यवकुल्किाधिश्रयणे भजनो गार्हपत्यास्पर्यग्निकरणम्। ईषद्भ्रयणम्। उद्वासनम्। पात्र्यामोप्यभिमंत्र णादिसंयवनां तं विभज्य पात्रकरणम्। आलंभः। पिष्ट लेप- पाअंगुलिप्रक्षालनयोः स्थापनम्। प्रणीतान्निनयनं मंत्र वर्जमिनेपदार्थाः। प्रातर्वैश्व देविकानां वाससां परिधानं गार्हपत्ये समारोपः। उद्वसादनं मंथनम्। प्राचीन प्रवणोपरिसमूह नादिकत्वाग्नेः स्थापनम्। ब्रह्मवरणम्। गार्हपत्यादक्षिणेनोपवे- शनम्। तमेवोत्तरतः प्रणीताप्रणयनम्।[5] अग्निहोत्रहवणी वज्रः। पवित्र छेदनानि पवित्रे अन्तर्द्धान तृणं च। पंचकासादनं प्रतिप्रस्थानुश्च। रजुशं कुशम्याअभिपुरीषा- हरण प्रोक्षणी सिकताछादनानां चोपकल्पनं। प्रतिपस्थातुक्षरजुकोस्पकल्पनं। उभयोः पर्यग्निकरणम्। प्रोक्षणी संस्कारः। वज्रां तर्द्धान तृणयोः प्रोक्षणां प्रोक्षणीनां स्थापनम्। यथोक्तं वेदिमानादि। परिसमुह्योत्तरस्यामुत्करकरणं

---

1- त्र्यायुषमिति यजमानो जपति। - का०श्रौ०सू० 5/2/16.

2- तदेव, 5/2/17.

3- तदेव, 5/2/21.

4- तदेव, 5/3/1; पूर्वेद्युदक्षिणाग्नौ निस्तुषाम भृष्टयवानां करम्भ पात्रकरणम्। 5/3/2

5- प्रणीताद्यतः। - तदेव 5/4/21, 5/4/23.

स्तवं यजुर्हरिष्यतः । प्रतिप्रस्थातुर परेणवेदिसंचरमां ब्रह्मन् पूर्वोपरि ग्रहोपरिहीष्णाव इति प्रैषः । बृहस्पतीपरिगृह्णीतं वेदीसुगावोदेवाः सद नानि सं त्वनयोर्वर्हिः प्रथेतां साध्वंतर्हि स्रेष्टघिव्यो देव्यादेव्यो स्तां देवता- वर्द्धयतं युवां नाकस्यपृष्टे यजमानोऽस्तु सप्तषीण्यं सुकृतां यत्रलोकस्तत्रेयं यज्ञं यजमानं वधतंतुं परिगृह्णीत मिति प्रैषः । हरण प्रैषो हरत्रिस्त्रिरिति । उभय- तोहरणम्। संमर्शनां तेध्वर्यो रेवसम्पादानं चात्वा लमानम्। अन्वाध्येपूहरणम्। पुरीषादानम्। शुक्र सहितो निवापः। अग्नीधोभिन्यासः । एवं द्विरपरं मंत्र मात्रे विशेषः। खननं चतुर्थें यथार्थ प्रमाणत्रयस्थान्यतमेन कल्पनम्। उत्तर वेदां- नाभिकरणं प्रोक्षणम्। सिकताप्रकिरणम्। छादनम्। पूर्णाहुति वत्संस्कृत्याज्यं यं च गृहीत ग्रहणम्। आज्यप्रोक्षरापग्नीनामुद्यमनम्। प्रतिप्रस्था तु स्वाग्नेः । अग्निभ्यां प्रह्रियमाणाभ्यामितिप्रैषः त्रिस्क्तायां यथा वेदि ग्रहणं। उत्तरवेदिप्रोक्षणम्। शेषनिषेकः। नाभिव्याघारणम् । सुगुद्यमनम्। अग्निस्थापनम्। दक्षिणत्योल्लेखना- भक्षणे कृत्वा निधानमग्नेः । ब्रह्मयजमान योः प्रणीतानां च अग्निभ्यां सहानु- गमनम् । अध्वर्योर्ददक्षिणाग्न्युद्धरणम् । अग्न्यन्वाधानम् । अपराग्न्यो रध्वर्योः । पात्रसादने आसन्न वर्ज दश गणः । पात्री नियमः । पवित्रैस्तएव शाखोपवेषः उपसर्जनीया पात्रं मेक मेवोभयोः । कुशमुष्ट्यनंतरं दोहन चतुष्टयम् । वेदितृणमा- सन्नमेव। अभ्रियोर्वे। स्रुवोजुहूत्पभृत उभो स्रुवः संप्रगृह्यस्प्ये सादयत्तरतिश्रुतेः ध्रुवा। सन्नहनावच्छादनानि। परिधयः । विधृत्यौ आज्यं करंभपात्र्यः । पुरोडाश पात्र्यः। वाजिनभांडम् । होतृषदनं। शूर्पम्। शृतावदानम्। कृष्णं- व्रीहियवौ । प्राशित्र हरणे। दक्षिणा धेनुः । अश्वोवा। द्वादश वा बदभावः । अंजनि कटशपूर्णपात्रकमपि वर्गा च । उपकल्पनीयेषु वर्हिक्षतुष्टयम् । दधि । चरुत्रयम् । उर्णाकुंभीप।वदाज्यपात्रम्। शमीपलाश मिश्राणि करीराणि।[1] मंथनचतु- ष्टयम्। पक्षेक्षुरचतुष्टयम् । प्रतिप्रस्थातु र्वंजाग्नि होत्र वहण्या सन्नमेव कपाल वर्ज दशगणाः । अर्थवत्तियात्रा नियमः । पवित्रैस्तवनो पवेषः । उपसर्जनी पात्र- मध्वर्युसक्तम् । कुशमुष्टयनंतरं दोहन चतुष्टयम् । वेदि तृणामासन्नमेव । अभ्रिः स्रुवो जुहूः उपभृतध्रुवा। सन्नहनाव छादनानि। परिधयः विधृत्यौ आज्य

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1 - करीराण्यवपति शमीपलाश मिश्राणि। - का०श्रौ० 5/5/1.

वाजिन भांडम्। शृतावदानम्। शुष्कयंवा: । पूर्णपात्रं पक्षे समिच्च उपकल्पनीयेषु वहि: प्राकृतम् । उर्णाकुंभी। दधिमक्षे पृषदाज्य पात्रम्। शमीपलाश मिश्राणि करारराणि।[1] शूर्पादानादिग्रहणे विशेष: ब्रह्मन् हवि: प्रक्षिप्पा व इति प्रोक्षणे। प्रोक्षतं यज्ञं देवता बद्ध्य तं युवां नाकस्य पृष्ठे यजमानोस्तु । सप्तर्षिणाम् सूकतां पत्रलोकस्तेमं यज्ञं यजमानं च धत्तं । ॐ प्रोक्षितम् । यथा स्वं पात्र प्रोक्षणम्। उभयत्रकुक्कुटा हननम्। अध्वर्यौ रेकमोक्षं तुष विमोकां तं कृत्वा द्वितीयस्य हविरावपनं यवेषु मुशल मातमेष। शूर्प चमुशल योजनं । अंतेवाग्विसर्ग: ।सकृदाहृत उभयत्र कंडनं करोति ।

व्रीहि पुरोडाश पक्षेणां ते चर्नक: ग्यवेषु न निर्देश: यथोक्त मुपधानम्। ऐन्द्राग्नानंतरं वाकण्या: पयस्याया: स्थान करणम् । तदनन्तरं कुम्भ्याम् । तत्रोपधान काले लौकिकोदकेन सहोपधानं तदनन्तरं मारुत्या: पयस्याया: स्थानकरणम्।[2] तदनन्तरं मारुत्या: । कुम्भ्या: । तदनन्तरमेककायस्यऽआज्यनिर्वाप वेद वं धातुभ्यत्र । परिवाप्या पिंदोही । उपसृष्टादि प्रैष: । प्रतिपस्थातुश्च । अन्यत्र युगपत्पदार्थेषु अध्वर्यो: ईष णां तेयोष्णविवेक: । इतर निर्देश: । अध्वर्योर्मेषकरणं प्रतिप्रस्थातुर्मेष्या: । प्रक्षाल्य लौकिकोदकेनोर्णाश्लेषणम् । प्रतिप्रस्थातुश्च सर्वेषां युगपदधिश्रयणम् । वारूणामुक्तं कर्म मेषयो: । पृथनश्लेक्षण नामभाव: । पयस्यावर्जपर्यग्नि करणम् । करंभपात्रसवतेन सहाध्वर्यो रास्योक्षदानम्। इतरस्यस्वकीयमेव । तत: खननादि परिग्रहे पूर्व: वरप्रश्न: । अनुमार्जनं प्रोक्षणीप्रैष: । प्रोक्षणीरासादयत मिध्मं वर्हिरूप सादयतं सृच: संमृष्टं पत्नीं सन्नह्याज्येनोदेतमिति प्रैष: । प्रतिप्रस्थातुर्देशेस्यादि सादनम् । जुह्वा अनंतरमध्वर्यो स्तुष्णीं शूर्पसम्मार्ग: । करंभपात्री पूर्वक पात्रीसंमार्ग: । वाजिनभांडयोर्यथास्वं । पत्नी सन्नहनमध्वर्यो: सकृदुक्तैव पत्नी आज्यद्वयमवेक्षते । प्रागाज्य ग्रहणात्पृषदाज्ययोजनम्। उपभृति चतुर्गृहीतं गृहीत्त्वाष्ट पदाज्यं

---

1- का०श्रौ० 5/5/1.

2- मारुतीसहाज्यां प्रतिप्रस्थाता दक्षिणस्याम्। - तदेव, 5/5/5, 5/523.

पंचगृहीतम् । तत्रापि सकृन्मंत्रः त्रिर्वा प्रतिप्रस्थातः पक्षपृषदाज्यम् । तत्रोपभृति चतुर्गृहीतम् । ब्रह्मन्निदमं प्रोक्षिण्याव इति प्रैषः प्रोक्षत मिति प्रैषः । एवं बर्हिषि। अध्वर्युरुत्तरैर्विज्ञाने जुहूमासाद्य दक्षिणे तूष्णीं ध्रुवमासादयति । उपभृतस्योत्तरकालं पृषदाज्यस्या सादनम् । प्रथमं करंभया त्र्युपस्तरणम्। तस्याभिधारणमदत्वा वा उभयो वाजिन निषेकः ।

करीरावपनमुभयोः । करंभपात्र पूर्वक माग्नेयादीनामुद्वासनम्। यथा स्वंपथ स्ये उद्वास्य अध्वर्युर्मारुत्या मुपस्तीर्य मेषीद्वासनम् । तथा प्रतिप्रस्थातुर्वारूण्यामेष्याः । करंभपात्रपूर्वकमाग्नेयादीनां प्राणदानम् । तूष्णीं करंभपात्राणाम् । अध्वर्युः स्वपयस्थायां दत्त्वा मेषस्य ददाति । तथा प्रतिप्रस्थातुर्मारुत्यां दत्त्वा मेष्यां ददाति । यथास्वं वाजिनयोः। अध्वर्युः स्थालीमासाद्योत्तरस्यां दक्षिणस्यां करंभपात्राण्या सादयति।[1] तूष्णीं। तत आग्नेयादिप्रियाभ्यां धामाभ्यां प्रियं सदआसीतमितिपयस्ययोः । उत्करे वाजिनो आज्य मालभ्य अध्वर्यूस्तूष्णीं करंभपात्रा लंभनम्। न तौ जौहवादेः । पयस्थालं मनोत्तरकालं यथास्वमेषयोः । शकला दानादि होमां तं मंथनम् । अत्र वा व्रतग्रहणम् । होतृवदन मुत्तरस्यां प्रैषः । सर्व एवाध्वर्योः । सम्मार्ग प्रैषदते ।

असंमृष्टेग्नौप्रतिप्रस्थातुः पत्नीमानेष्यतः केनवरसीत्ति प्रश्नः । प्रत्याख्यानम् । तणोद्गृह हणोवा । नयतः पद्यासिन इतिवाचनं प्रतिप्रस्थातुः पत्नीमानेष्यतःकेन वरसीतिप्रश्नः । प्रत्याख्यानम् । तृण्येदगृहणं वा । नयतः प्रघासिन अध्वर्योः स्वाज्येनध्रुवोपस्तरणम्। करंभपात्रावधानम्। प्रत्युपस्तरः पत्न्याः शिरसि अवधानम्। दक्षि णाग्नेर्दक्षिणनगत्वा तीर्थेनप्रविश्यापरेण पूर्वेण वा वेदि मेत्य दक्षिणेग्नौ प्रत्यङ्मुखी करंभपात्राणि जुहोति।[2] जायायती प्रत्यं

---

*- का०श्रौ० 5/5/11.

2- तदेव, 5/5/11.

चौतिष्ठं तो वा जुह्वतः । शाखा आ ह्वरक वचनात् । यजमानस्यान्वारंभः । मोवूणइतियजमानस्य नैजपः । प्रतिनयतः प्रतिप्रस्थातुरेवपत्नी वाचनम् । ततः संमार्जनादि द्वयोरपि संमार्गः । अध्वर्योर वहोतृवरणम् । संमष्टानामुपवेशनम्। प्रयाजा न वा चतुर्थसप्तमयोः समानयनम्। आगंतूनामुत्तव्यधर्माः । आज्यभागो कृत्वास्रुक पाणिरास्तेप्रतिप्रस्थातुरेवपत्नी वाचनम्। ततः संमार्जनादि द्वयोरपि संमार्गः । अध्वर्यौरिवहोतृ वरणम् । संमृष्टा नामुपवेशनम् । प्रयाजान वा चतुर्थ सप्तमयोः समानयनम्। आगंतूनामुत्तम धर्माः । आज्यभागो कृत्वा स्रुकपाणि रास्ते प्रतिप्रस्थाता अध्वर्योराग्नेयादिभिः प्रच रणम्। पयस्या प्रचरणकाले मैत्री व्यतिहरतः अन्यतरेण पयस्या वदानेनसह मेव ग्रहणम् । प्रत्युपस्तरणादियागः । सव्येनसृ चोर्गूहणं । दक्षिणेन प्रतिप्रस्थातु र्वाह्य आदाय मरुद्भ्योनुवाचनम्। वारुणी वद्ववदानम्। प्रैषोध्वर्योरेव । सर्वहुतने कायेन प्रचरणम्। स्विष्टकृदुभयोः। न प्रतिप्रस्थातुः प्राशित्रम्। अध्वर्यु रिडां गृहीत्वा प्रतिप्रस्थात्रे समर्पयति । तत्र मारुत्याः प्रत्युपस्तरणमध्वर्योः । भाग चतुर्द्धाकरणानि नययस्ययोः । दक्षिणा-यांगौरास अश्वोवा। गावः बह्वा दशवा एकवचने इयं वोगोः प्रतिगृह्यताम्। अयं वोऽश्वः प्रतिगृह्यताम् । बहु वचने इमा वोगावः प्रतिगृह्यताम् । ब्रह्मन-प्रस्थास्यावः समिधा वाधायाग्नि मग्नीत्संमद्दीत्यनुयाज प्रैषः । उँ० प्रतिष्ठित मिति ब्राह्मणः । एतेतेअग्ने समिधोताभ्यां वर्द्धस्वेत्यनुमंत्रणम्। समानीयन वा नुयाजाः चतुर्थ सप्तमयोः समानयनम् । व्यूहनमध्वर्युभयंगसह शाखयाप्रस्तरान् प्रहरणम् । तूष्णींप्रैषोनुप्रहर तमिति। वाजिनयागः । वाजिन भक्षः।[1]समासिच्य। अध्वर्योरनं तरं प्रतिप्रस्थातुः ।[2] परस्य रसं वादोध्वर्योः । परिधिभिः सहोपवेषः होमः । अपराग्नि होमोध्वर्योः करंभपात्रपिष्टलेपां प्रतिप्रस्थातुश्च स्वीयमध्वर्युर्जुहोति।[3] समष्टि यजं षि त्रीणि। तूष्णीं प्रतिप्रस्थातुः।[4]

---

1- समासिच्य वाजिनभक्षः । - का०श्रौ० 5/5/25.

2- अध्वर्युविकरात्प्रतिप्रस्थाता भक्षयेयुः । - तदेव, 5/5/26.

3- समिष्टयजूंषि तुष्णीं दक्षिणस्याम् । - तदेव, 5/5/8.

4- तत्रैव.

तदं ते चा वभृथेष्टि:।[1] वरूणप्रघा से ऊरू हीति वाचनं भवति साम्प्रतिषेधर: तत्र च तूष्णीं यजमानस्योदकाभ्यवाय:।[2] उक्ते आहवनीय परिच्छेद: । अग्न्यान्वाधानं पक्षमापोवर्चो विदवेष्ठस्तु वयं व इंधानास्तन्वपुषेम । मह्यं न मतां प्रदिशिकच तसो युष्माभिरध्यक्षाभि: पृतना यजेमेत्युदके एव वाचस्पति प्रैष: । ब्रह्मण उपवेशनम् । प्रणीता प्रणयनम्। अपाभेव परिस्तरणम् । पात्रा सादनम्। अग्निहोत्र हवनीवज्र: । पवित्र छेदनानि पवित्रे । आज्यस्थाली कुशमुष्टि: । वेदितृणं आभ्र: । योक्तं स्रुवो जुहूपभृत । पक्षेध्रुवासन्नहनाव छादनानि । परिधय: विधृत्यौ। आज्यंशृता वादानं चेति । अयं दशाहुति पक्ष: । षडाहुति पक्षेविशेष: । अग्निहोत्र हवणीपवज्र: । पवित्र छेदनानि पवित्रे। आज्यस्थालीकुशमुष्टि: । वादतृणमग्नि: योक्तं स्रुवो जुहूसन्न हनावछादनानि। परिधयो विधृत्यौ। आज्यं उपभृत् । शृतावदानं चेति ।उपकल्पनीयानि। समिदेकावर्हि:। उल्मुकार्थे पात्र द्वयं दशाहुति पक्षे। अनीवत्याज्यं समिच्चेति। वारूणी निष्काष: । परिधानार्थे द्वे द्वे वाससी।[3] प्रत्यागत समिद्वयं चेति।[4] वाग्यत: पवित्रछेदनादि पात्र प्रोक्षणांतम्।[5] आज्य निर्वापणाद्यनुमार्जनान्तम्। प्रोक्षणी प्रैष: । प्रोक्षणीरासादय वर्हिरूपसादय स्रुचोसंमर्दीतिविशेष: षडाहुतिपक्षे नस्फोदं च प्रहरणं याण्यो खनेजनम्। अपरेणाप्रणीतानांस्तु वर्हि: सादनं यथा संभव स्रुक संमार्ग: । पत्नी सन्नहनाद्यन्यतरावेक्षाणांतम्। षडाहूतिपक्षे जुह्वां चतुर्गृहीतम् । दशाहुतिपक्षेतसृण्व पिचूतुर्गृहीतानि। वेदिप्रोक्षणादिस्तरणांतम् । पक्षेवर्हिरसर्रि स्रुग्भ्यां त्वेति विशेष: । समित्प्रस्तरादानम्। आहवनीयकल्पनं नात्र । पक्षेपात्रोत्मुको दूहनम्। परिधि परिधानम्। स्पृष्ट्वा परिधिंसमित्परित्यज्यते । द्वितीया नास्तिसूर्योवपुरस्तादित्याहवनीयेक्षणम्। आवृत्यविधृत्योस्तरणम्। आज्यासादनान्तम्। षडाहुति पक्षेभून्नाग्नेति

---

1- वारूणी निष्काषेणावभृथम् । - का0श्रौ0 5/5/29; 5/5/30.

2- तत्रैव ।

3- अन्येवाससी परिधत्ते । - तत्रैव, 5/5/33.

4- यथे तमेत्याहवनीये समिदाधानं देवानां समिदसीति । - तदेव, 5/5/34

5- पत्नी च गार्हपत्ये तूष्णीम् । - तदेव, 5/5/36.

विशेषः। निष्काषस्य प्राणदानम्। वरुणं पदेति । आज्यस्थालीपूर्वकमासादनम्। यथापागमालंभः । आत्मालंभः । उदकोपस्पर्शनम । न होतृवदनकरणम् । अपामुपवाजनम् । अपोग्नीद् संमृदीतिप्रैषः । आपोवाजजितावो जंवः सारिर्ध्यतीर्वा जनितः संमाज्मींतिलं मार्गः । होतृवरणम्। पूर्णाहुतिवदाज्यम् । संस्कृत्य चतुर्गृहीति ग्रहणम्2। समिदाधानंहोमः । जौहवने बर्हिर्वर्ज प्रयाजाः । आज्यभागोपवेनिष्काषयागे अवदानं गृह्णतोनुवाचानम्। स्विष्टकृत्यववती नुवाचनम्। पक्षे संचराभ्युक्षण। पवित्रप्रति पत्तिः पक्षे उल्मुकसमासः। वृह्मन प्रत्यास्यामि अपोग्नी संमृ दीत्यनुधान पक्षेप्रैषः । इतरथा संमार्ग प्रैषः । मंत्रे आपो वाजजिनो वाजं वः सतृषीविर्जितितः संमाज्मींति संमार्गः बर्हिर्वर्ज पक्षे अनुयाजौ। धारानुयाजश्च। व्यूहनादिहृ ग्विमोकांतम्। प्रस्तरस्याग्र मध्यमूलां जनं। पक्षे जुह्वांस्थाल्यां च। संवादश्चयोर्वाक पोरभावः ।

परिधिप्रक्षेप मन्त्रोऽयं परिधिं पर्यधत्वमायो देव्यः पाणिभिर्गुह्यमानाः तं च एतमनु जोषं भराम्येसनै युष्मदय चेतन पातेः । इतरोच अपां प्रियं पाथोपीतमिंतिशेषः । संस्रावाहुतिः दर्भविमोकः। वेदयोक्त्रमोविमोकः । आवदेः स्तरणं बर्हिहोमः प्रणीता विमोकः । निष्काषस्थाल्या मजुनं जायापत्योः स्नानम्। इतरेतर पृष्टिशोधनम् । अन्यवासः परिधानम्। पूर्वोषां दानं तूष्णीं एत्याह वनीयेसमिदाधानम्। पत्न्या चगार्हपत्ये तूष्णीं।[1]बर्हिहोमादि विशेषः । प्रणीताविमोकोध्वर्योः । करंभपात्रकर्णेः सहितकण्य नां चा पासनम् । युगपत्पूर्णपात्र ग्रहणम्। वेदिदूपस्थाप्यवेक्षणम् । अंतरा वेदिं विष्णुक्रम मन्त्याथवर्णश्रुतौ । अग्न्योश्च । ब्राह्मणौ तर्पयित वै इति प्रैषः । द्वयोर्ब्राह्मणयोस्तर्पणं। उभयत्र कमपि वर्गाधान। पाक्षिक वपनं वैश्वदेववत् । समारोपः । प्रवेशनं निर्मथ्याग्निस्थापनम्।

कार्तिकशुक्ल चतुर्दश्यां समारोपः।[2] उदवसादनं स्थाल्या दीनामन्यातरेश्रयणम् । मंथनंविहरणम्। अग्न्यनीक वतेष्टाकपालोब्राह्मणा[3] तर्पणान्तः। पुनरुद्धृत्य मरुद्भ्यः सांतपनेभ्यः क्षरू।[4] तत्र च मध्यंदिनेयागः चरू धर्माश्चोक्तः:-

---

1- पत्नी च गार्हपत्ये तूष्णीम् । - का०श्रौ० 5/5/36.
2- कार्तिक्यां शाकमेधा अहम् । - तदेव, 5/6/1
3- पूर्वेद्यु पूर्वाह्नेऽग्नयेऽनीकवते पुरोडाशः । - तदेव, 5/6/2.

ताः बर्हिरनुप्रहरण वर्ज शेषंकर्मापवर्गा[1] तं समाप्यते । अपरा हवेगृहमेधीयश्चरुः। तत्रध्मेस्थाने अप्रैषपक्षे शकलपरिधिनिधानम्।[2] आहवनीय एवाग्न्यन्वाधानम्। ब्रह्मवरणम्। तूष्णींशाखा छेदनम्।[3] पवित्र बंधनम्। त्रिगुणामपाकरणम् । शाखा-पवित्रमवधायस्थाल्यां दोहनम्। ब्रह्मन्नप्प्र्यांसिप्रणेष्मातीतिपयसश्च प्रणयनम्। परिस्तरणमाहवनीयस्यपात्रासादनम् । शूर्पाग्नि होत्रहवणी वज्रः । कृष्णाजिनं उलूखल मुशलम्। अनःपात्री वापवित्र छेदनानि पवित्रौ आज्यस्थाल्युपसर्जनी-पात्रम्। कुशमुष्टि रन्वाहार्य पात्रम्। योक्तं सन्नहनाछादनानि। स्रुवः अज्यं। एकं पिशीलकम्। उद्धरणपात्री वा विधृन्यौ होतृषदनम्। जुहूः शृतावदानम् । हविर्द्रव्यमन्वाहार्यतदुलाश्चेति। उपकल्पनीयानि। प्रस्तरबर्हिः । चरूमेक्षणम्। पिशीलकं । पात्रा वा । योत्कंच प्रैष पक्षे शाखाछेदनादि तूष्णीं दोहनां तं ब्रह्मवरणं प्रणीताप्रणयनम्। अग्निहोत्र हवणी वज्रः । पवित्र छेदनानि पवित्र-योश्चासादनम् ।पवित्रकरणादि प्रोक्षणी संस्कारांत्त वज्रप्रोक्षणं तं मेव गृहीत्वा इध्ममुपासदयेति प्रैषः । शकल परिधिनिधानम्। आहवनीये एव अग्न्यन्वाधानम्। परिस्तरणम् । पूर्वा सन्नवर्ज पात्रासादनम्। पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्नि होत्र हवण्यौ रादानादि कणां तं कंडनं कुक्कुटा हनन वर्जम्। क्षीरोप सर्जन्य-धिश्रयणम्। स्थालीपक्षेरस प्रैषप्रागाज्यनिवपि पातस्थाली समदीति प्रैषः ।[4] कुशैर्धूवा मंत्रेण संमार्गः। अप्रैषस्थाली पक्षे विनाप्रैषेण संमार्गः । आज्यनिर्वा-पोवेद वंधः। तंदुलेक्षणम्। सपवित्रे चरौ तंदुला वापः । उपसर्जन्या नयनम् । पवित्राभ्यां ग्रहणंसं पय इति विशेषः । आज्यचर्वोरधिश्रयणम । स्थालीपक्षे आहवनीयश्रापिणस्तत्रैवा ज्याधिश्रयणम् । पर्यग्निकरणम् । शृत्ताभिमर्शनम् । अन्वाहार्यधिश्रयणम्। प्रैषपक्षे प्रोक्षणीरासादयबर्हि रूपसादय स्रुचं संमृदीति प्रैषः ।

---

1- बर्हिरनुप्रहरणवर्ज वा । - का०श्रौ० 5/6/5.

2- का०श्रौ० 5/6/6.

3- तुष्णीं वैकचोदनात् । - तदेव, 5/6/8.

4- तदेव, 5/6.

अपरेण प्रणीता नां स्फ्य वर्हिः सादनम् । सृव जुहूशृतावदान पिशील्क इडा पात्रीणां संमार्गः पत्नीसंहननाद्यन्यतरा वेक्षणांतम् । इध्मप्रोक्षणम्। प्रस्तर वर्हिषश्च सृचेत्त्वेति। मूला वसेकः । प्रणीतसुपवित्र करणम् । वर्हिविस्रंसनम् । तूष्णीं प्रस्तरादानम् । इध्मप्रोक्षणम्। प्रस्तरवर्हिर्वश्चसृ चेत्त्वेति ब्रह्मणो प्रस्तरदानम्। सन्नहनं विस्रं सनम्। श्रोण्यां निधानम्। अन्यैरवछादनम्। पिशीलकपक्षे एकस्मिन्पिशीलके नुपस्तरणम्। तत्रस्याभिघारः।[1] उद्वास्यपि शीलकयो रुद्धरणम्। एकस्मिनप्राणदानम् । उभयत्र गर्तकरणम्। आज्यासेकः । आज्यस्थाली चरुस्थाल्योः सशेषमुद्धरणम्। उर्दनौसुक् सृवौ यादायवेदिप्रति गमनम्। वेद्यभिमर्शनं तूष्णीम्। समित्प्रस्तरादानम्। आह्वनीय कल्पनम्। परिधिपरिधानम्। स्मृश्यानुस्पृयो ख्धानम्। सूर्यस्त्वेति जपः । शकलाधानम्। आवृत्य विधृत्यो स्तरणं प्रस्तरस्तरणम्। अभिन्यसनम् । समाशून्वैबुहूर्नास्मेति जुह्वा सादनं। दक्षिणस्योदनस्यवज्ञोपगृहेण प्रियाभ्यां धामभ्यां पियं सद आसीदत मितिमितिविशेषः । उत्तरो वेदेनधृता उस्योदनो नाम्नास इदं प्रियेणधाम्ना प्रियं सदमासीदेति । स्थालीपक्षे यथोक्तम्। आहवनीयश्रपिणस्तत्रैवाज्याधिश्रयण-मिति विशेषः तयोरासादनम्। सर्वा लंभे आज्यद्वयमालभ्य ततो दक्षिणोदनम्। स्थाली पक्षे रूजुः । आत्मा लंभः।[2] उदकोपस्पर्शः । वृतग्रहण मन्त्रवाहोतृवदन करणम् । आहवनीयोपवाजाम् । अग्नि सन्मार्गप्रैषः । होतृवरणम्। आज्यमार्गो-दक्षिणा दाग्नेययागः। उत्तरासौम्भ्यः । गृहमेधीययागे दक्षिणादुपस्तरणम् । तत एव दिरवदानम्। प्रत्युपस्तरणम् । नक्षताभ्यंगः । एवं स्विष्टकदुत्तरात । दिरभिधा रणमितिविशेषः रूजुरे वस्थालीव पक्षः । सृग्निधानम्। । इन्द्रावदा-नम्। भ्राग ग्रहणं च दक्षिणात् । इडोपहवः । पिशीलकपक्षे प्रागभक्षण न्मार्जनं ऋत्विग्भि रिडाभक्षः। स्थलीपक्षे यथोक्तमृत्विग्भिरिडा भक्षः मार्जनम्।

---

*- दिरभिधारणम्। -का०श्रौ० 5/9/4.

2- तदेव, 5/6/8.

पवित्रप्रति पतिः । उर्दनभक्षणं यथोक्तम् । अरिक्तास्थालीनिधानम् । पिशील-कपक्षे उद्धरणकाले एव । भागपरिहरणम्। दक्षिणादानम्। अग्निसम्मार्ग प्रैषः । अग्नि संम्मार्गः । व्यूनाद्युदकोपस्पर्शनां तं प्रस्त राजनं जुह्वामेव । स्थलीपक्षे स्थाल्यां वा परिधि प्रैक्षेपः । संस्रुवाहुतिः। घृताच्यसिद्युर्योपाहि सुम्ना सि सुम्नेमाधे हीतिधुरिनिधयनम्। वेद्यथोक्त विमोकः । आवेदेस्तरणम्। श्रोणि-यात्। अन्यै रेवछादन वर्हिहोमः । प्रणीताविमोकः । राक्षसागः भागावेक्षण व्रत विलर्गः । भाग प्राशनं । रात्रौवत्ससंसर्गः । निवान्यावत्स वंधनम्। यवाग्वाग्निहोत्रहोमः ।[1] प्रातर्हति वादग्नि होत्रे दर्वि होमः । तत्र तूष्णीं क्रिया। आहवनी येग्न्यन्वाधानम् । ब्रह्मोपवेशनं प्रणीतां प्रणयनम्।[2] परिस्त-रणमाहवनीयस्यैवपात्रासादने दशान्यो अग्निहोत्रहवणी वज्रः । शम्यादृष्ट दूयत्नम्। अर्थवति पवित्र छेदमी निपवित्रे आज्यस्थाली कुशमुष्टि पवित्रछेदनानि पवित्रे आज्यस्थालीकुश मुष्टिः । योक्तं स्रुवः । ध्रुवासन्नहनावछादनानि । परिधयोविधृत्यौ । आज्यं जुहूपभृत। दर्वीरूवमो दक्षिणा।[3] पूर्णपात्रं कर्ममाप-वर्गात्त्वेति। उपकल्प नीयानि। इध्मकाष्ठद्वयम्। प्रस्तरवर्हिः । शीतोदनश्च। पवित्रकरणाद्य संचरेप्रो क्षणीनिधानान्तम्। वाग्विसर्गः । कुक्कुटा हननम्। आज्यनिर्वापो वेदवंधः । आज्याधिश्रयणम्। पर्यग्निकरणं प्रोक्षण्यासादनम्। स्फ्योदं च प्रहरणम् । नवाग्योखनेजनम्। अपरेण प्रणीता स्फ्य वर्हि इध्म सादनम्।वेदाग्रनिष्पत्तिः । स्रुकसंमार्गः। जुहवनंतरंदर्व्याः। पत्नीसहनाद्यन्तरा वेक्षणाद्यम्। ध्रुवायामेव चतुर्गृहीत तग्रहणम्। इध्मप्रोक्षणम् । वर्हिः प्रोक्षणम् । मूलावसेकः । प्रणीता सुपवित्रकरणम् वर्हि विसंसनम्। ब्रह्मणेप्रस्तरप्रदानम्। सन्नहन विसंसनम्। श्रोण्यां निधानम्। अन्यैरवछादनम्। समित्प्रस्तरादानम्। आहवनीयकल्पनम्। परिधिपरिधानम् । स्पृस्यानुस्पृश्ययोराधानम् । आहवनीये

---

1- अवाग्वाग्निहोत्रहोमः । - का०श्रौ० 5/6/35.

2- पूर्वेणाहवननीयं प्रणीतापरिहरति। - तदेव 5/8/7.

3- ऋषभोदक्षिणा । - तदेव 5/6/8।.

क्षणम् । विधृत्यादिसादनांतम्। जुह्वनंतरंदर्व्याः । शीतोहनस्यप्राणेदानम्। आज्यपूर्वकमासादनम् । आलंभः । आत्मालंभः।[1] उदकोपस्पर्शनम् । वृतग्रहण-मन्त्रवा । आहवनीयोप वाजनम्। पूर्वाघारः।[2] अग्निसम्मार्गः निह्नवः । सत्तगृहीतेनैंद्रायस्वा हेत्युत्तराघारस्तिष्ठतएव। ध्रुवासमंजनम्। ध्रुवामाधाय-तश्च नुगृहीतेनाग्नयेस्वाहा सोमायस्वाहेत्याज्य भागावुप विष्टस्यैव । पूर्णादि-वीतिदर्व्या स्थाली तोग्रहणम् । अभिघारणम् । ब्रह्ममाह्वयितवा इति प्रैषः । कृतेदेहिमइति होमः।[3] अन्याहरति ब्रह्माजुह् धीत्त्याह। ततोहोमः । तृग्नि-धानम् । पवित्र प्रति पत्तिः वृषभदानम्। अग्निसंमार्गः । जुह्वदर्व्युत्तराम्। कृत्वा व्यूहनम् । अभ्युक्ष्य जुह्वापरिध्यंजनम् । प्रस्तरादानादि प्रेक्षयणांतम्। तृणप्रक्षेपः । आत्मालंभः ।[4]उदकोपस्पर्शनम्।

परिधिप्रक्षेपः संस्राडतिर्विश्वेभ्योदेवेभ्यः स्वाहेति। देशेविमोकः । विद्यालंभः वेद योक्तुविमोकः । आवेदेस्तरणम् । वातायस्वाहेति समिष्ट यजुः। अन्येरवछादनवर्हिर्होमादि कर्मापवर्ग तं भागवर्जम् । सांतपनीयावर्हिहोमः । अहुत चेदुद्धृत्याग्नि होत्रहोमः । क्रीडनीयामअग्न्यन्वाधानादौविशेषः । मरूदः क्रीडिभ्यः सप्तकपालः।[5] आदित्यै चरुः।[6] प्राचीन प्रवणे महाहविः ।[7] तत्राहत वासः परिधानम् । अग्निस्थापनम्। ब्रह्मवरणाद्यग्नि निधानांतम्। तं वरूण

---

1- तुष्णीमात्मानं संस्पृशति । - का०श्रौ० 5/9/30.

2- द्विरभिघारणम्। - तदेव, 5/9/1.

3- रेहिमद इति जुहोति । - तदेव, 5/6/40.

4- तदेव, 5/9/30.

5- मरुद्भ्यः क्रीडिभ्यः सप्तकपालः । - तदेव, 5/7/1.

6- अदित्यैचरुः । - तदेव, 5/7/2.

7- महाहविरुद्वसाय निर्मथ्या - का०श्रौ० 5/7/5.

प्रघासवत्।[1] एकावेदिः। दक्षिणाग्न्युद्धरणम् । अग्न्यन्वाधानम् । परिस्तरणं पात्रासादने अग्निहोत्र हवणी वज्रमासन्नमेव। कपालानि बहूनि। वैश्वकर्मण एककपालः।[2] अर्थवर्ति पवित्रां तद्वानि तृणमस्येव । या अश्वतस्रः । दक्षिणा ऋषभः।[3] उपकल्पनीयेषु बर्हिश्चतुष्टयम्। चरुचतुष्टयम् । दधिपृषदाज्य पात्रम्। मंथन चतुष्टयम् । क्षुरचतुष्टयं वा शूर्पादानादौ आह्वनीयस्योद्धरणं यज्ञोपवीतिन इति युक्त युक्तं चेति चिंतनीयम्। पितृ कर्माङ्गत्वात्।[4] उपस्थानस्य दैवताद्धरणस्य चतदंगत्वात्तथास्यादिति करणां ते चर्चकः । एक कपाले तप्यस्येति । इक्षणां तं पौष्ण विवेकः । वरुणप्रघासवत्पृषदाज्यं मथनं प्रयाजानुयाजश्चेति । दक्षिणायां गौरसीति त्रीणि समिष्ट यजूं षि । पितृपते सर्व मुपांशु[5] तत्र प्राचीना वीतिनः नीविकरणं निवान्यादोहनम् । यज्ञोपवीतिन आह्वनीयस्योद्धरणं।प्राचीनावीतिन एव दक्षिणाग्नेः अग्न्यन्वाधानादिशं वेतिविशेषः । आह्वनीयकार्य दक्षिणाग्नौ[6]। दक्षिणादि कृयाचीवत् । ब्रह्मवरणमाह्वनीयपूर्वेण। आहृयोदकदानं च । ब्रह्म यजमानयो पुरस्ताद्प्रवेशनं पश्चाद्वा । पयस क्षृपणयनम्। पात्रा सादने भर्जनसप्तमानि कपालानि । उपसर्जनीपात्रद्वयम् । नयोक्तं सन्नहना वछादनानि विधृत्यौ च । या अस्तिस्रः । गोकर्णाकृति शृता वदानम्। हविर्यवाः । पक्षिप्राशित्रात्र हरणे। नांतर्द्धानं कयादि। उपकल्पनीये षिवद्मावर्हिः। एकशलाकाउद्पात्रम्। योत्कं च । गार्हपत्यमपरेणग्रहणम् । दक्षिणा मुखस्या सीनस्यैव । पितृणामसि बर्हिमं समितिसस्निनतमंशयितमं जुष्टत मं पितृहूतमविशेषः

---

1- उत्तरवेद्याग्निप्रणयनमन्थ्यकपृषदान्य च वरूण प्रघासवत् । - का०श्रौ० 5/7/11.

2- वैश्व कर्मण एक कपालः । - तदेव, 5/7/10.

3- ऋषभो दक्षिणा ।- तदेव, 5/7/12.

4- पितृयज्ञ उपांशु चरणम् । - तदेव, 5/8/1.

5- तत्रैव

6- धानामर्जन दक्षिणाग्नौ । - तदेव, 5/8/16, 5/8/20.

उद्गिने यज्ञपतिं देवपितृ युवमिति। वज्र प्रोक्षणोदेन्याय पित्र्याय कर्मणेऽनुंधध्वं देवपितृ यध्यायाइति । वज्राज्यस्थालीकुशमुष्टिर्वै दितृणाभिमृ वजुह्वपभृत्परिधय आ"यं होतृ पदनमिति देव्यापवित्र्याय ध्रुवादेव्याय। शेषं पिच्या। हविरा-वपनेपितृ वीत्यै त्वागृह्णामीति तिष्ठतामुसल योजनेत इदं पितृभ्य इति। तुर्वाविप्रमोकाति चर्चक: । कलीकरणेपितृभ्य: शुंधध्वमिति। दाक्षिण्यर्धकपालोपधानम्। अंगाराहरणेश्वा पितृवहं वह: भर्जनकं दक्षिणाग्नौ।[1]

तत्र नांगारायोहनम्। नाहरणम्। नाभ्यूहनं च। भर्जनोपधानं प्रथम कपालमं त्रेण। सव्याङ्गुन्यकरणम् । अंगार निधानं मंत्रेण । क्षरोप सर्जन्यधिश्रयणम्। दक्षिणग्नौ। पेषणेभ्यान्यमाधिनुहि पितृनिति। वेदवंधने वेदोसि येन त्वं देववेद देवपितृभ्यो वेदोभवस्ते न मह्यं वेदोभूया इति । गार्हपत्ये पुरोडाशश्रयणम् । दक्षिणाग्नौ नाधानम्* गार्हपत्या देव पर्यग्निकरणम् । पुरोडाश अभिमशयधानो-द्वासनम् । पात्र्यामोप्याभिमन्त्रणम्। सकृत्फली कृत्यनिर्देश: । अर्द्रानां पेषणं पिष्टधाना नामवेक्षणं उपसर्जनी बुलंपय इति। एक शलाकया अपसव्यं संयवनम् । पुरोडाशस्यभिवासनादि। आस्योदकदानां तेपरिवृत्तकरणम् । तन्मध्ये वेदिकर-णमुत्करकरणांतम्। वेदिमध्ये दक्षिणाग्निस्थापनम्।[2] प्रणीतानुहरणम् । ब्रह्म यजमानयोश्चानुगमनम् । ततोन्वाहार्यधिश्रयणम् । तत: स्फ्यादानादि। तत्र आदे दध्वरकृतं देवपितृभ्य इति । स्तं व यजुर्हरणे पृथिवी देवपितृ यजन्योबध्या इति अपाररूं पृथिव्येदेवपितृयजनाद्वध्यासमिति। पत्नी शब्दवर्जप्रोक्षणी प्रैष: । नपत्न्यत्रेति। अपरेणप्रोक्षणीनिधानम् । उत्पवनम्। प्रत्युत्पन:। अन्यतरा वेक्षणम्। यज्ञोपवीतिन आज्य ग्रहणम् । न प्रस्तरग्रहणम् । यूनं विहृयंस्य वर्हिश्च सहाग्रेगृ-हीत्वा त्रिंस्तृणान्नग्निं परिगच्छति उत्तरापरकोणादारभ्यस्वाहा स्थादेवोभ्य पितृभ्य इति विशेष: । सकृन्मन्त्र: । प्रस्तरमात्रंधारयित्वा तावदेव प्रति परिगमनम्। तत आहवनीय कल्पनादि। आवृत्य प्रस्तरस्तणं विधृतिवर्जस्वासस्थ-देवपितृभ्य इति विशेष: । इध्मप्रैषादि आज्यभागो यावत् यज्ञोपवीतिन:

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 5/8/16, 5/8/20.

2- तदेव, 5/8/16, 5/8/20.

सर्वेप्युरस्ताद्उपवेशनं पक्षे ब्रह्म यजमानयोः पश्चाद्उपवेशनम्। पुरस्तादग्नीधः। अववाधने तृतीयेन वज्रेणेति। होतृवरणो आश्रावणम्। प्रत्याश्रावणं सीदहोतदिति। अपवर्हिषः प्रयाजाः नुयाजाश्च। चतुर्थी समानयनम्। हविः प्रवरणेप्राचीनाविति-करणम्। प्रत्याश्रावणं सीदहोतरिति। अपवर्हिषः ब्रह्मयजनानयोरग्नीधश्च प्रतिपरिगमनं पार्वणिकम्। सोम ववागेपुरोडाश मध्यात्सकृद्गृहीत्वाधानानां मंथस्य सहावदानम्। दिरभिघारणमनति कृमणं च। एवं वर्हिषद्भ्यउत्तरतोधा-नामंथपुरोडाशानाम्। अग्निष्वात्तेभ्यो दक्षिणतो मंथपुरोडाशधानानाम्। अग्नये कव्यवाहनायस्विष्टकृते पूर्वार्द्धात्पुरोडाशादि। नक्षताभ्यांगः। ॐ स्वधेत्यस्तु-धूति पत्याश्रुतेप्रधानकव्यवाहनेषु। होतुः स्वधानम इति वषट्वास्थाने।[1] संचरा-भ्युक्षणां ते मथोपह्वः। अवघ्रायनिधानम्। पविपत्र प्रतिपत्तिः। दक्षिणादानम्। प्राशित्रादि यथोक्तं वा। इडायामवघ्राणंवा भागपरिहरणम्। दक्षिणा विः सकाशपरां सेपिता मध्स्या दक्षिणपूर्वा से प्रपिता नामहस्थैवम्। सर्वदानम्। वेदि परिषेकः। यजमानस्य वा। उत्तरा परश्रोणेरा रभ्य तत्रपित्रवने जनम्। इतर-थावृत्तिः। एवं दक्षिणात्सव्ये समवदाय यथाऽवनिक्तं पिंडदानम्। उत्तरपूर्व-श्रोण्यां याणीनिमार्जनम्। यज्ञोपवीतिनो निष्क्रम्य आहवनीयोपस्थानम्। गार्हपत्यस्य च। प्राचीना वीतिनः प्रविश्य दानुर्जपः। पूर्ववदवने जनम्। प्रादक्षिण्येन परिषेकः। नीविविरसूंसनए। अंजुलि करणम्। उल्मुक समासादि प्राक् सुग्व्यूहनायज्ञोपवीतिनः। पार्वणिकश्च प्रतिविपर्यासः। प्रस्तरस्य आदानम्। अनुप्रहरेत्त्युक्तेनानुप्रहरणं तूष्णीं आत्मालंभः। प्रहरण कालेपरिध्यु पस्पर्शनमेवात्र। संस्रवाहुतिः। धुरिनिधानम्। पिष्टलोधा हुतिः। वेदविमो क बंधन वद्रहः। आवेदेस्तरणम्। वर्हिहोमः परिधिप्रक्षेपः। प्रणीताविमोकः। राक्षसभागः। पत्नीभागा वेक्षणम्। व्रतविसर्गः। भागं भाग,शनं वा। हवि रूच्छिष्ट प्रतिपतिः। उदकोपस्पर्शनम्। त्रैयंबकेउदीची प्राचीवत तूष्णीमित्तिकर्त-व्यता[2] दक्षिणाग्न्युद्धरणम्। तत्राग्न्यन्वाधानम्। तमे व पुरस्ताद्ब्रह्मण

---

1- अवष्टकारान्। - का०श्रौ० 5/10/7.

2- उदङ्•मुखः सर्वम्। - तदेव, 5/10/4.

उपवेशनम्। पश्चात्प्रणीता प्रणयन। तस्यै व परिस्तरणम् । पात्रासादनम्।
पुरोडाश संख्ययाकपालानि। दशगणे शूर्पाग्नि होत्र हवण्याद्वैशेषो दशगणः । अर्घ
वन्धनः पात्री वा । पवित्र छेदनानि पवित्रे। उपवेषः । आज्यस्थाल्युपसर्जनीपात्रम्। कुशमुष्टि रन्वाहार्यपात्रम् । वेदितृणमाभ्रः । योक्तं स्रुवः । ध्रुवा सन्न
हनावछादनानि। परिध्योविधृत्त्यौ। आज्यं पुरोडाशपात्र्येका। जुहूपभृत्।
पलाशपात्रम्। शृतावदानम्। कृष धमन्वाहार्य तंडुलाः। पूर्णपात्रं कर्मापवर्गाचिति
उपकल्पनीयानि। बर्हिः । इध्म काष्ठद्वयम् । मूलक बर्हिः । वेणुयष्टिः । कुपोवा
कुमार्थः।[1] क्षुरचतुष्टयं वा। शूर्पादीनादि सादनां तेविशेषः । गार्हपत्य मपरेण
उदङ्मुखस्य ग्रहणम् । पुजा संख्यया एकाधिका नामेकपुजद्विपुज अपुजानांचत्वारिचतुर्मुष्टि कानि। प्रतिपुरोडाश मेकैकं कपाल मुत्तरार्द्धे गार्हपत्यस्य कपालो
पधानाद्यास्थां तें। अन्वा हार्याधिश्रयणम् । चतुष्पथे वेदि[2] मानादि आहवनीयमपरेण जुह्वानं तरु पलाशपत्र सम्मार्गः । ध्रुवायामेवचतुर्गृहीत। वर्हिस्तरणांते
दक्षिणाग्न्युल्मुकमादाय चतुष्पथे आहवनीय कल्पनम्।[3] वेद्यानोल्मुकेमा दूहनं वेद्या
सादने। जुह्वनं तरं ददेश पलाशपत्रस्य च । पक्षप्राणादानं होतृ षदन समिध्येनी
प्रैषाभावः । आहवनीयो यवाजनम् । पूर्वाधारः । एक गृहीतेनेंद्राय स्वाहेति
तिष्ठत एवो त्तराधारः न होता न प्रयाजा न स्विष्ट कृन्नप्राशित्रेडाभागानुयाजपत्नी संयाज दक्षिणाग्नि होमाः।[4]

अग्नये स्वाहा सोमाय स्वाहेत्युपविष्टस्याज्यभागो। प्रधान यागे
पलाशपत्र[5]मुपस्तीर्य अतिरिक्त वार्ज सकृत्सकृद वदानव्यहणम्। प्राणदानपक्षे
मिश्रणम् । एषत इति होमः । अतिरिक्तस्या स्रुक्तेरोय किरणमेषत[6] इति ।

---

1- कुमार्थश्चोत्तरेणोभ्यत्र मत्तिकामाभकामा वा । - का०श्रौ० 5/10/17.

2-3- का०श्रौ० 5/10/9.

4- तदेव

5- तदेव,

6- तदेव, 5/10/13.

एत्यावरूद्रमदीमहीतिजय:।[1] ततः पवित्र प्रति पत्यादिविश्वेभ्योदेवेभ्य इति तंत्रवाहुतिः । वाताय स्वाहेति समिष्टयजुः । गार्हपत्योपस्थानाभावः। समिद्वतेग्नि परिगमनं यथोक्तम् । अंते इतरथावृत्तिः । यजमानस्य पुरोडाशो क्षेपणम् । प्रति ग्रहणम् । अशक्तात्तु पस्पर्शनम्। मृतयोः करणम् । वेणुयष्ट्यां कुपेवासंज नांस्था एवादीनामन्यतमस्मिन्नासं जनम् । निश्चलीकरणम् । अनपेक्षमा गमनम् ।उदकोपस्पर्शनं वपनं वा यथोक्तम् । समारोत्पयप्रवेशनम्।[2]

अनंतरं शुना सीरीयम्।[3] उत्तरेष वा शुक्लेषु। फाल्गुना वतार प्रतिपदि वा । तत्राग्न्य न्वाधानादौ विशेष। शाखा छेदनानि अपाकरणां नतंवायेवभागमिति विशेषः । उपगूहन प्रह्मवरणं पात्रा सादने कपालानिवहूनि। पक्षेशाखोपवेषः । पात्र्योवध्व: । शृतावदानानंतरं पक्षे दोहन चतुष्टयम् । दक्षिणासी रंबज्योगंर्नुष्टारौवा। सौर्यस्यश्चेः श्वेतः ।[4] तदभावेगोः।उपकल्पनीयानि। इध्मावर्हिश्चतुष्टयं चरुत्रयं चतुष्टयं वा। यवागपक्षेवायवेच ग्रहणम् । कणाते चर्चक: । सौर्य एक कपालेतप्यरचेति विशेषः ।[5] चरुधर्माश्चोक्ताः। पयः पक्षेशुनासीर यागोतर काल[6]मुषादानाधिश्रयणपरिक्षालन वर्ज्यो दोहः। प्राण्दानम्। सादनम्। आलम्भः ततो यागः । शेषकार्यानुष्ठा न विशेष उक्तः। पर्यासिसर्वहुतः सौर्यः । पक्षे समस्य मार्जनम्। दक्षिणा या व्राह्मण। इदं वः सीराश्वं प्रतिगृह्यताम् । इदं वोगोश्वं प्रतिगृह्यताम् । एते वोगोश्वाः प्रति गृह्यतामिति वा । सीरगवं सीराश्वं गवागावो वा। आगामिन्यांपौर्णमास्यामाग्नेयीयष्टिः पशुरग्नीषोमीयः । सोमो वा । आविस्तपक्षे फाल्गुन

---

1- अगम्या वरूद्रमदीमहीति जयन्ति । - का०श्रौ० 5/10/14.

2- का०श्रौ०सू० 5/10.

3- शुनासीरीयमतः । - तदेव, 5/11/1.

4- श्वेताश्वसौर्यस्याभावेगौ। - तदेव, 5/11/14.

5- सौर्य एक कपालः । - तदेव, 5/11/11.

6- फाल्गुन्युपसथेशुनासीरीयम् । - तदेव, 5/11/17, 5/11/15.

शुक्ल चतुर्दश्यां शुनासीरियं प्रात वैश्व देवश्।[1] ततः प्रतिपदि पौर्णमासम् । आवृत्तिपक्षे इष्टि पशु सोमानाम भावः । सपशुषु वैश्व देवे फाल्गुन्यांपौर्णमास्यां[2] श्राद्धम् । प्रहतवासः परिधानम् । समारोपः । उद्वसानम् । मंथनम् । प्राचीन प्रवणेऽग्निस्थापनम् । विहरणम् । अग्न्यन्वाधानम् । शाखा छेदनाद्यु पगूहनसं।तम्। ब्रह्मवरणम्। यूपाहुत्यादिवपामार्जनां तं पशुवत् षड्होतार हुति व्रत प्रणीताज्य भागवर्जम् । वैश्वदेवः पशुपेरोडाश[3] मन्वाग्नेयादीनानि वां भागपरिहरणां तः । पशावकृत येदिह नियोगतो मंथनम्। ततोविशसनादि। भागा वदानानियमः।[4] पाशुकेऽति पर्व दक्षिणासृग्न्यूहने विश्वेषा देवानामग्नेः । सोमस्य सवितुः सरस्वत्याः पूष्णो मरुतां स्वतवसां अथवामरुतां विश्वेषा देवानां द्यावापृथिव्योर्विश्वेषां देवानां वनस्पते रूजितिं विश्वेदेवा अग्निः सोमः सविता सरस्वतीपूषा मरुतः स्वत तवसो अथवा मरुतो विश्वेदेवा द्यावा पृथिवी विश्वे देवा वनस्पतिस्तमपनुदंत्विति । हृदयपशूनांते वपननियमः।[5]

वरुणप्रघासेषुस्वकालेकरंभपात्रं करणम्।[6] पौर्णमास्यां अहतवासः परिधानम्। समारोपः उद्वसानं मथनं विहरणम् । अग्न्यन्वाधानम्। उभयोः शाखाछेदनादि उपगूहनातम् । ब्रह्मवरणाम् । यूपाहुतिः षड्ढोताराहुतेरभावः प्रतिप्रस्थात्रर्थप्रणीताप्रणयनम्। पंचकासादनमुभयोः। उपकल्पनीयानि यथोक्तानि

---

1- प्रातर्वैश्वदेवम् । - का0श्रौ05/11/18.  2- तत्रैव

3- पुर्वेद्युर्वैश्वदेवेपाशकम् । - का0श्रौ0 5/11/20, 5/11/22.

4- का0श्रौ0 5/11/23.

5- हृदयशूलान्ते वपनम् । - तत्रैव, 5/11/26.

6- वरुणप्रघासेषु वारुणः । - तत्रैव, 5/11/27.

च पवित्रकरणादि संमर्शनांत मुभयो: । चात्वालमानादि छादनीतम् । पंच-गृहीतादि उपयमन्युपनि वपनां तमध्वर्योश्चि। पैतुदारवादेरनुष्ठानम्। अग्नि-भ्यामित्युक्ते प्रतिप्रस्थातुगार्ह पत्याकतपरेणोद्धरणम्। परिस्तरणं मध्यमवर्ज-मध्वर्यो: । प्रतिप्रस्थातुरा हवनीयस्य । पात्रासादन मध्वर्यो: पाशुकं कमपि वर्गा तं आज्यानंतरं करंभपात्र इति विशेष: । प्रतिप्रस्थातु: पात्रासादने द्गणेश माहषदुल: अर्थवति: आज्यस्थाली कुशमुष्टि: । वेदितृ णमासन्नमेव। अभ्रि: स्रुवो जुहूपभृत् ध्रुवासन्न हनावद्यादनानि। परिधय: विधृत्यो । आज्यंपूर्ण पात्रं कर्मपप वर्गा चेति। इहैव कुक्कुटा हनन मुभयत्र प्रतिप्रस्था तानव प्रयाजानिष्ट्वा आस्ते । वारूण: पशु: । वैश्वदेववद्धविषां निर्वाप: । अनुक्तं च वैश्व देववत्। साकमेधेमहाहविषा सहमाहेन्द्र: पशु: । उक्तमन्यद् वैश्वदेववत्।

शुनासीरीयेशुनासीर: पशु: पर्वादिष्वा पशु: पूर्व दक्षिणा। इति पोषणा। तत्र आग्ने दीनां च । साकमेधे क्रीडनीयां ते पशु: । पशवं तेन्वा रंभणीया वा भवति। पर्वात पक्षे साकमेधे प्राकमित्यज्ञात्पशु: । वरुणप्रघा से अंते पशुपक्षेसमारोपा भाव: । वरुणप्रघासेन प्रयुक्तत्वात्। साकमेधे च वैश्व देवषु शुनासीरयोस्तु प्रवर्तत एव समारोप: । सयाशुके वरुणप्रघासेषु दक्षिणाग्नौ व्रत ग्रहणं यथाकालम्। मित्रविंदायां मातर: श्राद्धम्।[1] अन्वारंभणीया ग्न्यन्वा-धानादौ विशेष: । अर्थवत्कपालानिपात्र्य चरवश्चोपकल्पां तेमेक्षणा निक्कणांति चर्चक:। ईक्षणांते पौष्ण विवेक: समस्यानु वाचनम्। प्रतिदैवतमविभक्तलोपेन। ता प्रैष:।[2] सहप्रक्षेप: । तदनं तरंस्थाल्या: स्रुवेणोपहोम: । दक्षिणायां गौरसीति दश गाव: सहस्रं वा।[3]चातुर्मास्यनि हानि । निगूढपशुवंधेप्रथमप्रयोगे मातर: श्राद्धम्। अग्नीयोमीय प्रकृति त्वान्नारंभणीया। तत्प्रकृति त्वं च तत्प्रकरणेधर्म विधानात् । इह चानुपदेशात्। सूत्रकारप्रस्थानाच्च अग्नीषोमीय दर्शनादिति। इहाप्युपदेशोस्तीति चेत् । नातेषां वै शिकत्वात यथाग्नीषोमीय दर्शनादिति। इहाप्युपदेशोस्तीति चेत् दार्शपौणमासिकधर्मातिदेशेपि अग्निमंथना दिविशेष धर्मोपदेशस्तद् वदित्यर्थ: । मंथनादिवत् । यूपस्य चक्रत्वं पालाशत्वं चेति ।

---

1- मित्रविन्दा श्री राष्ट्रमित्रायुष्कामस्य दशहवि: । -का०श्रौ० 5/12/1

2- प्रैषाश्च । - तत्रैव, 5/12/15.

3- दश दक्षिणा। सहस्र वा। - तदेव, 5/13/4-5.

नचनिरूढेविशसनादीनि सन्ति । तेन चनिरूढो विशनादीनि अग्नीषोमीयाद् गृही तु शक्तोति। इतरांश्चा न दर्शपौण मासाभ्याम् । आकाँक्षाया: सकृदुत्पत्ते:। तस्मा दग्नीषोमीय प्रकृतित्वमिति । तत्र च नान्वा रंभणीया। आरंभाभावात् यस्तत्रारंभ: सप्तोमस्य। अग्नीषोमीय एव प्रकृति: ।[1] सोनन्वारंभ: । तस्माद्प्रवृत्ति रन्वारंभ णीयाया: यदि तत्रारंभो नास्ति इहतदर्थस्ति अत: प्रवत्तता मिति। यथान्वा हार्योग्नीषोमीये असन्नपि तद्विकारेषु प्रवरतत इति। नैत्तदेवम्। आरंभेनि मित्ते प्रवर्तत इयमिति।[2] न चाग्नीषोमीयस्य निमित्तं कस्यां चिदवस्थायाम स्ति । अतोनंगम् । अनंगत्वाच्चविकारेन प्रवर्त्तत इति। अन्वाहार्यस्त्वग्नीषोमी यस्याऽनतिद्वारेणां गम् । सात्त्वानति रन्यैर्निवर्तितेति निवृत्ति:। यत्रनिवर्तकोनास्ति तत्र प्रवर्त्तमान:। केननिवर्ययतो। तस्माद्वैषम्य मन्वाहार्येण भाष्य कारमते सोभे कत्त्विग्वरणं केवल प्रधानार्थ दगोपकारके अतोत्रनवार्ति कमत तेसांगप्रधानार्थत्वादत्रापि समारोप: ।[3] गृहे मंथनं विहरणम्। अग्न्यन्वा धानंब्रह्मवरणम्। संस्कृत्याज्यं यूपाहुति: । आज्यशेषमादायसतक्षायूपं प्रतिगच्छति। यूपाभि मर्शनम्। अभिमंत्रणं वा प्राङ्•तष्ठत: । छेदनप्रदेशेस्तु वेणोप स्पर्शनम्। कुशतरूणां तर्हानम्। छेदनं प्रथमशकलग्रहणम्। पतत्तोभिमंत्रणम् । शोधनम्। स्थाण्वाहुति: । परिवासन। अष्टाश्रिकरणम् । ततएवस्वरुष्पादनम् । चषालकरणम् । एत्यषट्टोताराहुति: प्रणीता प्रणयनम् । पंचकासादनादि वरुण प्रघासवश्चादनं तम् । पौर्णमासिकी वेदरेका चसोपयमग्नीकस्येध्मस्याधि श्रयणम् । संस्कृत्याज्यपंचगृहीत ग्रहणम् । आज्यप्रोक्षण्यमीनामुद्यमनं प्रह्यि माण प्रैष: त्रिरुक्तायांप्रणयनम्। उतरवेदि प्रोक्षणादिनाभि न्याघारणांतम् । पैतुदार वै: परिधिभि: परिधानम् । संभारस्थापनम् । अग्निनिधानम् । उपयमन्युपनि वपनम् । प्रणीतानुहरणम् । ब्रह्मयमानयोश्चानुगमनम् । यजमान वाचं यच्छेति प्रैष: मध्यम वर्जपरिस्तरणम् । पात्रासादनं दशगणेशम्याहषट्ट पलम् । अर्थवंति चाज्यस्थालीकुशमुष्टि: । अभ्र्योक्तं सृवो जुहूस्मभृतध्रुवासन्न हना वंह्यदना नि कार्भर्यमया: परिधय: ऐक्षव्यौविधृत्यावाज्यम् ।

---

1- का०श्रौ० 5/12/1-21.

2- तत्रैव

3- गृहेषु । - तदेव 6/1/2.

होतृवदनं वपाश्रयण्यो दक्षिणाशूलम् । उखा असिवसाहोम हवनी प्राशित्र हरणे। इडापात्री अंतर्द्धान कटः पूर्णपात्रं चेति । उपकल्पनीयानि इध्मा आश्व वालप्रस्त रोपसन्नद्धं वर्हिः दधिपृषदाज्य पात्रम् । अनक्षशाखा[1] यूप चतुष्टयम् । यवाः आपः अवटकुशाः । अवटार्थीयमाज्यं यूपांजनीयं च । मैत्रा वरुणदंडः । त्रिगुणरशना। उपाकरण तृणां मंथन चतुष्टयं च पक्षे द्विगुणरशना पशुः शमितापक्षेम रिपशव्याज्यम्। पात्रेजनी। हिरण्य कशलानि षट्। शूलावभृथ-समिद्वयम् । यथोक्ताहं दक्षिणा चेति। प्रोक्षिण्यः संस्कृता एव। वाग्यमनीपात्र प्रोक्षणम् । असं चरेप्रोक्षणीनिधानम्। वाग्विसर्ग कुक्कुटाहननम्। आज्य निर्वापो-वेद बंधः । इध्ममुपसादयेति प्रैषः । तत्सादनम्। ब्रह्मानुज्ञातस्यसन्नद्धयस्यैव प्रोक्षणम् । आज्याधिश्रयणम् । पर्याग्नि करणम्। उदकोपस्पर्शनम् । खनननाद्याज्या सादन्यंते विशेषः । प्रोक्षणी प्रैषनियमः। केषांचिदिध्मवर्ज स्रुवानंतरंतद्धर्मरसैः सम्मार्गः । जुह्वनं तरं तूष्णीं वसाहोमहवनी सम्मार्गः । सम्मार्जनानां न प्रतिपत्तिः । पत्नी सन्न हनाद्यन्तराद्याज्या वेक्षणांतम् । ईक्षणां तेनानाज्य-करणम् । ततः पृषदाज्य याजनम् । आज्य ग्रहणाद्यात्मालंभनां तेविशेषः । सर्वाण्येवचतुर्गृहीतान्याज्यानि। उपभृत्समनंतरं पृषदाज्य पंचगृहीत ग्रहणम् । वर्हिस्तीत्वा प्लक्षशाखास्तरणम्।[2] अभयादानं अवटपरिलेखः।[3] उदकोपस्पर्शनम्। खनन प्रचंया सूनामुद्वपनम्। अग्रादिप्रोक्षणम्। अवटेशेषासेकः।[4] उदकोपस्पर्शनम्। वर्हिषिप्राच्युदं विचप्रास्यति उदकोय प्रथम शकलप्राशनम् । अवटहोमः[5] परिक्रमणम्। उदगुपवेशनम् । यूपां जनप्रैषः । यूपाजनचस्वालाजिनम्।[6] उभयतोमन्त्रश्च। चखाल

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अनश्रस्तम्भं वृश्चति । - का०श्रौ० 6/1/14.

2-3रे ओषधऽइति कुशतरुणं तिरस्कृत्य स्वधित इतिपाशुना प्रहरति ।-तदेव 6/1/..
वर्हिषि प्लक्षशाखा स्तृणाति । - तदेव 6/2/7.

4- देवस्यत्वे त्यभ्रिमादाय० - । - तदेव, 6/2/8
अवटेशेषमासिन्चति शुन्धन्तामिति । - तदेव, 6/2/17

5- श्रुवेणावटे जुहोति तूष्णीम् । - तदेव, 6/2/20.

6- देवस्य त्वेत्य नक्ति । - तदेव, 6/3/2.

परिमोकः।[1] सोष्णरमग्निष्ठादेशां जनं क्रमेण मंत्रे परिक्रमणाद्येवं मतं यजमानस्य वा। परिव्ययणदेशस्य संमतं संस्पर्शनम्।[2] आपव्ययणादविसर्जन। उच्छ्रीयमाणप्रैषः।[3] उच्छ्रयणं मानम्। पांसुभिः पर्यूहणम्।[4] मैत्रावरुणदंडे नसमं तंत्रिःपर्यवणम्। समं भूमिकरणम्।[5] मद्भिरूपसेचनम्। अन्वारब्धवाचनम्। चखालमीक्षणायानुवाचनम्। परिवीयमाणप्रैषः । परिव्ययणं संसृब्यान्यतरस्यामंतप्रवेशनम्। स्वर्ववगूहनम्। तृणामादायोपाकरणम् । शकलादानादि होमां त्तं मंथनम्। उपाकरण मंथनयोः सन्निनयुक्तयोर्विकल्पः। द्विगुणरशनयां तरा शृंगबंधनम्। यथादेव तंनियोगः । वृह्मानुज्ञात्तस्य पशुप्रोक्षणम्।[6] आस्योपग्रहणम्। अधास्तादुप्रोक्षणम्। सशेषम्। वृतग्रहणम्। होतृषदन करणादि प्रयाजांतविशेषः । उत्तराधारमाद्यार्यपशु समं जनम्।[7] होतृ वरणांते पुनराश्राव्य यजमानवरणम् । मैत्रावरुणायदंडप्रदानम्। प्रेष्यप्रैषा एकादशप्रयाजाः।[8] चतुर्थसप्तमदशमेषुसमानयनम्। दशांतिशासप्रैषः।[9] असिस्वरू आदायजुह्वेग्नेंजनम्। पशोर्ललाटो पस्पर्शनं[10] स्वर्ववगूहनं असिप्रदानम्। सृवतादनं शामित्र परिलेशवः । अग्निधउल्मुक दानम्।[11]

---

1- चलाषमुभयतः। - का०श्रौ० 6/3/3.

2- तत्रैव, 6/3/5.

3- उच्छ्रीयमाणायानु वाचयति । - तत्रैव, 6/3/6.

4- तत्रैव, 6/3/10.

5- तत्रैव, 6/3×12.

6- अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रक्षिति।

7- का०श्रौ० 6/4/2.

8- एकादशप्रयाजाः। - तत्रैव, 6/4/8;10.

9- दर्शेष्ट्वा प्रयाजानाह शाशमाहरेति । - तत्रैव, 4/8/11.

10- तत्रैव, 4/8/12.

11- प्रतिपद्यस्त्वा ल्मुकतावत्प्रतिपर्येति । - तदेव, 6/5/4.

अग्नीधपर्यग्नये नुवाचनम्। पर्यग्निकरणम्। उल्मुक प्राशनम् । त्रिरेवप्रतिपरिगमनं पुनरुल्मुकादानम् । उदग्गमनम्। तमनुपशु नयनं प्रतिप्रस्थातुर्वपाश्रयणीभ्यां पश्चालंभनम्।[1] प्रतिप्रस्थातु रध्वर्युणा। अध्वर्योर्यजमानेन । वेदितृणादानम् । आश्राव्यप्रैष: । यजमान वाचनं शामिग्निधानम् । निर्मथ्यता तत्रउल्मुकस्याग्निदानम्। शामित्रस्य पश्चातृण प्रासनम् ।[2] तस्मिन्नै नं निघ्नंति प्रत्यक्शिरसंवा उदक्या दंमुखसंग्रहणम्।[3] अप्वाश्यमानस्यमारणम्।[4] वष्केण वेतिविकल्प:।[5] एत्याहवनीयम्। आवृत्त्यासनम्।[6] संज्ञमनप्रैष: । संज्ञपनं यथोक्तं शमितु: ।[7] पूर्णाहुति वात्तंस्कृत्याज्य मेकगृहीतेन समित्पूर्वकापरिपशव्याहुति:।[8] संज्ञस: पशुरितिप्रैष: । सामितु: । श्येतानुमुहूर्तमित्यध्वर्यो: । संस्कृतादेवाज्याद्विनासमिधा द्वितीया परिपशव्याहुति: । नवा परिपशव्ये । वपाश्रयणीभ्यांनियो जन्धा: चत्वालेप्राशनम् । पत्न्या नयनप्रैष: । प्रतिप्रस्थातु। पान्नेजनहस्ताया: पत्न्या वाचनं नयत:[9] पशो: प्राणशोधनम्।[10] शेषेणध्वर्यु यजमानयो: शिर: प्रभृति पक्षात्पशोर्निषिकांतम् । उतान पशुकरणम्।[11] नाभ्यग्रेतृण निधानम्।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 6/5/7.

2- तदवे, 6/5/12 (शामित्रनातीयात्)

3- तस्मिन्नेव निघ्नन्ति प्रत्यक्शिरमुदकपादम् । - तदेव, 6/5/16.

4- संगृह्यमुखतमयन्त्यवाश्यमाकम् । - तदेव, 6/5/18.

5- वेष्केण वा । - तदेव, 6/5/19.

6- एत्याहवनीयमावृत्त्य सते। - तदेव, 6/5/20.

7- संज्ञपयान्वर्गकत्येव ब्रूयात् । - तदेव, 6/5/21.

8- स्वाहा देवेभ्य इति जुहोति । - तदेव, 6/5/22.

9- प्रतिप्रस्थाता पत्नीमुदानयत्याह । - तदेव, 6/5/27.

10- तदेव, 6/6/2-3.

11- तदेव, 6/6/8.

प्रज्ञातयाभि निधानम्। छेदनम् । अगस्य सव्यकरणम् । दक्षिणेन मूलस्यो भयतो जनम्। तृणप्रासनम्। उदकोपस्पर्शनम्। यजमानस्य तृणाभिष्ठानम् । उदकोपस्पर्शनम्। वपोत्स्वेदनम् । द्यौरथः पृथिवीस्थ इति वपाश्रयण्यो रादानम्। अन्वारब्धेपौर्णवनाम् । परिवासनम् । प्रतिप्रस्थानुश्चात्त्वालिवसेकः । शामित्रेप्रतपनम्। अग्नीधःशामित्रैकदेशस्यो ल्मुकस्थप्रासन माहवनीये। निर्मथ्यपक्षेनोल्मुकप्रासनम् । तृणाग्रप्रासनम् । आहवनीये उत्तरतस्तिष्ठतः प्रतपनम् । अंतरायूपाग्नीहरणम्। दक्षिणतः श्रपणंपरी त्यचात्त्वाला वसेकादि श्रपणांतम् । प्रतिप्रस्थातुर्वपा सम्बद्धाम् । वपाभिघारणम् । स्तोकायप्रैषः । वपाद्यभिघारणम् । आज्यभागोचेत ध्रुवादि । पाक्षिकोप्रैष्य प्रैषावा आज्यभागो वया प्रचारे उपस्तरणम् । हिरण्या बधानम्। वपांगृह्णतः प्रैषः । हिरण्यावधानं सकृतदभिघारणम्।[1]

आश्राव्य प्रैषः ।[2] होमः । वपाश्रयणी प्रक्षेपः ज्वालालेमार्जनम्।[3] पशुपुरोडाशेवाचस्पति प्रैषः । पात्रासादनम्। शूर्पकपालकृष्णाजिनो लूखलमुसलम्। अनः पात्रीचेदस्त्येवउपवेषः । उपसर्जनीपात्रम् । उद्धरणपात्रीशृतावदानम्। हविद्रव्य कर्मापवर्गो चेति । पात्रांतरे प्रोक्षणीय रून्नीय शूर्पाग्निहोत्र हवन्यो रादानादिकरणां तंकुदकुटाहननवर्जम्। उपधानं पेषणाद्यास्योदकमदानां तं आज्य वेदवर्जम्। एकत्वाद निर्देशः । शृतावदान। पात्री सम्मार्गः । सम्मार्जनप्रतिपत्तिः विभस्मीकरणाद्यालंभ नांतम् । अत्र चेद्यज प्रैषावाज्यभागां पुरोडाशयागे सहानुबाचनम्। स्विष्ट कदर्थ चोपभृति गृह्यते । आश्राव्य प्रैषा प्रैष एव यागः। समानीयस्विष्टकृन्तः सृग्ग्नधानम्। प्राशित्रादि दक्षिणादानांतम्। पशुः धेनुः । वरोवा। पशुविशसनम् । हृदयादीनां ग्रहणम्।[4] क्लोमादीनामिध्याश्च श्रुउवध्यावधानम्। लोहितप्रासनम्।[5] उदकोपस्पर्शनम्*। द्यौरसीति शूलादानम्।[6] अन्वारब्ध

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 6/6/1-25.
2- तदेव, 6/6/26.
3- तदेव, 6/6/27.
4- तदेव, 6/7/6.
5- तदेव, 6/7/13.
6- तदेव, 6/7/14.

अवदानप्रक्षेपः । शमित्रनुशासनप्रैषः ।[1] त्रिः प्रच्युते उपरिहृदयकरणम् । शूलस्य वा भूमौ। जुह्वा पृषदाज्य मादाय निष्क्रम्य संवादः । हृदयाभिघारणम्।[2] इतरेषां जोहवानामाज्येन। उद्वासनम्। जोहवानाप्रत्येकं प्राणदानम्। उखायाः पक्षस्थो चांतरायूपाग्नीहरणम् । जोहवानामेवप्रत्येकं वर्हिषि मन्त्रवपासादनम्।[3] जाघानाश्च।[4] एषामालंभः। जुहूपभृद्वसाहोमध्वनीप्राशित्रहरण पात्रीणामुपस्तरणम्। जुहूपभृतोर्हिरण्यावधानम्। मनोताप्रैषः । प्रतिप्रस्थातुः । प्लक्षशाखास्ववदान ग्रहणम् । जोहवानिजुह्वार्धूप भृतानामुपभृति । पुनर्हिरण्यावधानम् । प्रत्युपस्तरणंद्विरूप भृ।ति वसाग्रहणम्। द्विरभिघारणं आद्यालनं पार्श्वेन असि नावा। जोहवेभ्यः प्राशित्रग्रहरणं । वसा शेषस्येडापात्र्यामासेकः । क्रोड प्रासनं अनस्थिमतां चश्रोणि वर्जम् । जाघानी गुदयोर्निधानम् । पार्श्विकं पशु संमशनम्। अनुवाचनं। आश्राव्यप्रैष्। अर्द्धर्चांतरैवसैक देशहोमः । दैवतहोमः । प्रदक्षिणावर्तनम्। पृष दाज्यं गृह्णतो वनस्पतये नुवाचनम्। प्रैषोयागः । र्धूपभृतानिसमानय तस्विष्ट कृतोनुवाचनम्। प्रैषोयागः । दिग्व्याघारणं अकृतं चेत्पश संमर्शनम्। सुग्निधानम्। संचराभ्युक्षणम् । प्राशित्र समर्पणम्। इडाप्रदानम् । उपहूता यां वनिष्ठुमग्नीधे ददाति। क्लोमं वृह्मणो प्लीहं यजमानाय १ पुरीत मध्वर्यवे । अध्यूघ्नीहोत्रे। गृहीतानि चेद् । अवांतरेडा वा अध्यूघ्नीमा र्जनादौ विशेषः । अग्नीदौपयजानं गारानाहर। उपयष्टरूपसीद । ब्रह्मन प्रस्थास्य। मीति प्रैषः । अग्नीधः शामित्रा दंगाराहरणम् । वेदिश्रोण्यां निधानम् । एकादशानुयाजाः । प्रत्यनुयाजं प्रतिप्रस्थातुर्मुदप्रक्षेदस्यां गारेषु होमः । अंते मुखोपस्पर्शनम् । अध्वर्योः स्वरूहोमः । स्रुग्व्यूहनम् । सूक्तवाकप्रैषः प्रेष्येति जाघन्या पत्नी संयाजनम्। पत्नीयाग्छेत्तानाया अवदानम् । इडायां च । परिवर्त्याग्नये गृहपतयेऽग्नीधे-

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 6/7/19; 6/8/1.

2- संतेमन इति हृदयाभिघार्य सर्वम् । - तदेव, 6/8/6.

3- तदेव, 6/8/7-8.

4- तदेव 6/8/14, 20.

पिभागग्रहरणम् । नाख्याहुतिः । नशंयंतां दक्षिणाग्नि होमांतमस्तमिते। समिष्ट-यजूंषि त्रीणि।

वर्हिहोमांते शूलावभृथः । अव तीर्थ शुष्कार्द्र संधौ हृदयशूलो पगूहनम्।[1] अभिमंत्रणं वा सर्वेषाम् । आहवनीये समिदाधानम् । पत्न्यागार्हपत्ये। ततः प्रणीता विमोकः । आहवनीयोपस्थानां तेवाशूलाव भृथः । वृतविसर्गा ते अपराहवनीये चतुर्गृहीं तेन होमः । सर्वहोमेषुपूर्णाहुति वदाज्य संस्कारः । ग्रहणं समिदाधानम्। होमः । यथाशक्ति दानमध्वर्योरेव । तत्रैवसमारोपंकृत्व-ग्निमथ्या हुतिः । ततोभागप्राशनादि । अपरे विहारेएवाग्नि होत्रहोमः।[2] इति पशुबंधः समाप्तः ।

---

1- बर्हिर्हुत्वापोगच्छन्ति हृदयशूलमादाय । -

-का०श्री० 6/10/1.

2- तदेव, 6/10/1-37.

ज्योतिष्टोमे प्रथमप्रयोगे मातरः श्राद्धम्। द्विपुरुषाऽसोमपीथिनः[1] पूर्वस्मिन् यजनीये प्रणीतादि दंड कोच्चारित वर्ज ऐन्द्राग्नः पशुः । अन्वाहार्यदक्षिणा । भागा वदाननियमः । खादिरोयूपः । नश्येतान्नुमुहूर्तमिति प्रैषः । सकृत्त्वग्वरणम्।[2] अर्धः । अर्धपशवः । अविभ्रंशिदेशे देव यजन जोषणम् । विमितकरणम्।[3] परिवृत्तकरणम्। समारोपः । उदवसानम् । शालास्तंभग्रहणम्। संवत्सरं चातुष्प्राश्यपक्षे लौकिकाग्निः सोमनिधानं वा।[4] मंथनं गतश्रीपक्षे प्रत्यक्षं। एवाग्नयः।[5] जातोन समारोपः । सर्वार्थसाधारणाद्। सोमाधानं चेत् द्विपुरुषसोमपीथिना[6] ज्योतिष्टोम प्रारंभे एवाऽधानम्। विहरणम्। कृत्वार्थापदेशः । अस्मिन्नवसरे यूप हुति केचि दिच्छन्ति । तद्युक्तम् । नायंप्राक्शब्दोदीक्षा विषयःकिं तर्हि यूपविषयः । यूपं वृक्षन्वैप्प्लव्यर्चाजुहोतीतिश्रुतेः । एकादीक्षापक्षे दंडोत्क्रमणांते यूपाहुतिः । सोमापान्नोपहारः इष्टाशनं वा। अप्सुदीक्षा।[7] तत्रोदकुं भस्थापनम्। उदपात्र स्थापनम्। उत्तर परिवृते उपतिष्ठति नापिते । नखनिकं तनम्। गोदानं वितारणम् । उंदनं कुशतरुणंदानम्।

क्षुरेणाभिनिधानम्।[8] छेदनम्। उदपात्रेप्रासनम्। एवं तूष्णीमुत्तरम्। नापिताय क्षुरप्रदानम्।[9] तेन केशश्मश्रु वपनम्। स्नानम्। उत्तरपूर्वार्द्धे उत्क्रमणम्।

---

1- ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषासोमपीथिन। -का०श्रौ० 7/1/6.

2- का०श्रौ० 7/1/7

3- उद्धतौषधिभूले ऽपरेऽन्ते विमितं कुर्वन्ति। - तदेव, 7/1/17.

4- तदेव, 7/1/28

5- तदेव,

6- तदेव, 7/16.

7- तदेव, 7/1/30

8-शालायां राजानंनिदधात्याहतश्चेद् । - तदेव, 7/2/1.

9- तदेव, 7/2/6-12.

प्रतिप्रस्थातुः । पक्षेक्षौम शोधनप्रैषः । शोधनम्। अभ्युक्षणं वा। तत्रनप्रैषः । अमौधोत्तस्य वा परिधानम् । विचित्तकेशताप्रसारितद शाता च सर्वेषाम् । समाचार परि प्राह्यमुत्तरं च । एवमपराभिन्परिवृतेन खनिकृंत्तनादिप्रपादनांतप्रतिप्रस्थाता पत्नीं तूष्णीं[1] वपनपक्षे वितारणादिप्रपादनांतम् ।

दीक्षणीयामग्न्यन्वाधानादौ विशेषः । ब्रह्मवरणाभावः सर्वत्र। दक्षिणायाश्च। वाचस्पतिये अन्य वैष्ण वस्यैकादश कपालानि।[2] चरूपक्षेचरो रूपकल्पनम्।[3] कर्णांतेच निर्देशः । विदयोक्त विमोकांति शालां पूर्वेण कुशास्तरणम् । तत्रास्थितस्य न वनीतेनात्यंजनम्। आत्र्यंजनम्। त्रैकुकुदां जनेन।[4] तदभावे न्येन । कुशपवित्रैः पावनम्। वाचनम्। अंगुल्यं चनम्। मुष्टिकरणम्। स्वाहित्युकाग्यगमनम् । अंगुष्ठयोस्तसहितयोश्चोरूत्स र्गः । प्रवेशनमाहवनीय मपरेण तूष्णीं अभ्यंजनाद्येवम् । प्रतिप्रस्थातापत्नींगार्ह पत्यमपरेण वा प्रवेशन। कृदगभणहोमः । दीक्षणीया शेष समाप्तिः।[5] आहवनीयं दक्षिणेन कृष्णाजिनास्तरणम् । यजमानस्य पश्चादासनं शुक्लकृष्ण संधरोलंभनम् । दक्षिणा जानुनारोहणम् । तेनासनम् । मेखला बंधनम् । नीविकरणम् । शिरः प्रार्णवनम्। कृष्णविषाणा बंधनं तयाभुव उपयुपस्पर्शनम् । भूमावुल्लेखनम् । दंडप्रदानम् । उच्छ्रपणम्। अर्थतो मोचनं दक्षिणतः एवं युगपत्प्रतिप्रस्था ता पत्नी तूष्णी मेखलाद्युल्लेखनां तं कृष्णाजिनादि चेददंडां तं मेखलानं तरं पक्षेयो त्रेण पत्नी सन्नहनम्।[6] शिरसिजालं तृपयर्यायमेकपर्यायं वा । पृथुमुखो यज्ञिय वृक्ष शंकुः कंडूयनाथम्।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 7/2/18.

2- प्रपाद्याग्नावैष्णव एकादशकपालः । - तदेव, 7/2/23.

3- आदित्येभ्योवाचरुः । - तदेव, 7/2/24 .

4- "वृत्रस्ये" त्यक्षावकछित्रैककुदामडानेन । - तदेव, 7/2/31.

5- तदेव, 7/2/38 .

6- एवं प्रतिप्रस्थाता पत्नीमभ्यम्डानादितुष्णीम् । - तदेव, 7/3/11.

हवामुष्टिकरण वाग्यमने । प्रतिप्रस्थातुद वादनप्रैषः । एकदीक्षापक्षे उदा-दनप्रैषम् । ते यूपाहुतिः । यूप चतुष्टयस्याहरणम् । यूपां ते वा अग्निं मथित्वा यूपाहुतिं जुहोति । संस्कारस्तुगार्हपत्यादेव । दीक्षात्रित्वपक्षे-द्वादशदीक्षापक्षे च यस्मिन्नेवाहनीछतितस्मिन्नहनि व्रतकरणां ते यूपाहुतिः । आस्तमयाद्वाग्यमनम् । अस्तमिते वाग्विसर्ग प्रैषः । व्रतकरणे प्रैषोयजमानस्य। व्रतकरणप्रैष प्रैषार्ण्य योशनं तर्पन्या पादपं कृमः । वाग्विसर्गप्रैषप्रैषार्थयो-र्व्यवधानं तु श्रौतं गांधुक्ष्वे ति गावो धुक्ष्वे ति व्रतकरणमध्वर्योः।

वाग्विसर्जनं यजमानस्य व्रतदुग्दोहनम् ।[1] दीक्षिततस्यगार्हपत्त्येधि-श्रयणम्।[2] पत्नीसवतस्य दक्षिणाग्नौ। क्षत्रियस्य यवागूः । वैश्यस्यामिक्षा। तदश्रुतयोश्चोपादानमितितद घोषणा । मेहतः कृष्णविषाणयो लोष्टस्या-दानम् । मेहनं स्मृति शुद्धस्य लोष्टमोचनम् । स्वपत्तो मंत्रवचनम्। अपररोत्रे व्रतप्रदानम्। मंत्रपूर्वकमानुदिते वाग्बंध प्रैषः । उदितेवाग्विसर्ग प्रैषः । व्रत-कारण प्रैषः । व्रतकरणम् । व्रतकरण प्रैष प्रैषार्थ योदानं तर्पन्यायादयंकृमः । वाग्विसर्गप्रैष प्रैषार्थ योर्व्यवधानंतु श्रोतम् । वाग्विसर्जनम्।[3] एवं यथोक्तै-र्यम नियमै रेकादीक्षात्तिस्रो दीक्षा द्वादशापारिमितावादीक्षण[4] प्रथमायामुप-सदित्रिस्तनमेकस्तनं वाव्रतकरणम् । प्रायणी पापां वाचस्पति प्रैषादौविशेषः । आहवनीयस्येव परिस्तरणं अदित्त्यै चरूः । कपालोपवेषोद्धरणपात्री दक्षिणां तद्वान कटपूर्णपात्र कमपि वर्गाभावः । उपकल्पनीयेषु चरूमेक्षणे अधिके। आज्य-भागां ते ध्रुवाया आप्यायतश्चतुर्गृहीतेन पथ्यास्वस्त्यादियागः । ततोऽ-दिति यागः । पथ्यास्वस्त्यादिपूर्वकं व्यूहनम्। शंयंता प्रायणीया परिधि

---

1- व्रतदुघे दोहयति । - का०श्रौ० 7/4/19.

2- दीक्षितस्य गार्हपत्य श्रपणं दक्षिणाग्नौ पत्न्याः । - तदेव, 7/4/24.

3- आस्तमया द्वाचं यच्छति । - तदेव 7/4/13-18.

4- द्वादशदीक्षा अपरिमिता वा । - 7/1/24.

प्रक्षेप:।[1] संस्रवाहुतिः । धुरिनिधानम् । वेदविमोकः । पक्षे प्रोक्तव्य च। आवेदेः स्मरणांते । उ षरप्रदेशेप्रतिप्रस्थातुर्यथोक्ते चर्मणि सोम निवपनम् । दक्षिणत ब्राह्मणा दंसिन उपवेशनम् । पुरस्तादुद कुंभस्थस्थापनम्। सोम-विक्रयिणो विचयनम्।[2] शालाद्वारापिधानम् । ध्रौवस्य जुह्वांचतुर्विध ग्रहणम्। वर्हिस्तृणे नहिरण्यं वध्वावधानम् ।[3] जुरसीतिहोमः । हिरण्योद्धरणम् । वेदां तृणनिधानम् । स्तत्रेणहि रणस्य बंधनम् । पक्षेवर्हि होमः । प्रणीताविमोकः । राक्षस भागः । भागावेक्षणम्। भागप्राशनम्। व्रतग्रहणाभावः सवत्र चरूमेक्षण विसर्गा वर्हिषांनिधानम्। सलेपश्चक्रः । प्रमृष्टं भेक्षणम् । चरूप्रक्षालन पक्षे स्वकाले वर्हिषः प्रहरणम् । अंतेमेक्षणस्य च पूर्णाहुति वदाज्यं संस्कृत्य चतुर्गृहीतग्रहणम् । अन्वा रंभप्रैषः । अन्वारंभणम् । शालाद्वारायावरणम् । निष्क्रमणम् । निष्क्रमणम्। द्वारंदक्षिणेन अरगु वद्धायाः सोमक्रयण्याः स्थापनम् । तदभिमंत्रणम् । उदग्नीय-मानायां अनुगमनम् । प्रतिप्रस्थातुश्च । उभयो मंत्रवचनम्। षद् पदान्यतिक्रम्य-सप्तमं पर्युपवेशनम्।[4] तत्रहिरण्या निधानम्। होमः।[5] स्फ्योनपदपरिलेखः । हिरण्योद्धरणम् । स्थाल्यां पदनिधानम् । पदे उदका सेकः । यजमानाय पदसमर्पणम् । यजमानस्यग्रहणम् । अध्वर्योरात्मालंभनम्। उदकोपस्पर्शनं पत्न्याः पदपांशु समर्पणमध्वर्योः । नेष्टुः पत्नी वाचनम्। सोमक्रयण्या समीक्ष्यमाणाया वाचनम्।[6] पाणिप्रक्षालनम्। हिरण्य बंधनम् । इह्वासोमनि वपनं सोमोपन

---

1- दीक्षान्ते प्रायणीयमदित्यै चरूं निर्वपति । - का०श्रौ० 7/5/12

2- का०श्रौ० 7/6/10-26.

3- हिरण्यस्मिन्निधायाऽभिजुहोत त्यादित्यात्वे"ति । - तदेव, 7/6/16.

4- षटपदान्यतीत्य सप्तमपर्युपविशन्ति । - तदेव, 7/6/15.

5- तदेव, 7/F6/16.

6- तदेव, 7/7/1.

हस्याध्वर्युकर्तृकाहरणपक्षेविरोधात्प्रतिप्रस्थातृकर्तृकप्रैषव्यासो प्रेष्यति चेति च शब्दाध्वर्युः क्वप्रेष्यतिनप्रतिप्रस्थातेत्यभिप्रेत्याहप्रतिप्रस्थातुरिति। तदेतदनु-पपन्नम्। अदृष्टप्रसंगात। तस्माद्ध्वर्युकर्तृकसोमोनहनाहरणपक्षेऽप्रेषित एवाध्व-र्युराहरति न प्रतिप्रस्थाता प्रेष्य तीत्यभिप्रेत्याहः प्रतिप्रस्थातुरिति ।
प्रतिप्रस्थातुः सोमोपनहनप्रैषाभावः । सोमोप नहनादीनामाहरणम् । अध्व-र्योर्यजमानस्य वा सोमोपनहनहरणम् । सोमपर्या णहनोष्णीषयोर्हरणं प्रति-प्रस्थातुः। गच्छते। वाचनम्। प्राङ्•पविश्यसोमालंभ नं नविचितोत्यतः ।
तृणकाष्ठापासनं वा सोमोपनहनास्तरणम् ।[2]तत्रसोममानम् ।[3] संगृह्यतांनुष्णीषेण बंधनम्।[4] मध्येंगुल्यां विवरणम् । विक्रयिणेसमर्प्यणम्।[5] सोम विक्रयिनक् यस्ते सोमोराजा इति प्रैषः क्रप्य इति प्रतिप्रैषः।[6] तं वैत इत्यध्वर्युः । क्रीणीहीति सोमविक्रयी। कलयेत्यध्वर्युः । भूयोवास्यादेवाहरणंभिन्नहरणसम्प्रदायतः ।
प्रैषा आहरणार्थास्युः कृत्वर्थ पुरुषं प्रतिहरणं व्याकृतं भाष्येषु ततेरादान मित्यतः।
प्रतिप्रस्थातुरित्यादि कथमत्रो पपद्यते । संप्रदाये द्वादशाहे सोमोपन हनाहरणं यजमान कर्तृकं चेत्तगृहपतेः दानम्। अनाजंभनप्रैषः।[7] आलम्भवाचनं सव्येना जां प्रयक्षतः दक्षिणेन सोमस्यहरणम् । यजमानस्थानवादीक्षितोरौदक्षिणे सोमनिधानम् ।
स्वानभ्राजेति यज मानस्य जपः।[8] शिरसो पोर्णवनम् । ... हिरण्यऽसहसाक्षिद्य

---

1- शोभनं सोमोपनहनम्। -का०श्रौ० 7/7/3.

2- सोमोपनहनद्विगुणं चतुर्गुणं वास्तृणाति प्राग्दशमुदग्वा। - तदेव, 7/7/9.

3- का०श्रौ० 7/7/10; सर्वाभिः प्रथमम् । - तदेव, 7/7/11.

4- अन्तान्तसङ्•गृह्योष्णीषेव बध्नाति "प्रजाभ्यस्त्वे" ति । - तदेव, 7/8/17.

5- तं विक्रयिणे प्रयच्छति - का० श्रौ० 7/8/19

6- क्र यय इत्याह सोमविक्रयी । " तदेव, 7/8/3.

7- अजां प्रत्यङ्•मुखी मालभ्य वाचयति " तपसस्तनू" रिति । - तदेव, 7/8/19.

8- "स्वान भ्राते"ति तिजपति सोम विक्रयिणमीक्षमाणः । - तदेव, 7/8/22.

पृषता वरत्रा कांडिना हंतिवर ····· माग्नइति वाचनम्। उच्छान।
शिरसिसोमं कृत्वा[1] तद्वायिपाणिं अन: प्रतिगमनं यथोक्तम् । वाचनादि
याजमान। अनसि कृष्णाजिनास्तरणम् । तत्र सोमनिधानम् । सोममालभ-
स्वेतिप्रैष: । आलब्धवाचनम् । सोमपर्याण हनेनपरितवनम्। पुरस्तात्कृष्णा-
जिना संजनम्। एकपक्षग्रीवा अवकृत्या संजनम् । अनड्वाजनम् । सुब्रह्मणस्य-
प्राजनम् । पश्चात्परिगमनम् । अपानं व ग्रहणम् । सोमायक्रीतायानुवाचनम् ।
पर्युह्यमाणायेतिवा । दीक्षितस्य सोमालंभनम् । त्रिरूक्तायां प्रगमनम्। दक्षिणा-
वर्तनम् । शालां गच्छतो भद्रोम इति वाचनम्।[2] सुब्रह्मण्याह्वानम्।

शालां पूर्वेषा प्रतिप्रस्थाता पशुमादायतिष्ठति । आह्वनीयोल्मुक-
माहृत्यैके।[3] पश्चालंभनप्रैष: । आलब्धवाचनम्। चरति पशोर्वाचनमात्रम् ।
शालासमीपे अन: संस्थानम् । उपस्तंभनम् । शम्योद्धरणम् । आसंधाहरणं चतु-
र्णामपि।[4] तदभिमर्शन। कृष्णाजिना स्तरणम् । तत्र सोमनिधानं दीक्षितस्य
संचरेणशाला प्रवेशनम्।[5] वाचनम्। आह्वनीयं दक्षिणे नस्थापनम्। उदपात्रीयति
नयनं वा।[6] अतिथ्ये वाचस्पति प्रैषादि इडांतेविशेष: । गार्हपत्य वर्ज
परिस्तरणम् । कपालानि नवपक्षेयोक्तम्।[7] काष्मर्यमया: परिधय: । ऐक्षव्यौ
विधृती। दक्षिणाद्रव्या देक्षाभाव: । उपकल्पनीयानि । इध्माश्चवाल्प्रस्तरो-

---

1- "उदायुषे" त्युत्थानं शीर्ष्णि सोमंकृत्वा पाणिमन्तर्धाय ।- का०श्रौ० 7/9/3
2- "भद्रोम" इति वाचयति । - तदेव, 7/9/16.
3- आह्वनीयाच्चोल्मुकमाहृत्यैके । - तदेव, 7/9/21.
4- औदुम्बरीमासन्दी नाभिदघ्नामरत्निमात्राङ्गीभूतामाहरन्ति चत्वार:।
- तदेव, 7/9/24.
5- शालां प्रवेशयन्ति दीक्षित सन्चरेण। - का०श्रौ० 7/9/28.
6- उदपात्रमुपनिनयन्त्येके । - तदेव, 7/9/31.
7- आतिथ्यं निर्वपति वैष्णवं न वकपालम् । - तदेव, 7/10/1.

पसन्नद्धं वर्हिः । मदंती पात्रद्वयम् । मंथन चतुष्टयम्।[1] घृतपात्रम्। समिद्वयम्। उदकम् । हिरण्यम् । पत्न्यन्वारब्धे तूर्णपूर्वा दानादि सादनां तम्। देवस्यत्वे त्यस्यत्वा शब्दं केचिन्नेछंति । तद्युक्तम् । नहित्वा शब्दोत्र विरूध्यते । येनत्वा शब्द स्यात्रापनयः क्रियते । वाच निकोयं मंत्र समुच्चयः। यादृशएव समाम्नायपाठक्रमस्तादृशएवप्रयोक्तव्यः । देवस्यत्वा सवितुः प्रसवेश्विनो र्बाहुभ्यां पूष्णोहस्ताभ्याम् । अग्नेस्तनूर सिविष्णवेत्वा जुष्टं गृह्णामीति।[2] एवंद्वितीयतृतीययोः .... । चतुर्थ पंचमणो विशेषः। श्येनायत्त्वा सोमभृते विष्णवे त्वागृह्वणामीति । अग्नयेत्त्वारायस्पोषदेवि ष्णवेत्त्वा।

कविमुक्ते वानडुहि ग्रहणं सादनां तम् । उपसर्जनीरधि श्रित्यमदं तीक्षवृतवदध्वर्युप्रोहणांते पक्षे पत्नी सन्नहनम् । चतुर्गृहीतान्या ज्यानि । आसाद्या ज्यात्मालंभनांते मंथनं शकलादानादि होमां तम् । वैष्णवो यागः । उल्मुकोद्वहनसमित्परि शेषण संचराभ्युक्षणान्यनुयाजार्थत्त्वान्न क्रियते पवित्र प्रतिपत्त्यं तेधो वाज्यस्य व्रत प्रदाने प्रतिपुरूषं ग्रहणम् । दक्षिणस्यां वेदि श्रोण्यांनिधानम्। सम्जमानानमवमर्शनम् । पत्न्यंग्य अमून्भयेनाधिधायनि धानम् । यजमानस्या हवनीये समिदाधानं मदंत्यु पस्पर्शनम् । मुष्टिमेखल स्यगाढत्तरकरणम् । पत्न्यागार्हपत्ये समिदाधानम् । मदंत्युपस्पर्शनम् । मुष्टि मेखलस्य गाढतरकरणम् । आद्यर्त्विजां यजमानस्य प्रति प्रस्थातुश्च पाणि प्रक्षालनम्। हिरण्यबंधनम् । मदंत्युपस्पर्शनम् । सोमाप्यायनम् ।[3] प्रस्तरेनि ह्नवः ।

भागपरिहरणम्।[4]अग्निस्सम्मार्ग प्रैषोग्नि सम्मार्गः । व्यूहनम् । अभ्युक्षणम्। जुह्वापरिध्यं जनम् । इह्वातानूना प्रादिनिक्तवांतम् । सूक्तवाकप्रैषः

---

1- एतदेवाग्नी षोमीयोपसत्स्वभिषतुष्टयम् । - का०श्रौ० 8/1/11-12.

2- ताश्नप्यमेतद । - तदेव, 8/1/19-20.

3- तदेव, 8/2/6.

4- वर्हिषः प्रच्छेदं हरति । - तदेव, 8/2/21.

प्रस्तरादानम्। अंजनम्। परिधिविधृत्योरादानम् । अग्नीन्मदंत्याया इति प्रैषः।[1] मदतीति प्रतिप्रैषः । नीचैर्हरणम्।[2] ताभिरेहीति वदतोध्वर्याहवनीयं हरणम्। प्रस्तरस्याभ्युक्षणम् । अग्नीधे समर्पणम् । आत्मालंभः उदकोपस्पर्शनम् ।संस्रवाहुतिः ।[3] धुरिनिधानम्। पिष्टलेपाहुतिः । वेदविमोकः पक्षेयोक्तव्य । आवेदेस्मरणम् । प्रणीता विमोकः । राक्षसभागः । भागावेक्षणम् । भागप्राशनम् । सुब्रह्मण्याप्रैषः । सप्रवर्ग्ये ह्यप्रवर्ग्यः । तत्रदीक्षासुमहावीरकरणम् । अन्तःपात्यदेशेमृदादिनिधानम् । अभिप्रदानम् । सव्येकृत्वादक्षिणेना लभ्यजपः । सव्येनदक्षिणेन चसाभ्रिणामृदादानम् । कृष्णाजिनेअभिनिधानमुत्तरतः । वल्मीकवपादानम् । कृष्णाजि । नेनिधानमुत्तरतः संमृपृस्य एवं वरा हविहतम् । पूतीकान्। अजापयः । गावेधुकास्तूष्णीम् । संभृताभिमर्शनं प्रत्येकम् । कृष्णाजिनं परिगृह्येयातर तरपरिवृतगमनम् । उदगता वीक्षिते सिकतोपकीर्णेप्राग्द्वारे निधानम् । संभारसं सर्गः । मृदादानम् । महावीरकणम्।[4] निष्ठिताभिमर्शनम् । आदानमेकैस्व प्रतिमंत्रमुत रौपिन्वनकरणं रौहिणकपालयोश्च। उपशयानि ....। गवेधुकाभिः श्लक्ष्णकरणम् । अश्वशकृताधूपनम् । दक्षिणाग्न्यग्नीनादीपनम् । निर्मथ्येन वादि वापाकः । दिव वोद्वपनम् । अजापयसावसेकः । पवर्ग्य.. द्वारा पिधानम्। शांतिकरणम् । पत्न्यं दर्शनम्। अननूक्तिभिश्चगार्हपत्यं पर्वेण कुशास्तरणम् । तत्र पात्रासादनद्वदम्। उपयमन्यादि।[5] अर्धवर्तिपात्री पवित्र छेदनानि । प्रोक्षणी पात्रम् । पवित्रे उदंका आज्यस्थाली आज्यं पूरयं पात्री उपसर्जनीया त्रं उदकं पिष्टानि। तूष्णी पवित्र छेदनम् । प्रोक्षणी संस्कारः।[6] उद्यमनम् । ब्रह्मन प्रचरिष्याम

---

1- मदन्तिरिति वा प्रैष्यति । - का०श्रौ० 8/2/22.

2- उपरव देशात्स्तम्बयजुर्हरति । - तदेव, 8/3/13.

3- चतुर्गृहीतं शालाद्वार्ये जुहोति युन्जते इति । - 8/3/25.

4- दीक्षासु महावीरान्संभरति । - तदेव, 26/1/1-5.

5- उपयमनीं महावीरम् । - तदेव, 26/1/10.

6- तदेव, 26/1/1-17.

इति प्रैषः । होतरभिष्टहि: प्रस्तोतः सामानि गायेति च प्रैषो। ब्रह्मा नुज्ञातस्यमहावीरप्रोक्षणपरिधर्म्यस्य च तूष्णीं।[1] पूर्वद्वारेण स्थूणामयूखनिर्हरणम्। दक्षिणतो होतुः संदशनि निखननम् । गार्हपत्याहवनीयावुत्तरेणं खरयोर्निर्वापः। दक्षिणातो नुभित्युच्छिष्ट स्वरः । गार्हपत्यखरे चयं चभूलंस्कारा: । आहवनीय खरेत्रयः संस्काराः । उल्लिख्योद्धत्याभ्युक्षणम् । उच्छिष्ट खरेच।[2] आहवनीयं पूर्वेण ।[3] संहीरणम् । दक्षिणतः स्थापनं प्रात्या तत्र कृष्णाजिनास्तरणम्।[4] अभि पशयोर्निधानं[5] महावीर योक्षनिधानम्। छादनं वा। स्थूणामयूखनिखन नाद्येवमंतं प्रतिप्रस्थातु। पूर्णाहुति वत्संस्कृत्याज्यं अर्जतीत्युच्यमानेमत्युच्य- माने मुंज प्रलवानाद्विगुणानां प्रदीक्षानम् । प्रतिदिशं खरेकरणं । तेषु महावीर- स्याज्यवतोनिधानम्।[6] अनाधृष्टेति वाचन । प्रतिदिशं वा। यजमानस्यैवदक्षिणत उत्तान पाणिकरणम् ।[7] प्राप्तादेशनिधानं चोत्तरतः । धृष्टिभ्यांभस्मना- परिकिरणम्। अंगारैश्च। विकंकतशकलेः परिश्रयणम्। सुवर्ण शतमाने नापिधानम्। त्र्यंबकायां पितृवद्देवच्येति समानसूत्रे इतरथा वृत्तिरूक्तेव। अत्र तुपक्षे इतरथा व वृत्तिरित्युच्यते । न च प्रदक्षिणं च पक्षे इतिछेदः । अग्नेे अवृतं चेत्परिक्रमणं इतरथावृतिः इह परिक्रमणपक्षेतत्रापीत्तरथा वृत्तिरित्युक्तिः । वस्तुतस्तुका कार्त्रिगोल कवत्पक्षे इत्युभयत्रान्वेति । चंद्रगायेति प्रैषः । धवित्रैस्म वाजनम्। एकं प्रतिप्रस्थात्रे समर्पयति। द्वितीय मग्नीधेस्व यमन्य। धर्मस्यतन्वो गायेति प्रैषः। धून्वतां अपसर्व्यत्रः । परिगमनम्। प्रदक्षिणं च । पक्षे इतरथावृत्तिः । अर्च्य-

---

1- ब्रह्मणाणुज्ञातो "यमायत्वे" ति महावीरं प्रोक्षति । -का०श्रौ० 26/1/26.

2- गार्हपत्याहवनीया उत्तरेण खरौ निवपति । - तदेव

3- तदेव, 26/2/32.

4- कृष्णाजिनमस्यामास्तृणाति । - तदेव, 26/2/33.

5- तस्मिन्नभ्युपशये निदधाति । - तदेव, 26/2/34.

6- तदेव, 26/2/38.

7- विश्वाभ्यो मे दि दक्षिणतः उत्तानं या बिभेदधाति - तदेव, 26/3/7.

विप्राप्ते सुवर्ण शमानस्यनिधानम्। आज्ये न प्रतिप्रवणं स्रुवेण महावीर परिषेक:।[1] रौहिणकरणं प्रतिप्रस्थातु:।[2] तूष्णीपदार्था: । सूर्याग्निहोत्र हवण्यादाय पिष्ट चतुर्मुष्टिद्वयगहणम्। प्रोक्षणं केचिदिछंति । तदयुक्तम् । उपधायकपाले अंगाररभ्यूहणम् । उपसर्जन्यधिश्रयणम् । पात्र्यां पिष्टप्रक्षेप: । उपसर्जन्या नयनम् । संयवनं पिंडवंधनम् । अधिश्रयणम् । प्रथनम्। अद्भिरभि मर्शनम्। पात्र्यंगुलिप्रक्षालनम्। पर्यग्निकरणम् । श्रयणम् । आलंभन। शृताभिवास: । अभितप्यनिनयनम्। इडि द्यावापृथिवी त्युचमाने परिधिपरिधानम् ।रौहिण हवन्यो रूपस्तरणम् । तत्रस्थाभिघार: । उदगुद्वा सनम् । कपालांजनम् । उद्वासनम् । आहवनीय दक्षिणोत्तरयोरासादनम् । प्राणदानं केचिदिछंति तदयुक्तम् । शूर्पाग्निहोत्रहवण्योरादानादिरौहिणयोरासादनम्। तं प्रतिप्रस्थातु:। अप्रस्वतीमित्युच्यमानेरुचितोधर्म इत्याहो येतिष्ठन् । अकृतं चेत्परिक्रमणम् । इतस्थावृत्ति: । इष्परिक्रमणपक्षेत्त्रापी तरथा वृत्ति: । नमोदेवानामित्युपस्थानं षडत्त्विजाम् । पत्नीशिरो पोर्णवनं महावीरमीक्षमाणा याननुवाचनम् ।[3]

रौहिणहोम:।[4] रज्जुसंदानादानां गार्हपत्यमपरेणगछतो गोरादानम्। धेनुगायेति प्रैष: । गविपाशमोक: । स्थूणायां बंधनम्। वत्सोत्सर्जनम् । संदनम् । वत्सोन्नयनंपि न्वनेदोहनम् । विचुबोभिमंत्रणम् । स्तनालंभनम् । एवंप्रतिप्रस्थाताजामयूषे तूष्णी संदानोन्नपरीशासयोरादानम् । वसिष्ठ-शफौगायेति प्रैष: । महावीरग्रहणम् ।[5] उद्यमनम् । मंजूवेदे नोप मार्जनम्। उपयमन्योपग्रहणम् । अजापयसावसेक:। शांतिगो: पयोवनयनम्। प्रैतु ब्रह्मण-स्पतिरित्त्युच्यमाने आहवनीयं गच्छतो वातनामजप: । उपयमन्याधर्म आसेक:।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 26/4/6.

2- तदेव, 26/4/7.

3- तदेव, 26/4-6.

4- रौहिणं जुहोति । - तदेव, 26/6/17.

5- अभीमितिमहावीरम् । - तदेव, 26/6/26.

स्वाहाधर्मः पित्र इति जपः । अतिक्रमणम् । आश्रावणम् । प्रत्याश्रावणम् । अश्विनोधर्मस्य यजेति प्रैषः । विश्वा आशा इति होमः । द्विविधा इति त्रिरुत्कंपनम् । स्वाहाग्नय इत्यनुवषट्कृतोहोमः । अश्विनाधर्मैतिब्रह्मानुमन्त्रणम् । अपात्तामिति यजमानस्यानुमंत्रणम् । इषे पिन्वस्वेत्यध्वर्योः । पिन्वमानानुमंत्रणम् । उत्तरार्द्धे पूर्वार्द्धे उक्रमणम्। खरे महावीरकरणम्।[1] धर्मेन्यज्यन्यज्य विकंकत शकलैर्होमः । प्रतिहोमं प्रथमे परिधौशकलोपश्रयणम् । चतुर्थस्याहुत्तस्य वर्हिष्युपगूहनम्। सप्तमं सर्व लोपाक्तं प्रतिप्रस्थात्रे दक्षिणेधमाणाः प्रयछति । स शालाया उत्तरत उदंग्निरस्यति । उपयमान्या धर्मासेकः। रौहिणहोमः ।[2] उपश्रित प्रहरणम।[3] उपयमन्या अल्पस्य होमो व होश्च शेषणंम्। शेषस्य वाजिनवनसोपहवभक्षणम् । उछिष्टखरे उपयमनी प्रक्षालनम्। निधानम्।[4] इहवोपश्रित प्रहरणम।[5] शांति करणं सऽसाद्यमानया नुवाचानम् । सूपवसादभगवती त्त्युच्यमानेधेन वेप वसोद कदानं वा । पात्राणामासादांकरणम्। अपरेत्रशान्ति मिछंति । पुस्तकांतरेः कूर्चे निधानमित्या कूर्चे द्विरूप मार्जनमित्त्यं त्तोग्रंथो नास्ति। युक्तं चैतद् नथा चभाष्यम् । आवृछव्देन च होम मात्रा वृदेवोच्यते । द्रव्यप्रधानत्वादुपदेशस्या तत्रापि केचिदेवाभे वा हुति मिछंति । आहुतिद्वयमित्यपरेति । अतएवात्रकूर्च निधानम् समिद्दाधानं चनोपनिबद्धम् । पुस्तकांतरे च तयोरासादनं नोप वद्धम् । अंतरप्रक्षिप्तोयम् । ग्रंथः तथा चपद्धृत्य तरे तूष्णीमेकाहुतिरिति संप्रदाय इति । उपसदिवाचस्पति प्रैषः । मंदंतीभ्यः प्रणीताप्रणयनम् । आहवनीय परिस्तरणम् । पात्रासादनम् । अग्निहोत्रहवणी वज्र। पवित्रछेदनानि । पवित्रे। आज्य-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- गार्हपत्याहवनीया उत्तरेण खरा निवपति । -का०श्रौ० 26/2/30, 26/3/3.

2- रौहिणावधिश्रयतितूष्णीग्रामपिष्टानाम् । - तदेव, 26/4/7;26/6/17

3- उपश्रितानि प्रहरति। - तदेव, 26/6/18, 26/6/21

4- तदेव, 26/6/20.

5- अत्र वोपश्रित प्रहरणम् । - तदेव, 26/6/21.

स्थाली कुशमुष्टि:।[1]अन्तर्द्धानतृणम् । पक्षयोक्तम् । स्रुवो जुहूपभृत् । सन्नहना वछादतानि। आतिथ्यपरिधय: विधृत्यौ च । आज्यंहोतृषदनम् । उपकल्प नीयानि एकादशेध्मकाष्ठानि। एकवृस्तरणार्थ आतिथ्याप्रस्तरसतो वर्हि: । उपसदर्थमाज्यम् । वा ग्यमनपवित्रकरणम् । प्रोक्षणी संस्कार: । पात्रप्रोक्षणं असंवरप्रोक्षणीनिधानम् । वाग्विसर्ग: स्थाल्या: प्रैषाभाव: संमार्गस्याभाव: । आज्यनिर्वापोवेद वंध: । आज्याधिश्रयणम् । पर्यग्निकरणम् । उदकोपस्पर्शनम् । सतृणवज्रा दानम्।[2] स्तंवयजुषि वर्हिष: प्रछेदेनहरणम्।[3] पूर्वपरिग्रह: उत्तरपरिग्रह: । प्रोक्षणीमर्दतीरिति च प्रैष: । स्रुचो समृददीति विशेष: । स्फ्येध्म वर्हि षां सादनम्। स्रुकसंमार्ग: । पक्षेपत्नी सन्नहनम् । आज्योद्वासनादि आत्मालंभनोंतेवि शेष: ।जुह्वामष्टगृहीतं चतुर्गृहीतमुपभृतविपरीतां वा।[4] वर्हिरसिस्रुग्भ्यां त्त्वेतिवर्हिप्रोक्षणम् । एकवत्स्तरणम् । नोल्मुकोदूहनम्। होतृषदनकरणम् । सामिधेनी प्रैष: । नवमेन वज्रेणेति । आहवनीयोवाजनम्। पूर्वाधार: । अग्निसंमार्गप्रैष: । अग्निसम्मार्ग: । आश्राव्यसीदहो तरिति प्रैष: । प्रसूतस्यस्रुवौगृहीत्वाग्नि: का मतोनुवाचनम् । अग्नये चतुर्गृहीते नयाग: । समानीयसोमया। अष्टगृहीतं चेद द्वैन। विष्णवे समानय मानोनुवाचयति। याग: । स्रुकसादनमं सोमाप्यायनमातिथ्यवन्निदक्तवां तम् । सूक्तवाक प्रैष: । प्रस्तरादानम् । अंजनम्। संस्कृत्याज्यं स्रुवेणोपसद्धोम: । परिधिविधृत्यो रादानम् । अग्नन्मंदंत्यापा इति प्रैष: । मंदंतीति प्रतिप्रैषोग्नीध्र: । नीचैर्हरणम् । ताभिरेहीत्त्तिवदतोध्प ध्याहवनीयं हरणम् । मदंत्त्युदकेनाभ्युक्षणम् । अग्नीध्रेसमर्थणम्। आत्मालंभ: । उदकोपस्पर्शनम् । संस्रवाहुति: । देशेनिधानं तूष्णीम् । वेदविमोक: । पक्षयोक्तस्य आवेदेस्तरणम् । एकवृद्वर्हिहोम: । प्रणीताविमोक: । सुब्रह्मण्या प्रैष: । अपराहे-

---

1- का0श्रौ0 26/6/21-28, 71-58.

2- तदेव, 8/5/26; 8/6/1-25.

3- उपरवदेशात्स्तम्बयजुर्हरति । - तदेव, 8/3/13.

4- तदेव, 8/3/25.

तानूनपत्रमिश्रंव्रतप्रदानम्।[1] प्रवर्ग्य शात्यदिशांत्यंतः । अयं शये वो पसदाहुतिः। अनस्तमि तेवाग्विसर्गप्रैष: । व्रतकरण प्रैषः । व्रतकरणां त्रिस्त नमेकस्तनं वामि हनस्वप्ने पूर्ववत् । अपररात्रे व्रतप्रदानं यथोक्तं प्रातर्विबुधवाचनम् । अनुदिते वाग्बंधप्रैषः । उदिते वाग्विसर्ग प्रैषः । व्रतकरणप्रैषः । व्रतकरणं द्विस्त नं वाग्विसर्जनम् । प्रवर्ग्योपसदौ पवित्र प्रतिपत्तिः । अग्नि सम्मार्ग प्रैषोग्नि सम्मार्गः व्यूहनं अभ्युक्षणं जुह्वापरिध्यंजनम् । इध्वाप्यापनादि निह्नवां तम्।[2]

रज: शया उपसदाहुतिः । वेदिमानम्। तत्रशालाद्वार्ययोर्मध्यात् पुरस्तात् त्रिषु प्रक्रमेषु अध्वर्यु सप्तेषु शंकुनिवसन नम्। प्रणीताप्रणयनं केचिदिछंति नेतिघोषणा पंचकासादनम्। दशगणे अग्निहोत्र हवणी वज्रः । अर्थवति पवित्र-छेदनानि । पवित्रे वेदितृणम् । उपकल्पनीयानि । रजुः शंकुः शम्या अभ्रिः पुरीषाहरणम् । उदक। सिकताच्छादनानि पवित्रकरणम् । प्रोक्षणी संस्कारः । वज्रा तर्द्धान तृणयोः प्रोक्षणम् । वेदिमानम् । परिसमूहनम् । उत्करकरणम् । पृक्ष्याकरणम् । स्फ्यादिछादनांतं उपसदे सातस्तं वयजुर्हरणम् । उत्तराप्त देशम-परेशात्रिषुप्रक्रमेषु अध्वर्यु सप्तेषु चात्त्वालमानं यथोक्तं वा । अपराह्णेवृत्त-प्रदानम् । प्रवर्ग्यो पसदा।[3] अनस्तमिते वाग्बंधप्रैषः । अस्तमिते वाग्विसर्गप्रैषः।[4] व्रतकरण प्रैषः । द्विस्तनं व्रतकरणम्।[5]वाग्विसर्गः । मोहनस्वप्नेयथोक्ते। अपररात्रे व्रतप्रदानम् । प्रातर्विबुधवाचनम् । अनुदिते वाग्वंधः प्रैषः । उदिते वाग्विसर्ग प्रैषः व्रतकरणप्रैषः मेकस्तनत्रिस्तनं वाग्विसर्गः । सप्रवर्ग्येप्रवर्ग्यः । उपसदेव वान्यत्र । हरिशयोपसदाहुतिः । अर्द्धव्रतप्रदानम्। पुनःप्रवर्ग्योपसदो। सप्रवर्ग्यो-प्रवर्ग्यो सादनम्।[6] तत्रांतः पात्येपारिध्मर्य निधानम्। दक्षिणेननिहत्योछिष्ट-

---

1- अपराह्वेन प्र तमिश्रं दीक्षिताय प्रयच्छति । - का०श्रौ० 8/2/2.

2- तदेव, 8/2/6.

3- उपसदा चरिष्यंश्चरिष्यन्प्रवर्ग्येणचाति सप्तवर्ग्ये। - तदेव, 26/2/1.

4- अकृन्चिमिश्र।का० श्रौ० 26/2/4.

5- यावदुक्तम्। - तदेव, 26/2/5.

6- का०श्रौ० 26/2/9-14; 26/7/1

खरस्य। आहवनीये त्रींछालाकान्प्रदीप्य प्रदीप्य आग्नीध्रो मुखमात्रेधारणं करोति । पूर्णाहुति मत्संस्कृत्याज्यं चतुर्गृहीते न होमः । एवमेव नाभिमात्रे तेनैव चतुर्गृहीतेन तृतीयं प्रास्यशालाकं उपविश्य होमः।[1]पत्नीमग्रतः कृत्वा निष्क्रमणम्। सामप्रैषः । सामगानम् । व्यध्वेपरिष्यं दे उत्तरवेदौ वा परिषेकः। प्रवृंजनीयनिधानादि यथा सूत्रं प्रवर्ग्योत्सादनंपयः पूरणं तं । सशेषे पयः । अत्रवा परिषेकः वार्षहरेतिप्रैषः । इष्टोहोत्रीयस्य चा चात्त्वालेमार्जनम् । पूर्वार्द्धो क्रमणम्। अनेपक्षमागमनम् । समिदादानम् । आहवनीये आधानम् । पत्न्यागार्हपत्ये समिदाधानम् । शतमानादिदानं यथोक्तम् । अग्निप्रणयनो पयमन्युपनि वपनांतम् । हविर्द्धानि प्रक्षाल्य तीर्थेन प्रवेश्य शालामभित आवर्त्त्य पृष्ठ्या मभितो घरत्न्यंतरयोः स्थापनम् । महद्दक्षिणम् । तयोः छदिः करणं पुरस्वाद्रराद्यासंजनम् । उछायाभ्यां परिवारणम् । पश्चाच्छदिः करणम्। पुरस्ताच्च संस्कृत्याज्यशालद्वार्ये चतुर्गृहीतेन सामपूर्वकोहोमः।[2] पुनः शाला-द्वार्ये संस्कृतयाज्यं चतुर्गृहीतग्रहणम् । दक्षिणस्यानसो दक्षिणेवर्त्त्यनिहिरण्यं निधायहोमः।[3] दक्षिणेनद्वारेण पत्न्या नयनम् ।[4] चतुर्गृहीतहोमशेषं पत्नी-पाणिभ्यां गृहीत्वाक्षधुराजनम् ।[5] प्रतिप्रस्थातुः स्रुकस्थालीग्रहणम् । उत्तर-स्यानसो दक्षिणेवर्त्यनिहिरण्यं निधाय होमः । पत्न्याश्च परेणाग्नीनाहरणम्।[6] पूर्ववदक्षधुरांजनम् । हविर्धानाभ्यां प्रवर्त्त्यमानाभ्यामनुवाचनम् ।[7] त्रिस्वता-

---

1- चतुर्गृहीतेनाभिजुहोति "यातेत्यादि० । - का०श्रौ० 26/7/4.

2- तत्रैव.

3- तत्रैव, 8/3/27.

4- तत्रैव, 8/3/28.

5- तत्रैव.

6- पत्नी चापरेणाग्नीन्परीत्योत्तरस्सानवित्पूर्ववद् । - तदेव , 8/3/31.

7- तदेव, 8/4/1.

यामुदगृह्यैव वर्त्तनम्।[1] हुतिश्चपश्चादुत्तरवेदेः स्थापनम्। नभ्यस्याभि मन्त्रणम् । उत्तरेणपरिक्रम्य दक्षिणस्योत्तंभनम्। दक्षिणापूर्वकोणेस्थूणा। खर्जीति चेदाचलं कालावा चलंनिखननम् । प्रतिप्रस्थात्तरुत्तरस्योपस्तंभनम्। उत्तरपूर्व कोणेस्थूणानि खननम् ।[2] दक्षिणापरेवा तत्तद्युत्तरतस्तूर्ष्णीं पृष्ठ्या मुभयतोद् वार्योमध्यमंछदि रालभस्वेति प्रैषः । आलब्धवाचनम् । एवं द्वाचा उद्ग्राप्योश्च । द्वार्ययोः परिषीवणम् । प्रथमंदक्षिणस्य। तथा उत्तरस्य । एवमपरयोश्चा यं संप्रदायः । केचिददक्षिणपूर्वादारभ्य प्रादक्षिण्येनेछंति । प्राग्वंशंहवि र्धानम् । निष्ठित्ता लंभनम् । दक्षिणस्यान तोधःप्रउगस्याधस्तात उपर वखननम्। तत्राभ्यादानम् । दक्षिणपूर्वस्य परिलेखः । तत उत्तरापरस्य।[3] दक्षिणापरस्य। उत्तरपूर्वस्य। अथवा उत्तरापरं परिलिख्य दक्षिण दक्षिण पूर्व दक्षिणापरम् । उत्तरपूर्व च । अथवा पूर्वदक्षिणादारभ्यप्रदक्षिणाम् ।[4] सर्वपक्षेषु उत्तरपूर्व त्त्वत्त्यम् । प्रादेमात्रास्तदनंतराश्च । यथापरिलिखितं खननम्।[5] इत्किरणं च। वाहुमात्रा नखात्त्वा प्रदक्षिण मुत्तिकरणं अहणयासं मर्दनम्। अश क्तौसम्यकपुरस्तादूर्जम्। उपरवानवननूशस्वेति प्रैषः । यजमानस्य यथा खातम वमर्शनं अध्वर्युयजमानयोर्यथोक्तं समर्शनम् । अवटप्रोक्षणम् । अवनयनम् । अवस्तरणम् । उपरितनुकुशकरणम् । प्रक्षाल्ययथोक्ताऽधि षवणफलकोपधानम् । पांशुभिः पर्यूहणम्। त्तयोश्चर्माधिषवणा स्थापनम् । तत्र पंचग्रावनिधानम् । उद्गातावीक्षिते पुरस्तात्खरकरणम् । अंतः पात्त्यात्षट्प्रक्रमक्रमणम् । दक्षिणा सप्तमं महांतम् ।तत्रौदुंवरी मानम् । अभ्रिआ दानाद्य वस्तरणांतम् । उद्दिवमित्त्युच्छ्रयणम् । घृताभिज्ञितिमानम् । यूपवत्त्य यूहणादि अदभिल्पे-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- द्विरुक्तायां मुदगृह्यैववर्तनम् । - का०श्रौ० 8/4/2.

2- उत्तरतः स्थूणां पूर्ववद् । - तत्रैव, 8/4/9.

3- का०श्रौ० 8/4/13

4- तत्रैव, 8/4/14-26.

5- तत्रैव.

सेकांतम्। कृ । द्रुवदीमालभस्वेतिप्रैषः । आलब्धवाचनम् । संस्कृत्याज्यं स्रुवेण विशाखे होमः । भूमिप्राप्तेः स्वाहा कारः । पूर्वापर प्रमाणमध्येकृदंवरी। दक्षिणोत्तरस्य पृष्ट्या। वंशः दक्। मध्यमंछदिराशेप्य पश्चात्पूर्वतश्चैवम्। उत्तरतस्त्रिवर्गापरिवारणं सद्भिः परिवारकैः द्वार्यणिः परिषीवणम् । ग्रंथिकरणम् । अभिमर्शन चंद्रैः । आग्नीध्रकरणं यथोक्तम्।[1] निष्ठिता लंभनम्। धिष्णा निवाप उदङ्मुखस्य तत्र परिसमूहनम् । उपलेपनमुल्लेखनमुद्धृतत्त्याभ्युक्षणम् । अन्वारब्धेपुरीष निर्वापः ।[2] हस्ते न वज्रेण च । सिकताश्चो परिसर्व त्र । प्रत्त्यस्नुरवोहोतृधिष्णे। दक्षिणामुखो मार्जालीयो। आहवनीयादीना मनुदेशा उत्करांतः । अग्नीषोमी योवाचस्पति प्रैषः । आहवनीयशालाद्वार्य[3] दक्षिणाग्नीनां परिस्तरणम्।[4] पात्रासादनम्।[5] दशगणे अग्निहोत्रहवणीवृज्ज्मा सन्नमेव। शम्या दृषदुपल मासाद्यते । अर्थवति पवित्रेविधेत एव। आज्यस्थाली अभ्रिर्व्रहम। कुशमुष्टिः । शकटवर्हिः । पक्षेयोक्तम्। स्रुवोजुहूपभृत। सन्नहनावछादनानिअग्नीषोमीय सूक्तानि । आतिथ्य परिध्योर्विधृत्त्यौ च । होतृषदन माज्यं वपा श्रयण्यौ। शूलम् । उखा। असिवसाहोमहवनी। इडापात्री अन्तर्द्धानकटश्च । उपकल्पनीयानि। इध्मांक्षवाल प्रस्तरोपसनंद्धं आतिथ्यं वर्हिः दधिपृषदाज्यपात्रम्। प्लक्षशाखा। यूपचतुष्टयम्।[6] पक्षेएकादश यूप चतुष्टया नीतिविशेषः । यवा उदकं अवटकुशाः अवटार्थीयमाज्यम् । यूपां

---

1- का०श्रौ० 8/6/10.

2- तत्रैव, 8/6/12.

3- तत्रैव, 8/6/21.

4- तत्रैव, 8/6/23.

5- तत्रैव, 8/6/25.

6- तत्रैव, 8/8/9-16.

जनीयं[1] च। मैत्रावरुणदंड: । त्रिगुणरशना उपाकरण तृणम्। मंथन चतुष्टय पक्षे। द्विगुणरसना। पशु शमिता पक्षेपरिवश व्याजम् । पात्रेजनी। हिरण्य शकला निष्द । हृदयशूलाव भूथाभाव:। प्रोक्षण्य: संस्कृताएव । वाग्यमनम् । पात्र-प्रोक्षणम् । अतंचरेप्रोक्षणीनिधानम् । वाग्विसर्ग: । कुक्कुटा हननम्। आज्य-निर्वापो वेदवंध: । वेदि खननम्। उत्तरपरिग्रह: । अंत: पात्र्यसंलग्न मनुमार्जवं वर्हिरंत प्रैष: । प्रोक्षण्या: सादनम् । पाण्योरेवनेजनम् । इध्माशकट वर्हि पश्चासादनम् । इध्मप्रोक्षणम् । वेदि प्रोक्षणम् । वशापक्षेशकटवर्हि षिवर्हिरसित्वा जुष्टं प्रोक्षामीति पयस्या पक्षे वर्हिरसि स्रुग्भ्यां त्त्वेति। स शेषो मूलावशेष: इध्मनिधानम् । अपराह्वे प्रस्तर वर्जविदिस्मरणम् । प्रवर्ग्योत्सादन पत्न्यशेषेण सार्द्धं वृतप्रदानम् । शाखाछेदनं सन्नमनम्। इन्द्राय सरस्व तिवते भागमिति त्रयाबर्हिषद वर्गाणामपाकरणम् । सप्रवर्ग्ये प्रथमस्थानं त्तरंइंद्राय भागमितिचतुर्थ स्थापाकरणम् । षड्वर्गस्य उदकोपस्पर्शनम् । वर्हिरासादयस्रुचौ संमृदयाज्येनो देहीति प्रैष: । पाक्षिक: पत्नीशब्द: स्फ्योदकप्रहरणम्। अंत: पात्र्यदेशे एव स्फ्य वर्हिषा सादनम्। स्रुकसंमार्ग: पाशुक:।[2] पक्षेपत्नीसन्नहनम्। आज्योदासनम्। पत्न्यवेक्षणम्। उपस्थेसोमंकृत्वाशालाद्वार्ययत्पूर्व वर्हिरंतं प्रैष्यतीति छकट वर्हि-रभिप्रायेण। इतंत्तु अग्नीषोमीवर्हिष: परेषा यजमानस्यासनम्। यदविकरणम्। यदिविकरणम्।यथोक्तं वा। अंत: पात्र्यदेशे उत्तपवनादि पाशु काज्यग्रहणांतम्। धारण याज्यानाम्। अपि वृताश्चात्वारंभते यजमानम्। वा ससाछादनम्। पूर्णा-हुति वदाज्य संस्कार:।[3] एकगृहीतेन समिद् वर्जमिध्म मभिहोम: । द्वितीय श्च। अग्नये प्रह्रिय माणास्या नुवाचनम्। सोमायेत्त्यादिवा । ग्रावादीना मादानम्। गच्छतीवाचनम्। अग्नीध्रेग्निर्निधानम्। तत्रैवहोम: संस्कृत्तारवज्याव । ग्रावादि-स्थापनम्। उत्तरेणपरिक्रमणम्।[4]आहवनीयमुत्तरेण आज्यसोम वर्जितानांनिधानम्।

---

1- अभ्यन्जन प्रभृति करोति । - का०श्रौ० 8/8/17.
2- अम्सादि करोति । - तत्रैव, 8/8/1.
3- आज्येन संस्थापयन्तीति श्रुते: । - तत्रैव, 8/9/2.
4- पशुपर्यग्निकरणम् । - तत्रैव, 8/9/3.

इध्मप्रोक्षणम् । खरोत्तरार्द्धप्रक्षणम् । पश्चादोत्तरवेदेः । वर्हि प्रोक्षणं स्रुवग्- भ्यां त्त्वेतिक्ष शेषो मूलावसेकः वर्हिर्वितं सनादि अनुपस्पृश्य समिदाधानां तम्। स्तीर्यमाणदेशस्य श्रोणौ सन्नहन निधानम्। एकवृस्तरणम्। तदनंतरं प्लक्ष- शाखाः समिदाधानां ते तेनैव पूर्व संस्कृत्तेनाज्येनहोमः । आहवनीयेक्षणादि आत्त्मालंभनां तम् । पशुवत्तदक्षिणेनसितुष्णीं कृष्णाजिनस्तरणम्। तत्रान्वा- रब्धस्य सोमस्यनिधानं यजमानस्यविस्टज्योपस्थानम् । निष्क्रम्याहवनीये समिदाधानम् । मदंती रूपस्पृश्यां गुली विसर्गः । पत्न्यागार्हपत्त्येसमिदा- धानम्। मदंतीरूपस्पृश्यांगुली विसर्गः । चात्वा लेमदंतीकरणम् । अत्तो नाम- ग्रहणभोजनेक्रियेते प्रत्यनिवृत्तिः । अत ऊर्ध्वेहवि शेषभक्षः । अभ्रिआदानादौ- विशेषयूपे कादशिनीपक्षे मध्यमं परिलिख्य व्यत्त्यासेनेतरेषां पदार्थानु समयेना वटेहामातं खननम् । पांसूद्वयनं च । पदार्थः । अंजनादिमध्यमे स्वर्गवगूहनां तम्। इत्तरेवांजनादि चषालेक्षणां तं अग्रपाक्षिकं कांडानुसमयेन वितष्टे अवट संबंधाभावः। सर्वेषादक्षिणेनस्थानम् ।अनुच्छ्रित्त्यवोत्तरम् । ततोदक्षिणेन निधानम्। वितष्टस्य संस्काराणा मप्यय मेव न्यायः । मध्यमेएवांत्यावे परिनियोगादिषु देवता मात्रे विशेषः । नश्येतान्नुमुहूर्त्तं मिति । नात्राज्य भागो वा[1]

वपायाद्विरभिघारणम् । वपामार्जनां तेवसती वरिग्रहणं निधानां तम् । सुब्रह्मण्याप्रैषः येता पुत्रीयां तम् । तदह्वानं पशुपुरोडाशे वाचस्पति प्रैषः । मध्यमे एवम् । त्त्यावे परिनियोगादिषु देवता मात्रे विशेषः । नश्येनान्नुमुहूर्तं मिति । नात्राज्य भागो व । वपायाद्विरभिघारणम् । वपा- मार्जनां तेवसतीव वरिग्रहणं निधानां तं प्रणीताप्रणयनम्।[2] पात्रासादयनम् । शूर्पाग्निहोत्रहवणि। कपालानि। कृष्णाजिनोलूखल मुसलोपवेषोपसर्जनी पात्रम्। ध्रुवापुरोडाशपात्रीशृतावदानम्। कृषधं पूर्णपात्रं कर्मापवर्गाचिति आर्धांतेसुं चं

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 8/9/37.

2- तत्रैव, 8/9/38.

संमृदीतिप्रैषः । तत्तसम्मार्गः। ध्रुतावदानपात्रयोश्च । सम्मार्जन प्रासनम्। ध्रुवायां माज्यग्रहणम् । आसादनम्। पुरोडाश मासाद्य ध्रुवा पूर्वकमालंभः। यजप्रैषावाज्यभागो। पशुपुरोडाशयागोभागपरिग्रहणांतः । नात्रभागावदानाति। एकं समिष्ट यजुः । न शूला वमथः । अपराग्नी नांपूर्वे चतुर्गृहीतं यूपाहुति वदिति। नाप राग्न्याहुतिः कर्मापवर्गाम् । ते व्यूत्क्रामतेतिप्रैषः । शालाद्वार्यमपरेणपत्न्यासनम्। उत्तरवेदि मरपरेण यजमान उपस्थे सोमंकृत्वा आस्ते । वसतीवरिपरिहरणम्।[1] यथोक्तमाग्नीध्रेयेनिधानां तम्। सोमं वा संधाम् । सुब्रह्मण्या प्रैषः। पैता पुत्रीयांतः।[2] उपसृष्टादि परिवाप्योदोहः परिक्षालनांतः । इंद्रस्य सरस्वती वतस्त्वाभागह सोमेनात नच्मीति आतंचनम्। दधिधर्मस्येन्द्रस्य त्वेति । पयस्यापाकरणमीन्द्रा यमित्रावरुणवतेभागमिति। अग्निष्ठेरशना स्थापनम्। यूपैकादशिनीषु. वस्त्रां आवसथादीनांदानम्। दीक्षितस्य सोमरक्षणमिति।[3] सप्तमोध्यायः ।

---

1- शालाद्वार्यमपरेण वसतीवरीः परिहरति । - का०श्रौ० 8/9/15.

2- सुब्रह्मण्यां च प्रेष्यति पैतापुत्रीयाम् । - तत्रैव, 8/9/11.

3- का०श्रौ०, 8/9/26.

अपररात्रे ऋत्विजां प्रबोधनम्।[1] अपामुपस्पर्शनम्। वाचस्पति प्रैषः । आहवनी शालाद्वार्य वा दक्षिणेनो पवेशनं ब्राह्मणः । आहवनीय शालाद्वार्य दक्षिणाग्नी नां परिस्तरणम् । पात्रा सादनम्।[2] अग्निहोत्र हवणी वज्रः । शम्याहषदुपलम् । पवित्रछेदनानि पवित्रे आज्यस्थाली कुशमुष्टिः पक्षयोक्त्रम्। स्रुवादिग्नीषोमीयवत्ध्रुवासहितम् । षोडशयति रात्रयोः पाकवेषम्यात वपाश्रयणीशूलो प्रवंभिन्नं । यूपसं वंद्ध वर्ज उपकल्पनीयानि पशुवत् । पवित्र करणादि आज्याधि श्रयणातम् । पर्यग्निकरणं प्रोक्षणी प्रैषः । पक्षपेत्नी शब्दः। स्फ्योदकप्रहरणम् । नपाण्योरवनेजनम्। पक्षेपत्नी सन्नहनम्। अग्नीध्रे उत्पवन-प्रत्युत्पवने। तत्रैवपाशु कमाज्यग्रहणम् । धारणमाज्यानम् । आज्यान्यादाय-सोमं ग्रावादीनि च आहवनी य इध्म प्रोक्षणादि। एत देवेध्मप्रोक्षणम् । खरोत्तरार्द्धस्य पश्चाद्वुत्तरवेदेर्वा प्रोक्षणम् । सशेषो मूलावसेकः । स्तरणमग्नी-षोमीयवत् । उदकोपस्पर्शनांते ईवांत्तरेणार्द्धसोमोपावहरणं यजमानेन्वारब्धे यजमानस्यैवविष्ट ज्योपस्थापनम् । प्रातरनु वाकोपाकरणम् ।[3] सुब्रह्मण्या प्रैषः पैत्ता पुत्रीयांतः । तदाह्वानम् । अध्वर्योः स्वयनं वा।[4] अग्नीध्रः सवनीया निर्वापः ।[5] तत्र वाचस्पति प्रैषः । प्रणीता प्रणयनम् । पात्रासाद तंशूर्पम् । कर्परद्वादशानिकपालानि । कृष्णाजिनो लूखलमुशलम् । अतः । पात्री चेतदस्त्ये वशाखोपवेषः ।उपसर्जनीपात्रम्। दोहन चतुष्टयम्। पात्रीयं चविला। वाजिनभांड शृतावदानम्। यवाः । पूर्णपात्रम्। कर्मापर्वगा चेति । दध्युपकल्पनम्। प्रोक्षणीः प्रोत्सार्य शूर्पादानादि तुषविप्रमोकां तं कंडनकुक्कुटा हननवर्जम्। चर्वकः । ऐंद्र स्पफलीकरण। कपालोपधानम्। भर्जनस्य च यथोक्तम्। उपसर्जन्य धिश्रयणं । पेषणम्। प्रोहणांतं दोहः । ईक्षणादि पिंडवंधनांतम्। पुरोडाश-धानानां युगदपदधिश्रयणम्। पयग्निकरणम् । श्रपणम्। आलंभन पुरोडाशस्य

---

1- अपर रात्र ऋत्विजः प्रबोधयन्ति । -का०श्रौ० 9/1/1.
2- तत्रैव, 9/1/2.
3- तत्रैव, 9/1/10.
4- स्वप्यादा। - तत्रैव, 9/1/14.
5- तत्रैव, 9/1/15.

श्रुतेवध्यानयनं धानोदसनं फहलकरण। चर्च्यकः पेषाणादि संयब नांतंअभ्यिासनाम आ त्पोदकदानं। तत्सं वंक्पात्रसम्मार्गः। वेदाग्रस्थापनाम्। उन्नेतुः पात्रेबोज नंयथोक्तां। षोडशी चेच्चतुः स्रक्ति बादिरंपात्रं खरेस्व। प्रातरनुवाक सवनीया निर्वापपात्रयोज- नानियुगमत् ।[1]अभूदुवाक शत्यसुरित्त्युच्यमाने पूर्णाहुति वत्संस्कृत्याज्यं चतुर्गृहीतेन सामत्पूर्वको होमः। अपरंगृहीत्सोदङ्•गछतें न्मद्रप्यहोत्तरिति प्रैषः। मैत्रावरुण- स्य चमसाध्वर्य वेहीतिप्रैषः। नेष्टः पत्नी स्दानोपेतिप्रैषः। एकधनिन एत इतिप्रैषः। अग्नीच्चात्त्वाले वसतीवस रीभिःप्रत्युपतिष्ठा सेहोतृ चमसेन चेतिप्रैषः। अपः प्रति- गमनाम्। अप्सुहोमः मैत्रावरुणचमसेनाज्यापोहन[2] तेनेवापां ग्रहणाम् एक धन ग्रहणं- मंत्रेण। पत्नी नां पात्रे जलग्रहणं तूष्णीप्रंत्यागमनाम्। चत्वाले वसतीवरि मैत्रीवरुण चमस स्यसंस्पर्शनम्। व्यानन्नवा। होतृ चमसे वसती वरिकरणं[3] यजमानाय समर्पणं निग्राभ्याः[4] होत्रापृष्टस्याध्वर्यो वरेपाङत्युतेवननं मुरितिप्रैषः[5]प्रचरणी संस्रवहोमाग्नि ष्टोमे। तदलाभे चतुर्गृहीत्तेन समित्पूर्व को होमः[6] उक्थ्यचेत प्रथम परिध्यात्लंभन मनोनमंत्रेण[7]। षोडशी चेद्राधा लंभनं मंत्रेण तूष्णींवा प्रवेशनम् अतिरात्रेछ दिरालंभन[8] मंत्रेण तूष्णीमेव वा प्रवेशनम् होतारं दक्षिणेनातिक्रमणम्। आधम नीयेमेत्रावण चमसाव नयनाम् व सतीवरि तृतीयस्य चमंत्रेणा[9]। एक धनस्य च ।। एक धनस्थान उभय शेषस्था - पनम[10] । लेकिक मुदकं पाणिप्रक्षालनार्थहि रव्य गावाणं निग्राभ्याम् संभरणी ।

---

*- उन्नेतुः पात्र योजनम् का श्रौ 9/2/1

2- का•श्रौ• 9/3/9

3- का• श्रौ• 9/3/10

4- होतृचमसेन वसतीवरी कृत्वायजमानाय प्रयच्छतिनिग्राभ्याः। का•श्रौ•9/3/11

5- होत्रापृष्ट प्रत्याहोत्तेत्यनमुरिति। - का• श्रौ• 9/3/12

6- का• श्रौ• 9/3/13

7- उक्थ्ये प्रथमं परिधिमालभते। -का• श्रौ• 9/3/14

8- छदिरिति रात्रे। -का• श्रौ• 9/3/17

9- का• श्रौ• 9/3/18

10- एक धनस्थान उभयशेषांनिधायाऽ धिषवणे पर्युपविशर्ण। का•श्रौ•9/4/1

अग्राप वित्र चेति। अग्यादानम् वाग्यम नम्। निग्राभ्यावाचनम्। उपांशुसवने[1] सोम-
मानां मिता लंभनम्। अवापकर्षणम्। उपांशुसवन मद्रिं च। प्रतिप्रस्थातुक्षणम्[2]। सदा-
मस्य चाध्वर्योस्तृतीय सर्व नार्थ निपाभाणांच। इतरेषां पुरूषां पाणिप्रधालनम्।
हिरण्यबंधनम्। वाग्य मनं। अग्यादानम् च निग्राभ्यासेकः[3]। द्वेव्यस्यमनसभिधानम्।
प्रहरणम्। अ परिमितप्रहारेरभिषवः। पुनरूत्युं ज्याभिरतेषां अभिषवार्था नामीषां
तोरणाहरण। पाणिप्रधालनं। हिरण्य बंधनम्। षवपर्यायः। एवंतृतीयः। सोमा-
प्यायनम्। होतृवमसेत्यानंशुन वंधापप्राग्मा गिति वाचनम् सरतां श्नूनांसंभरण्या
धवनीयेबधा नम्। आधुयाहरणम् एवमासेचनादित्रिपर्या यो द्वितीयो भिषव आधूयाहरणातः 2
तथा तृतीयः त्तत्र निग्राभ्या वाचनातिद्रि[4] मथापवाचनाम् तूष्णीवापक्षे। क्षुल्लका भिषवार्थे
अंशु मुष्टिनिवपनम्। निग्रा भ्यासेचनाम्। अद्रेरूयमनम्। द्वेष्यस्यमनसा भिधानं। प्रहरणं-
यथोक्तम् प्रागया वाचनाम्। उपांशुग्रहणम्। प्रतिप्रस्थातोप गृह्णा ति पात्रम्। अंशु-
द्वयमंगुल्यंत्तरे कत्वा अंतर्धाय ग्रहणम् एवं द्वितीयमासेकादि। प्रहारसंख्यामात्रे विशेषः
प्रति प्रस्थाताऽन्यदंशुद्वयमादते। पुनरसेकादि तृतीयं प्रहार संख्यामात्रेति शेषः।
आद्रिणाचतुर्थ वाचनाम्। तूष्णीवा मन्यदंशुद्वयमादत्तेप्रतिप्रस्था तांगुल्यंतरेकृत्वां तृतीय
ग्रहणम्। आत्तानासोमेनिधानं। परिमार्जनं अभिचरतः सादनमनि सृजतः।उदकोपस्पर्शनम्।
अभिचरत् एवं पाणिना पिधानं। उदकोपस्पर्शनंस्वाहेत्युच्चारणं। निष्क्रमणम्। अन्यस्मे-
प्रदायहोतृ चमसं यजमानस्यान्वारंभः क्षिप्रेणइमंग्रहम् जुह वदिति वरवरणम्[5]। वरदानं।
होमः। पात्र्योमार्जनम्।

---

1- उपांशुसवन। - का0 श्रौ0 9/4/5

2- का0 श्रौ0 9/4/9

3- "स्वात्तास्थे" त्या सिन्चतिनिग्राभ्याः। - का0 श्रौ0 9/4/10

4- तत्रैव

5- वरं वृत्वाय ददाति। -का0 श्रौ0 9/4/33

प्रथमपरिधोपाणिनम्प्रागुयमार्जनम्[1]। वस्त्री दिपु विलष्टस्यां शोरभिचरतो होमः उदकालंभनम्। आग्रयणस्थाल्या शंबासेकः। अंशुप्राशनं चतुतीयसवनार्थ।[2] पात्रसादनम्[3] उपांशुसवनं पाणिनापृणिनाप्रमृज्य पात्रसंलग्नस्योदङ्· मुखस्यासादनम्[4]। द्रोणकलशग्रहणम्[5]। तस्योपरि पवित्र वितन्वनमुग्दातृणाम्[6] अकुर्वत्सुखमेवाध्वर्योः आधवनीया द्रुन्नेताहोतृचमसे आसिंचति। ताः पवित्रेयजमान आसिंचति[7]। ततोग्रहणीद्युते। उदितेंतर्यामग्रहणम्। परिमार्जनम् उपांशुसादनापिधानपदे अस्यापि सादनापिधाने। अन्वारंभणम् उपांशुवदों मः। अनाम्नातमंत्र व रवोषा से चनवर्जमुपांशुवत अपमार्जनम्परिधो चप्रत्यक् ग्रहसादनऐन्द्र वायवग्रहणाम् अपगृह्य पुनर्ग्रहणं। परिमार्जनाम् अगृह्य पुनर्ग्रहण सादनं। मैत्रावरुण ग्रहणम्। कुशांतद्धानाम् पपसांग्रयणाम् परिमार्जनम् सादनं शुक्र[8] ग्रहणम्। परिमार्जनंसादनम्। मंथिग्रहणाम् कुशां तद्धानाम् सक्तुमिश्रयणम् परिमार्जनसादनम् द्वयोर्द्धारयोराग्रयणग्रहणं। दशापवित्रेण परिग्रहणाम्। वाग्विसर्जनम् हिंकारप्रभृति। परिमार्जनम् सादनम्।षोडशिमक्षेत्र वाषोडशी। उक्थ्यग्रहणम् परिमार्जनम् ध्रुवग्रहणम् परिमार्जनंसादनम् आहोमादस्य यजमानोनसूत्रपुरीषे करोति जानतोवैश्वावरग्रहणम् अर्धपूर्ण द्रोणकलशंकृत्वा सवसिकः। अध्वर्योः दीनांसमन्वारब्धनिक्रमणं। विपुद्रोमः। अध्वर्योवा। अत्रवासमन्वारंभणम् वेदितृणदानमध्वर्योः। प्रकृङ्·नामुदग्गमनम् चात्वालेतृणप्रासनम् उग्दातृणां पुरस्तात्। द्वितीयस्यजप त्सुसोमः पवन इति पवमानोपाकरणम्[9]। प्रस्तोत्रेतृणसमर्थणम्। सर्वेषुयवमानेषु। आतृणों। वाकुशमुष्टिं वा अस्मि-

---

1- का0 श्रौ0 9/4/34

2- का0 श्रौ0 9/4/36

3- "प्राणयत्वेति पात्र सादनम् का0श्रौ0 9/4/37

4- का0 श्रौ0 9/4/38

5- पवित्रंचवितन्वत्युदक्। - का0 श्रौ0 9/5/13

6- तत्रैव

7- का0 श्रौ0 9/5/15

8- शुक्रोद्रविकल्पा। का0 श्रौ0 9×5/15

9- का0 श्रौ0 9/6/15

न्वेषपवमानोपुरस्ता दुग्दतृणंप्रत्यङ्मुखोप वेशनम् मध्वर्योः। प्रतिप्रस्थातृश्च। दक्षिणो-यजमानः। स्तूयमाने आधवनी यात्पवित्रमं तद्वायपूतमृति सोमासेचन मुन्नेतुः। स्तोत्रां ते प्रैषः। धिष्ण्येव ग्निर्विधिणम्। अनुपृष्ट्यंवर्हिस्तरणाम्। पुरोडाश विभस्मीकरणम् पंचबिला पान्या उपस्तरणम् वाजिनभांडस्य च। तत्र स्थाभिधरणमदत्वावा वा जिननिषेकः। उद्वास्य एक पात्र्यामासदनम्। मध्येपुरोडाशः। पुरस्ता त धानाः। प्रतिदिशमित्तराणि यथा संख्य। प्राणदानं कपाला जनम्। उद्वासनम्। अब्बाखये-वाश्विन ग्रहणंपरिमार्जनम्।

सादनं। ग्रहानीक्षमाणा वकाशा वाचनम् भूर्भुवः स्वरिति यजमानस्यजपः ध्रुवगुप्ती करणं। द्वितीयं परिव्ययणे। स्वर्ववगूहने। स्तोमायन पक्षे उपाकरणदि। यूपैकाट शिनिपक्षे इतरेषांद्वेपरिव्ययणें। अवाहोभांत पक्षेप्रत्येक मंजना दिद्विपरि वीतां तम्। पक्षे अनुक्रित्योतरं वितष्टोत्सर्गः। उपाकरण मंथन योर्नियमः। यथा देवतंनियोगः स्थमायनपक्षे यूपेपडैकादशिन्यांगलगलम् तथा यूपैकादशि न्याप्रतियूपंम् प्रोक्षणादिप्रत्येक मध्यस्तादुपोक्षणांत्तमने कपाश्रुकाहेतूनाम् ग्रहणां तं कृत्वा इंद्रं होत्रा-दिति होतृ वरणम्[1]। ततो नेष्टाध्वर्योः। ततोध्वर्यु[2]र्यजमानां तं। यजमान वस्पो सुन्वन्यजमान[3]इतिप्रयोगः। यथाप्रवृत्तहोमः पुनः पाशुक वरणादि। पशवेकादशि न्यामोग्नेय पूर्वक नयनम्। स्तोमायने युगपत्। अधस्ताशृण मेकम् संज्ञपयान्वगमतामिति पशु द्वये प्रैषः। संज्ञपयान्वगमन्निति वहुपशोः। परिवशव्ययो र्नियमः। संज्ञसोयशू इति पशु द्वयप्रैषः। संज्ञसाः पशव इतिबहुप शोः। नियोजनी द्वय प्रेक्षमे माहिर्भूतंमा-पृदाकुरिति। बहुपशोर्माहिर्भूतमापृदाकुरि तिनेष्टः पत्नीमुदानपेत्यत्र पत्याः प्रतिपशु शोधनं। तत एकैकस्य पश्चात्पशो विमोकांतम्। अनेक पाशुके उत्तान करणादि मूलां जनां तमेकैकस्य। अन्तेतृणापासनम् वपोत्स्वेदनादि परिवासनांतिमेकैकस्य। शृतेप्रचरेति द्वयोः

---

1- का० औ० 9/8/7

2- अश्विनावध्वर्यू आध्वर्यवात्। 9/8/8

3- "अग्निर्हं दैवीनामि" तियजमानम्। 9/8/14

श्रृताः प्रचरेति बहुषु। वपाद्वयेप्रियाभ्यां धामाभ्यांप्रिय सद आसदित मित्या सादनं बहुषुपि येधांमभिः प्रियं सदमासीदतेतिद्विर मिधारणंवपायांप्रस्थित शब्द सहित/ प्रैषः। वपाश्रयणी बहुत्वे स्वाहाकृता उर्द्धनभसंमारूत गछत। इत्प्रासनंमार्ज नाति-धिष्ण्योत्पस्थानं। सदो भिमर्शनंद्वार्यथोर भिमृूनिं। यजमानस्यक्षुणा मि मंत्रण। ऋत्विणां धल्ष्यान्नांच। प्रियै धांमभिः प्रियंः सदआसीदतेति सवनीया सादनम्। उत्कटे वाजिन स्यसर्वालंभः। कत्तत्वान्नात्मालंभः। यज्ञेषाधाज्य भागों। प्रातः प्रातः सवस्येत्युने वाचनं। जुह्वासुस्तारः पुरोडाशादीनांद्विर्द्विर वदानादि। प्रत्यु पस्तीर्याभिधार्य उपभृति चावद्यति पशु पुरोडाशवत् हुत्वोभयां प्राशित्रादि भागग्रहणंतं। होतृधिष्ण्येन इडानिधानंद्विदेवत्ययागाः। ऐंद्रवा यवादानं अनुवाचनम्।

प्रतिप्रस्थानुद्रोर्ण कलशात् आदित्यपात्रेण ग्रहणम्। परिमार्जनम् योन्यासादनम् आश्राव्यप्रैषः। होमोयथा वषट्कारं। प्रतिप्रस्थातुरनुहोम उत्तरार्द्धे।[1] आदित्यस्थाल्यांप्रतिप्रस्था ुः शेषा सेकः। एवं मंत्रावरूणों आशिंचनेचा। प्रतिप्रस्थातुस्तृतीय भासिच्यतेनेवा पिधानम्। उन्नेतुकन्नीय मानेभ्योनुवाच नं उत्तरवेदिमपरेण नवसु चमसेपून्नयनम् प्रत्येकं शुक्रादुपस्तीर्य उन्नीया निधारणं। शुक्रामंथिप्रचारे शुक्रमध्वर्यु रादत्ते मंथनं प्रतिप्रस्थात्त[2] प्रोक्षिता ऽप्रोक्षितयोर्यूप शकलयोरादानाम् प्रोक्षिताभ्यामपिधानम्। अपमार्जनम्प्रोक्षिताभ्याम् उदकोपस्पर्शन मुभयोः निष्क्रमणम् अपरेणोत्तर वेदिमरत्रिसंधा नम् उत्तरवेदिश्रोण्यो रविसृजन्तो र्निधानम्। दक्षिणयूपदेशां। प्रतिगमन-मध्वर्योः। उत्तरंप्रतिप्रस्थातु। यूपमपरेणारत्रिसंधानम्। मशाक्तोपूर्वेण। अप्रोक्षित योर्निरसनाम्। उदकोपस्पर्शनम्। आहवनीयोप्रोक्षितयोः आशनम्। अध्वर्योरेवा छिन्नस्येतिजपित्वा आश्राव्य प्रैषः। यूपत्रभितो वस्थितयोः प्रत्यङ्‌ मुखयोर्होमः। प्रथममध्वर्योः। तुमनु प्रतिप्रस्थानता [3]। तदनंतरं चमासाध्वर्यवः [4]। प्रतिपषट्कारं।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का० श्रौ० 9/11/1

2- का० श्रौ० 9/11/4

3- शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता। 9/10/2

4- चममाध्वर्यवश्च। - का० श्रौ० 9/11/2

हुत्वा प्रैतुहोतुश्चमसइतिप्रैष: ।[1] एत्यप्रतिप्रस्थातु: शुक्रपात्रे शेषावनयनम्।[2]
तमध्वर्यु होतृ चमसेवनयांतम् ।[3] प्रशास्त्रब्राह्मणाछंसियो तनेष्ट्रग्रीच्चमसेषू
न्नयनम्। आश्राव्यप्रशास्त्रादि प्रेषणं प्रशासृपूर्वकोयाग: । प्रथममुत्तमं वाहु-
त्वात् पत्त्विति जय:। होतारंप्रत्त्यङ्‌·पविशति। द्विदेवस्य भक्षणे ऐन्द्र-
वायवमादायोपहवप्रार्थनम्। उपहूतस्यमुखस्यढौकयित्त्वाभक्षणम्। गात्रालंभनं।
शेषाव नयनम्। होत्राभक्षितेपुनरध्वर्यो भक्षणम् । गात्रालंभनं हेतृ चमसे शेषा-
वनयनम् । ततोहोतुर्भक्षणम् ।[4] शेषावनयनम् । मैत्रावरुणादानम् । उपहवप्रार्थ
नम् । चक्षुषोर्ढौकयित्वाभक्षणम् । मात्रालंभनम् । शेषावनयनम् । ततोहोतुर्भक्षणम्।
शेषांवनयनम् । आश्विनदानम् । उपहव: । शिर: परिहार्यश्रोत्रयोर्ढौकयि-
त्वाभक्षणाम् । गात्रालंभनम् । शेषावनयनम् । होतुर्भक्षणम् । शेषावनयनम् ।
ऐंद्रवायवेपुरोडाशप्राशनम् । पयस्यां मैत्रावरुणे। अश्विनेधाना: । प्रति-
प्रस्थातुस्तेषां दक्षिणस्य हविर्धानस्यो त्तरेवर्त्तमनिनिधानम् । इडासमर्पणम्।[5]
चमसिनां चमसोद्यमनम् । न सवनीयाना चतुर्द्धाकरणम्।

सोमभक्षेउपहूयभक्षयित्वा गात्रालंभनम्। होतृचमसभक्षेमध्वर्यु: प्रथमं
प्रतिप्रस्थातार होतारं च पृष्ट्वा भक्षयति प्रतिप्रस्थाताध्वर्यु होतारं च
पृष्ट्वा भक्षयतीति सर्वत्र सम्बन्ध: । होताध्वर्युप्रतिप्रस्थातारं च पृष्ट्वा
भक्षयति प्रतिप्रस्थाताध्वर्युहोतारं च पृष्ट्वा भक्षयतीति सर्वत्र सम्बन्ध: ।
होताध्वर्युप्रतिप्रस्था तारं च पृष्ट्वा भक्षयति । ब्रह्म चमसे होता ब्रह्माणं
पृष्ट्वा भक्षयति ब्रह्मा होतारं पृष्ट्वा भक्षयति। उद्गातृ चमसे होता
उद्गातारं प्रस्तोतारं प्रति होतारं च पृष्ट्वा भक्षयति । पूर्ववद्धारनिमित:।

---

1- का०श्रौ० 9/11/3..

2- तत्रैव, 9/11/4.

3- तत्रैव, 9/11/11.

4- एवं सर्वत्र सोमानां भक्षणम् । - का०श्रौ० 9/11/8 ;
होतृचमसेन सोमं भक्षयत: । - तत्रैव, 9/12/3 .

5- आग्नी ध्रे हविर्यज्ञर्त्विज इडां प्राश्नन्ति । - तत्रैव, 9/12/16.

तयोः पूर्वतरंहोमा भिषवनिमित्तोयत्रसंभवतितत्रभक्षः । उद्गाताहोतारं प्रस्तोतारं प्रतिहर्तारं च पृष्ट्वाभक्षयति। प्रस्तोता होतारमुद्गातारं प्रतिहर्ता च पृष्ट्वाभक्षयति। प्रतिहर्त्ता होत्तारमुद्गातारं प्रस्तोतारं च पृष्ट्वा भक्षयति । यजमान चमसेहोतायजमा नं पृष्ट्वा भक्षयति। यजमानो होतारं पृष्ट्वा भयति। पुनरभ्युन्नी तेषु होता प्रशास्ता रमध्वर्यु च पृष्ट्वा। प्रशास्ताहोतारमध्वर्यु च पृष्ट्वा होता ब्राह्मणाछंसिनं अध्वर्यु च पृष्ट्वा । ब्राह्मणाछंसीहोतारमध्वर्यु च पृष्ट्वा । होतापोत्तारमध्वर्यु च पृष्ट्वा । पोताहोतारमध्वर्यु च पृष्ट्वा । होता नेष्टारमध्वर्यु च पृष्ट्वा नेष्टाहेता रमध्वर्यु च पृष्ट्वा होता अग्नीधमध्वर्यु च पृष्ट्वा आग्नीधोहोतारमध्वर्यु च पृष्ट्वा । होतास्वकीय चमसे समाख्यानिमित्तं अध्वर्यु प्रतिप्रस्थातारं च पृष्ट्वा भक्षयति। पुनरभ्युन्नीतेषु अध्वर्योर्होमार्भिषवनिमित्तोभक्षः प्रशास्त्रादीनां चवषट्कारनिमित्तोभक्षः, तत्राध्वर्य प्रशास्तृ चमसे होतारं प्रशास्तारं च पृष्ट्वा भक्षयंति । प्रशास्ताहोतारमध्वर्यु च पृष्ट्वा स्वकीय चमसे भक्षयति। वषट्कार समाख्ययो स्तंत्रेण भक्षणम् । एवमेव ब्राह्मणा छंसियोतृनेष्ट्रग्नीधाम ध्वर्युणसहभक्षणम् । अध्वर्युहातारं ब्राह्मणाछंसिनं च पृष्ट्वा भक्षयति। ब्राह्मणाछंसीहोतारमध्वर्य च पृष्ट्वा स्वकीय चमसे वषट्का रसमाख्ययोस्तंत्रेणभक्षयति। अध्वर्युहोतारं पोतारं च पृष्ट्वायोत्तृ चमसे भक्षयति। पोताहोतारम् ध्वर्यु च पृष्ट्वा स्वकीय चमसे वषट्कार समाख्ययोस्तंत्रेणभक्षयति। अध्वर्यु होतारं नेष्टारं च पृष्ट्वा नेष्ट्र चमसे भक्षयति नेष्टाहोतारमध्वर्यु च पृष्ट्वा स्वकीय चमसेवषट्कार समाख्ययोस्तंत्रेणभक्षयति। अग्नीध्रचमसे अध्वर्युहोतारमाग्नीध्रं च पृष्ट्वा भक्षयति ।[1] अग्नीध्रो होताद्वनिस्य पश्चा दर्क्षचमसनिधानम् । पुरोडाश शकलमादाय समुपहूताः स्मइत्युक्तोत्थानम् । अछावाकाय समर्पयतः प्रैषः ।[2]

---

1- का०श्रौ० 9/13/21-24.

2- तदेव, 9/14/15-16.

उपोस्मानिनिति‌वत्त्पछावाके अध्वर्युर्होतारमाहो पहव मयं ब्राह्मणा इछतेत होतरूपह्वयस्वेति। उपहूते उन्नीयमानायानु वाचनम् । अछावाक चमसोन्नयतद्रोणकलशात् । तुर्पंत्त्विति जपः । आश्रान्याछावाक पजेति प्रैषः । यागः । अत्रवाजपः । अध्वर्युछावाकपोरछावाकयोरछावाक चमसेक्षणम् । आप्यायनम् । आग्नीध्र चमसात्पूर्व मासादनम् । हविर्यज्ञर्त्विजां आग्नीध्रे इडाभक्षणम् । समस्य मार्जनम्। भागपरिहरणम् । पत्नी चान्पछालायां शालिपूपादि भक्षयति। यजमा नस्यापि यहछ्या सवनीयशेष भक्षणम् । ऋतुग्रह-प्रचारेद्रोणकलशा दुपयागृहीतोसि मधवेत्वेत्यध्वर्यु प्रतिप्रस्थात्रोर्व्यत्या सेन मंत्रः। ग्रहणं च । प्रथमोत्तमयोर्युगपद्ग्रहणम् । परिमार्जन । नसादनम्। निष्क्रमणं तमध्वर्यु प्रतिप्रस्थाता पात्रेण परिगृह्णाति। प्रविशतं च । ऋतुना प्रेष्येतिषड्प्रैषः । रूतुभिरिति चतुर्षु । पात्रमुखे विपर्यास्तेन च ग्रहणम् । उत्तमयोरूतु नेति। सशेषहोमः । पात्रमुखविपर्यासश्च पक्षे सर्वेक्षां सशेषहोमः । अन्य तरस्मिन शेषकरणम् । रिक्तेवप्रतिप्रस्थातुः ऐंद्राग्न ग्रहणम् । परिमार्जनम् । प्रदक्षिणा वर्तनम् । सादनम् । भक्षाहरणम्। रूतुग्रहभक्षे अध्वर्युर्होत्रासहभक्षयति होत्रादीन्यथाक्रमेणपृष्ट्वा। होताध्वर्यादीनपृष्ट्वा पोत्रासहप्रतिप्रस्थाता नेष्ट्रा सहाध्वर्युः । आग्नीध्रेणसहप्रतिप्रस्थाता सहाध्वर्युः प्रशास्त्रा सह प्रतिप्रस्थाता। पात्रमुखनिपर्यास्वेनहोत्रा सहाध्वर्युः । पोत्रासहप्रतिप्रस्थाता। नेष्ट्रासहाध्वर्युः । अछावाकेनसह प्रतिप्रस्थाता। पुनः पात्रमुखविपर्यासः । अध्वर्योर्होतुश्च भक्षणम् । पुनःप्रतिप्रस्थातुर्होतुश्च । प्रागुत्तमयोः सर्वहोम-पक्षे अयमेव भक्षः । सर्वभक्षेषु यथाक्रमं प्रश्नः पात्रनिर्हरणम् । होतुःपुर स्तात्प्राङ्मासनम् । अभिहृतस्या वृर्त्यिप्रतिगरः शस्त्रातेर्तु मित्युक्त्वाप्रदक्षिणार्वतन। सशस्त्रेषु सर्वेष्ववमेवधर्मः । ऐंद्राग्नादानम। अश्राव्योच्छ्राय जसोमस्येति प्रैषः वषट्कारानुवषट्कारयोर्होमः । प्रदक्षिणा वर्तनम् । हूयमाने चमसिनां चमसकंपनम् ऐंद्राग्न्यस्याध्वर्यु होतृ भक्षणम्। चमसिनाभ्यां मसाधारण्यादनुपहूयैव भक्षणम्। चमसिनां चमसाप्यायनम्। नाराशंसानम्। ऐन्द्राग्नपात्रनिर्हरणम्। खरेसादनम्।

वैश्वदेव निर्हरणम्। खरेसादनम् । वैश्वदेवग्रहणम् । शुक्रपात्रेण द्रोणकलशादन्वारब्धेवा । वाग्यमनम् । परिमार्जन । प्रदक्षिणा वर्त्तनम । सादनम्।[1]

शुक्रस्यपूतभृत्यासेकः द्रोणकलशपवित्रयोजनं[2] पुशुपुरोडाशपूर्वकः सवनीयनिर्वापाग्नीध्रः।[3] तत्रवाचस्पतिप्रैषः ।[4] पात्रासादनम्। शूर्पाग्नि होत्र हवणि। अर्धवत्कपालानि। कृष्णाजिनो लूखलमुशलम्। पात्रीचेप्तत्व्येव । शाबोपवेषः । उपसर्जनीपात्रम्। पुरोडाशपात्र्यार्थवत्त्यः । शृतावदानमौक्षम्। शूर्पादानादि आप्त्यां नमुक्तं पयस्या वर्त तत्तंवंद्धपात्र संमार्गः । पशुविश सनादि उखाप्रपक्षेणांतम् । एकोद्वौ वह्वो वात्रिः प्रच्यावयतात्रिः प्रच्युत्तस्य हृदयमुत्तमं कुरुतादित्येव मंत्त प्रैषः हृदयं हृदये हृदयानीवा। तृणाभ्यां ग्रहमुपस्पृशयस्ते। त्रोपाकरणम्। शस्त्रप्रतिगरादि ऐंद्राग्नवद्भक्षणान्तम्।[5]सर्वभक्षाश्चमचा इति विशेषः मार्जालीये पात्रप्रक्षालनम्।[6] ग्रहपात्रस्य चमसानां च । उत्तरवेदिमपरेण चमसानां निधानम् । उक्थ्यविग्रहणम् । वाग्य मनं। परिमार्जनम्। प्रदक्षिणा वर्तनम् । तूष्णीं सादनम्। प्रशास्तृचमसपूर्वकं च मसोन्नयनम्। स्वस्थानेएवप्रशास्तृ चमसः । तृणाभ्यां ग्रहोपस्पशनम्। स्तोत्रोपाकरणम् । शस्त्र प्रतिगरः । शस्त्रांते प्रदक्षिणा वर्त्तनम् । ग्रहोपादानम्। आश्रामोच्चशायजसोमाना मिति प्रैषः । वषट्वाशानु वषट्वारयोर्होमः । चमसानां च प्रदक्षिणावर्त्तनम। ग्रहशेषस्यप्रशास्तृ चमसे आसेकेः । खरे पात्रस्थापनम्।

---

1- कात्यश्रौ० 9/13/1-36; 9/14/1-20.

2- शुक्रंपूत भृत्यासिच्य द्रोणकलशपवित्रयोजनम् । - तत्रैव, 9/14/2.

3- तत्रैव, 9/14/3.

4- तत्रैव, 9/14/4.

5- एवं धुर्येषु सर्वत्रा । - तदेव, 9/44/5.

6- सर्वभक्षाश्चमसाः। मार्जालीये पात्रप्रक्षालनम्। - तत्रैव, 9/14/6-7.

अध्वर्यो: प्रशास्तृ चमसे होमाभिषवनिमित्तं भक्षणम् । प्रशास्तुर्वषड्वार निमि-त्तम्। होतृचमसादिषु प्रशास्तुर्वषड्वारनिमित्तोभक्ष: । इतरे चासमाख्या निमित्त: । सर्वेयथाक्रमं वषड्वात्तारं पृष्ट्वा भक्षयंति। पुन: प्रशास्तृचमसे प्रशास्तु रध्वर्यु पृष्ट्वा समाख्या भक्षणम् । पात्रप्रक्षालनम्।[1] उत्तरवेदोचमस वितननिधानम् । एवं प्रतिप्रस्थातुरुत्तरौ द्वौ विग्रहौ। प्रथमे ब्राह्मणाछंसी। द्वितीयेच्छावाक: । यस्यविग्रहस्तस्य पूर्वचमसोन्नयनम्। तत्रैव ग्रहशेषासेक: । भक्षऽक्त:।[2] प्रशास्तृवद्। अछावाक विग्रहात्पूर्व सोमोपावहरणम्। वसतीवर्यद्धा-सेक:।[3] एकधनार्द्ध च चरित्त्वोत्तमेन चमसानां स्वस्थानेस्थापनम्। सर्पणा प्रैष:[4] सदेभिमर्शनादिधिष्णोपस्थानादि वासर्पणं होतृ चमसे वसतीवरी: कृत्वा-यजमानाय समर्पणम्।[5] ग्रावस्तुते उष्णी षमर्पणम्।[6]उदकम्। हिरण्यम्। ग्रावाण: होतृ चमस: दशापवित्रं परिहृयवा । एतेषामभिषवाण्यर्या नामीषांत रेणाहरणम्। पाणिप्रक्षालनम्। हिरण्य बंधनम्। अग्न्यादानम्।[7] वाग्यमनम्।[8] निग्राभ्या वाचनम्।[9] आत्तमभिमानम्। मितालंभनम्। निग्राभ्यां सेचनादित्रिपर्यायो-स्त्रयोभिषवा: । विलंत्तितत्तूर्णा: पर्याया: । अभिषवादोमा भेरित्तिप्रहरणम। शेषर्कमहाइहा इति। उत्तमाभिषवमध्यमेपर्याये वृहद्वृहदिति प्रयोग: विशेषो-पदेशात् सर्वत्राभिषवादो प्रथमे पर्यायेमाभेरिति प्रहरणम् । द्रोणकलशप्रोहरणम्।

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 9/14/6-7.

2- प्रसूता सर्प ं प्रसूता सर्पणम् । - तत्रैव, 9/14/20.

3- का०श्रौ० 10/1/2.

4- सर्पणादिमाध्यन्दिनम्। - तत्रैव, 10/1/1.

5- तत्रैव, 10/1/2.

6- तत्रैव

7- अंशादानप्रभृतित्रिपर्यायानभिषवान् करोति । - तत्रैव, 10/1/3.

8- उपांशुसवनस्यानिङ्‌गन श्रुत्ये। - तत्रैव, 10/1/4.

9- का०श्रौ० 10/1/6.

पवित्र विनन नम्। शुक्रप्रभृति चतुर्णां ग्रहणम् ।[1] उक्थाद्यापूर्वमरूत्व तीय ग्रहणम्।[2] षोडशयत्र चेद्ध्रुवध्या दुत्तरो मरूत्त्वतीयो मुष्टिग्रहणम् । समन्वारब्ध निष्क्रमणम्। विप्रुद्धोमः । अत्रवासमन्वारंभः । तृणाद्यानप्रातः । सवनाद्दुच्चतर मुद्ग्गमनम्। चात्त्वाले तृणप्रासनम्। अन्यद्वुःद्गाहणामग्रतश्च । सदसिपवमा नोपाकरणम्।[3] स्तूयमान आसेकः । स्तोत्रां ते प्रैषः।[4] तत्र पशूनेहीत्यपकृष्य अस्यस्थाने दक्षिणा उपावर्त येति । सप्रवर्ग्येदधि[5] धर्मायिदध्याहरद क्षिणाउपावर्त्तयेनिधिष्णविहरणम्। अनुपृष्ठ्वा वर्हिस्तरणम् । दधिधर्मायि दध्याहरणम् । दक्षिणोपावर्त्तनम्। पशु- पुरोडाशपूर्वकं सवनीयानां प्राणदानं। दधिधर्मपूर्वकमपरे इच्छन्ति।[6]पृथगेवपश्चाद ध्वर्योरित्य परे । अग्नि होत्रहवण्याः प्रोक्षणम् । संमार्गः । प्रतपनम्। संप्र- दाये तु अग्निहोत्र हवण्याः संस्कारान्नेच्छंति।[7] दधिधर्मस्य प्राणदानम्।[8] आसादनम्। आलंभः । सदसः पुरस्तादग्निहोत्र हवण्यां शाखा पवित्र करणं उपस्तरणं दधि धर्मस्य द्विरवदानं प्रत्युपस्तरणम् । होतर्वेदश्चेति प्रैषः ।

---

1- शुक्रप्रभृति चतुर्णां ग्रहणम् । - का०श्रौ० 10/1/11.

2- तत्रैव, 10/1/13.

3- स दसिपवमानो पाकरणम् । - तत्रैव 10/1/16.

4- तत्रैव, 10/1/18.

5- प्रवर्ग्येदधिधर्म। - तत्रैव, 10/1/19

6- तत्रैव .

7- तत्रैव, 10/1/20.

8- प्राणभक्षं वा दीक्षा । - तत्रैव, 10/1/24.

वाचा तेश्रान्तं हविरित्युति छन्नाह । आश्राव्य इदं दधिधर्मस्य यजेति प्रैषः।[1] प्रतिवषड्वारं होमः । धर्मर्त्विजांसयजमानानां उपहूयशेष भक्षणम्।[2] प्राण भक्षो वा। चात्वाले मार्जनम्। आसादनादि पशुपुरोडाशयोगो[3] भाग-परिहरणां तम् । सवनीयासा दनादिहोतृधिष्ण्येनिधानां तम् । उन्नीयमान प्रभृति चमसनिधानां तम् । उन्नयनं दशसु । यथासूत्रं प्रैषः । नद्विदेवत्यभक्षः शकलसंवादश्च । आग्नीध्रीह विपश्चर्त्विजां इडा भक्षणम्। संस्कृत्याज्यं चतुर्गृहीत ग्रहणम् । तत्र वाससिबध्वा हिरण्या बधानम्। समिधमाधाय शालाद्वार्ये होमः । चित्रं देवानामितिद्वितीयं। पूर्वसंस्कृतेनाज्येन आग्नीध्रीये एकगृहीतेन अग्ने नयेति। समित्पूर्व कोणात्रगवामति क्रमणम् । मंथादीनां च नयनम् । पश्चेसुब्रह्मण्या प्रैषः आग्नीध्रांतं यजमानस्यदक्षिणानुगमनं। सदोनुगमनम्। सदस्यानां प्रेक्षणम्। आग्नीध्रगमनम्। उपविश्यास्मद्राता इत्त्युत्का अग्नी दक्षिणानां त्तेषोविभागः सप्रतिगृह्यतामित्त्यग्नीधेहिरण्यादिदानम्।[4] आत्रेयाया हिरण्यदानं यथोक्तं। ऋत्विग्भ्यो दक्षिणादानम् । प्रस्तृतेभ्यो दानं मत्त्वा। अप्रतिपिद्वा नां च दत्त्वा ततः प्रत्रि हर्त्रे दक्षिणादानम्।[5] मरुत्वतीयादानम्। अनुवाचनम्। आश्राव्यम्। इन्द्रायमरुत्त्वतेप्रेष्येति प्रैषः । होमः द्वितीयेनर्तुपात्रेण मरुत्त्वतीय गृहणं परिमार्जनम्। प्रदक्षिणा वर्त्तनम्। सादनम्। होत्रध्वर्युभ्यामिरमरुत्त्वतीयशेषभणम्।[6] पात्रप्रक्षालनम्। स्थापनं होतुः

---

1- का०श्रौ० 10/1/22 दधि धर्मस्य यजेति प्रेष्यति ।

2- का०श्रौ० 10/1/23.

3- पशुपुरोडाशेन प्रचर्यपुरोडाशादि करोत्याधिष्ण्यनिधानात । - 10/1/25.

4- वासोहिरण्येददाति । - का०श्रौ० 10/2/8.

5- का०श्रौ० 10/2/9; ऋत्विग्भ्यो दक्षिणा ददाति । -तदेव 10/2/21-36.

6- इन्द्राय मरुत्वतेऽनुवाचयति । - तत्रैव, 10/3/1-7.

पुरस्तात्प्राङ·त्सनम्। आवृत्त्यप्रतिगरः।[1] जनिष्ठा उग्रइत्त्येत्तेस्यां मदामो दैवेति सकृत्प्रत्तिगरः।[2] ऋतुपात्रेणप्रतिप्रस्था तुः कुंठमरुत्वतीयग्रहणम् । परि-मार्जनम् । सादनं अध्वर्योः शस्त्रां ते प्रदक्षिणा वर्त्तनम् । ग्रहोपादानम् । आश्राव्योच्छाशायजसोमस्येति प्रैषः । अध्वर्युमनुप्रतिप्रस्थातुः कुंठमरूत्वत्तीय होमः । चमसानां कंपनम् । प्रदक्षिणा वर्त्तनं होत्रध्वर्युभ्यांमहामरूत्वत्तीय भक्षणम्। प्रतिप्रस्थाता कुंठ मरुत्त्वतीय होमः।[3] चमसानां कंपनम्। प्रदक्षिणा वर्त्तनम्। होत्रध्वर्युभ्यां महामरूत्वत्तीयभक्षणम् । प्रतिप्रस्थाता कुंठमरूत्वत्तीय मनुपहूय एकाकी भक्षयति। पात्रप्रक्षालनम् । स्थापनम् । शुक्रपात्रेण द्रोणकलशा-दन्वारब्धे वामाहेंद्र ग्रहणं वाग्यमनम् । परिमार्जनम् । प्रदक्षिणावर्त्तनम्। सादनम् । शुक्रस्य पूतभृत्यासेचनम्। तृणाभ्यां ग्रहमुपस्पृश्यपावर्त्तध्वमितिपृष्ठो पाकरणम् । अभिषोतारोभिषुणुतेत्त्येवमादिप्रैषः । शुष्काभिषवे[4] अभिषवार्थाता मीषां तरेणाहरणम् । पाणिप्रक्षालनम् । हिरण्यबंधनम् । अडयादानम। वाग्य-मनम। उद्यमनम्। द्वेष्यस्यमनसाभिध्यानम् । ऋजीषमिश्रस्यां शोः प्रहरणम् । त्रिपर्यायोभिषव आप्यायनां तः । निग्राभ्यावाचनम। संभरण्याधंवनीयेव धाया-धूपाहरणम्। एवमपरौद्वावभिषवौ । अद्रिणाचतुर्थ आधवनीये ऋजीषकरणम् । अग्नीध्रः सवनीय निर्वापः ।[5] तत्रवाचस्पति प्रैषः । पात्रासउदनम् । वज्र वर्जं दशगणाः । अर्थवति अनः । पात्री चेदस्त्येव । शाखोपवेषः । उपसर्ज-नीपात्रम् । पंचविला । वारूणार्था पात्री। शृतावदानम्। ग्रहणं सादनां तम् । सोम्य वारूणयोश्च ग्रहणम् । प्रोक्षणीसंस्कारादि आप्त्यांत मुक्तम् । शृता-वदानस्य पात्र्योश्च संमार्गः ।

---

1- का०श्रौ० 10/3/9.

2- तत्रैव

3- तत्रैव, 10/37.

4- ऋजीषमिश्रमेशुमत्रिषुत्वन्ति यथाकथा चाबुदकम्। - तत्रैव, 10/3/13

5- सवनीया अपपस्याः । - तत्रैव, 10/3/19.

संमार्जनप्रतिप्रतिः । आशिरविनयनम्। माहेन्द्रस्यस्तात्रादिशस्त्रां तेग्रहो पादानम् । आश्राव्याहोच्छ्रायजसोमस्येति प्रैषः । प्रतिवषट्वरं होमः । चमस कम्पनम् । प्रदक्षिणा वर्त्तम् । अध्वर्युहोतृभ्यां माहेन्द्रभक्षणम् । चमसिभिश्चमसानाम् । सर्वभक्षाः चमसाः । मार्जालीयेपात्रप्रक्षालनम्। उत्तरवेदीचमसादिरत्ननम् । पूर्वदुस्थ विग्रहणम् । मंत्रमात्रेविशेषः । प्रागछावाकविग्रहाद्सतीवर्यासे कः सर्वः । एकधनशेषस्य च । प्रशास्तः । प्रसूहीति प्रैषः । एहि यजमान नेतिषेषः । अध्वर्या दीनां हविर्द्धानि प्रवेशनम् । पत्याश्चापरेण द्वारेण । द्वारापिधानम् । पूतभृदुपरि संस्रवेभ्य आदित्यग्रहग्रहणम्।[1] अपगृह्यपुनर्ग्रहणम् । कुशांत्तर्द्धानादध्नाश्रपणम् । उपांशु सवने न मिश्रयणम् ।उपांशु सवनस्यौत्रे त्रैसम प्यर्णम् । आसृजग्राह्क इति प्रैषः । आधवनीये चमसेवा सोम वतिग्रात्को बधायोन्नेतुरे वग्रात्कां स्थापनम्। ग्रहापिधानम्। द्वारापवरणम्। अन्वारब्धस्य निष्क्रमणम् । अनुवाचनं प्रैषोहोमः । प्रतिप्रस्थातुश्च संस्रवयोः।[2] उन्नेत्तुश्चोदं चनेत चमसेन वा आधमनीयात्पवित्रे आसेकः। तत आग्रयणं ग्रहणं पूर्ववत ।[3] उक्थ्यादिषुसंस्थासुं उक्थ्यग्रहणम्।[4] पूतभृत्याधिसंसेकः ।[5] पत्न्यास्तदवेक्षणम्।[6] समन्वारब्धनिष्क्रमणादि माध्यंदिनवत्।[7] दधिधर्मा यदध्याहरदक्षिणा उपावर्त्ततेत्यस्यस्थानेपशोसंवदस्वेतिप्रैषः ।[8] सूयमाने आधमनीयं पूत्तभृत्त्या सिंचति प्रवित्र मंतर्द्धाय। तत्तत एवं कुंभेप्रपूजीकरणम् । यथान्युप्तं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 10/4/3.

2- इत्याप्रतिप्रस्थात्रेप्रयच्छतिशेषौ । - का०श्रौ० 10/4/12.

3- का०श्रौ० 10/5/1.

4- उक्थ्यं चोत्तरेष्वेकया। - तत्रैव, 10/5/2.

5- का०श्रौ० 10/5/3.

6- "श्रदस्मै नर" इत्येनमवेक्षतेपत्नी। - तत्रैव, 10/5/4.

7- का०श्रौ०, 10/5/5.

8- पशोसंवदस्वेत्युपचयस्थाने।- तत्रैव, 10/5/6.

विहरणम्। अनुपृष्ट्यां वर्हिस्तरणम् । सवनीयानां प्राणदानम् । सोम्यवारुण-
योश्चादितीयशमित्रनुशासनादि मार्जनां त्तविशेषः । पत्त्वापृष्ठादिपरस्पर
सं वादां त्तं प्रतिप्रस्थातुः । अध्वर्योर्हृदयाभिघारणादि आलंभनां तं अनेक
पांशुके अंतसौ विष्टकदर्थय वदानग्रहणम् । हुत्वा वासां पात्रांतरेशेषावनयनम्।
हविप्रस्थितं प्रेष्येति विशेषः । समासिच्यदिग्व्याघारणम् । सवनीद्वासाद-
नादि होतृधिष्णे निधानम् । तं सवनीय स्विष्टकंदते संचराभ्युक्षणस्यानियमः।
उन्नीयमानप्रैषः । चमसोन्नयनम् । होतृचमसंगृहीत्वाश्राव्यप्रैषो यथोक्तः।[1]
एवं चमस निधानांतम्। नीविकरणं पितृयज्ञे पुरोडाश मात्रादानम्।[2] विभज्य-
स्वचमसेषु यजमानपितृभ्यः पिंडदानम्। येषां चमसान विद्यन्ते ते यथा सन्निहि-
तेषु ददति । अत्र पितर इति जपः ।

आतमनादुदङ्•सनम्। आवृत्त्यामीमदं तेति जपः । नीविस्रंसनम् ।
अंजलिकरणम् गृहान्न इति जपः । सूत्रदानम्। इडाभक्षणम् । समस्य मार्जनम् ।
पवित्र प्रतिपत्तिः । भागपरिहरणम् । सावित्र ग्रहणम्।[3] परिमार्जनम्। न सादन।
अनुवाचनम्। प्रैषो यागः । तेनैवाऽभक्षितेन महावैश्व देवग्रहणं पूतभृत्तः।
परिमार्जनम्। प्रदक्षिणा वर्त्तनम् सादनम्। । होतुः पुरस्तात्प्राङ•ा सनम्।
आवृत्यप्रतिगरः ।[4] एकयाचदशभिश्चेतिशस्यमानेदिदेवत्यानिप्रतिप्रस्थाता
प्रक्षाल्य खरे करोति। प्रचावायज्ञो रिति तिसृषु ऋक्षु अर्द्धेषु मदामो दैवेति
त्रिः प्रतिगरः।[5] प्रदक्षिणावर्त्तनम्। गृहोपादानम्। आश्राव्योक्थ्यशाय
जसोमस्येति प्रैषः । यागः । चमसकंपनम्। अध्वर्युणाहोत्रा च वैश्वदेव भक्षणम्।
चमसिनः स्वस्वचमसेषु भक्षयंति पात्रप्रक्षालनम्। स्वस्थाने स्वस्थानम्। सौम्या-

---

1- का०श्रौ० 10/5/9.

2- तत्रैव, 10/5/11.

3- देवाय सवित्रेऽनुवाचयति । - तत्रैव, 10/6/1.

4- प्रचावा यज्ञैरित्येतासुमदामो दैवेति त्रिप्रतिगरः । - तत्रैव, 10/6/5.

5- तत्रैव.

सादनम्। आलंभः । आप्यायतश्च तुर्गृहीत ग्रहणम्। अग्निंधृतस्य यजेति प्रैषः।[1] होमः सोमं सौम्यस्ययजेति सौमस्य यागः।[2] नक्षत्राभ्यंगः पुनरूपरिष्टादाज्यस्ययागः तत्रप्रैषोविष्णुं घृतस्य यजेति मन्यतरत्तोवा आज्ययागः । तत्र प्रैषेऽग्नाविष्णू घृतस्य यजेति विशेषः । सुग्निधानम् । सौम्ययागोत्तरकालें संचराभ्युक्षणं केचिदिछंति तदयुक्तम् । नहि संचराभ्युक्षणं सौम्ययागांकं किन्तु स्विष्टकृदंगम्। प्रकृतौ स्विष्ट कंदंते संचराभ्युक्षणं दृष्टं विकृता वपीह चोदकप्राप्तंसवनीय पुरोडाशस्विष्ट कृदंते कर्त्तव्यम् । एवं प्रकृतिवद्विकृतिः कृत्ता भवति। न चसौम्यस्यस्विष्टकृदस्ति । येन सौम्योतरकालें संचराभ्युक्षणं क्रियते। तस्मात्सवनीयपुरोडाशस्विष्टकृदंते संचराभ्युक्षणस्य नियमः । एवं च कृत्वा अनेनैवन्यायेन अतिरात्रे अश्विवतां ते संचराभ्युक्षणस्याभावः । आज्य मासिच्योदगात्रे सौम्यप्रदानम्। तच्चाज्यं लौकिकम् । धिष्णव्याधारणम् । पुनः पश्चादाग्नीध्रेये तूष्णीमिष्ट्या।[3] प्रतिप्रस्थातुः पात्नीव्रतग्रहणम्।[4] कुशांतर्द्धानम्। प्रचरणी शेषेण श्रयणम् । परिमार्जनं आश्रावणाद्यध्वर्युप्रैषः । उत्तरार्द्धेहोमः । आग्नीध्रगमनम् । उपहवप्रत्त्युपहवौप्रैषाश्चाग्नीधीय एव। अग्नीन्नेष्टु स्थस्थ मासी देति प्रैषः । प्रभावयेत्त्पुनाआग्नीध्रस्यनेष्टु स्थस्थ उपवेशनम्। उभाभ्यां भक्षणम्।

अग्नीध्रः पात्र प्रक्षालनम्।[5] खरेकरणम् । होतृ चमसादीना मुन्नायनम्। नेष्टुः पत्न्या नयनम्। शिरसः प्रोर्णवनम्।[6]होतृ चमसमुपस्पृश्यस्तो त्रोपाकरणम्

---

1- आग्नीध्रीये पुनः पश्चादिच्छन् । - का०श्रौ० 10/6/15.

2- आपात्रप्रक्षालनात्कृत्वा सैम्येन चरित । - तत्रैव, 10/6/7-14.

3- आग्नीध्रीये पुनः पश्चादिच्छन् । - तत्रैव, 10/6/15.

4- का०श्रौ० 10/6/16-22.

5- अग्नीत्प्रक्षाल्यपात्रं खरे करोति । - तत्रैव, 10/6/25.

6- प्रोर्णुते चेच्छन्नुदगातृवत । - तत्रैव, 10/7/2.

नेष्टुपत्न्युद्गातारमीक्षयेति प्रैषः ।[1] प्रतिहिंकारमीक्षणम् । प्रतिनिधन-पूर्वासिकः । एवंद्विरपरं । ईक्षितावागमनम् । सम्प्रतिगरः । स्वादुः किलीयासुपक्षे महामोदवेति । एवानमिन्द्रो मघवेति शस्यमानेहोतृ चमसेप्रति-स्थातुर्ध्रुवा वनयनम्। यजमानस्य चमसे वैश्वानरस्यपक्षे वनयनम्। शस्त्रां तेनात्र प्रदक्षिणा वर्त्तनम्। अग्रहत्वात्। चमसादानम्। उच्छ्रायजसोमानामिति प्रैषः। चमसहोतः । नात्र प्रदक्षिणावर्तनम्। अग्रहत्वात्। सशस्त्रेषु पुनः सर्वेषु ग्रहेषु अस्ति । अध्वर्यु होतृभ्यां होतृ चमस भक्षणम् । होतुरन्येषु चमसेषु ब्रह्म चमस पूर्वमाग्नीध्र चमसा तं वषट्कारनिमित्तं भक्षणम् । इत्तरेषां समाख्यानि-निमित्तं भक्षणम् । होतुस्वकीय चमसेऽध्वर्यु पृष्ट्वा समाख्या भक्षणम् । पात्र प्रक्षालनम्। प्रशास्तः पशुहीति प्रैषादि सर्पणां तम् । तत्उल्मुकसमासादिपक्षेषोऽशियागः । तत्र चमसोन्नयनम् । स्तोत्रोपाकरणम्। शस्त्रां त्ते प्रदक्षिणावर्त्तनम्। ग्रहोपादानम्। आश्राव्योच्छ्रायजसोमानामितिप्रैषः । वषट्कारानुवषट्कारयोर्होमः । चमसानां च । प्रदक्षिणावर्त्तनम्। ग्रहोपादानम्। आश्राव्योच्छ्रायजसोमानमिति प्रैषः ।वषट्कारानुवषट्कारयोर्होमः । चमसानां च । प्रदक्षिणा-वर्त्तनम्। ग्रहस्याध्वर्युहोतृभ्याभक्षणमिदं द्रह्च सम्राडिति। होतुः स्वकीय चमस-पूर्वकं सर्वचमसेषु वषट्काकर निमित्तोभक्षः । इत्तरेषां समाख्या भक्षः । पुनः स्वकीय चमसेहोतुः समाख्या भक्षणम्। पात्रप्रक्षालनम्। चात्वालदेशेस्थापनम्। उक्थासंस्थ यज्ञायज्ञियादनंतरं उक्थ्यविग्रहणानि। त्तदंतेपाक्षिकः षोडशी। शुक्र षोडशिनि तृणहिरण्योपस्थानाभावः । उल्मुकसमासादिधारानुयाजां तंपशुवत्। आग्नीध्रीयाद्वाहोतृधिष्ण्ये गारस्थापनम्। अनेकपाशुकेस वं गुच्छंप्रेद्धोमः पयस्या पक्षेस्वरूहोमः । यूपैकादशान्यामध्यम वर्ज वहुयूपेदिवं वोधूमा गछन्तु-स्वज्योर्तिः पृथिवीं भस्मना पृणत स्वाहेति । व्यूहनादिधुरिनिधानां त्तं पाशुकं यथोक्तो वाजिन यागः । विमुच्यस्रुचौ द्रोणकलशेहारियोजन ग्रहणं[2] कुशांत्तर्द्धानम्। धानाभिः श्रयणं परिमार्जनम्। मूर्द्धनिकृत्त्वा उन्नेतु रनु वाचनादि। आश्राव्यप्रैषः ।

---

1- का०श्रौ० 10/7/3.

2- तत्रैव, 10/8/1.

वषट्कारानुवषट्कारयोर्होमः।[1] पक्षे सर्वस्य । असर्वहोमपक्षेभक्षाहरणम्। उन्नेतुर्होतुश्च भक्षणम् । उत्तरवेदौ सदसिवाधानाविलाभः । धानावघ्राणम् । सदसि उत्तर वेदौ वा निवापः । शाकलाधानम् । पूर्ण चमसावमर्शनम्। तुष्णी। मुखालंभनम्। अग्नीध्रेदधिभक्षणम् । वेद्यालंभः। जाधन्या पत्नीसंयाजाः।[2] अनेक पाशुके सर्वाभिः । इडादिसामिष्टयजुरंतम् । पक्षेयोक्त्र विमोकः । नव-समिष्ट यजूं षि । आसंद्यो द्रुवयोश्चात्त्वाले हरणम् । सोमलिप्तस्य च। कृष्णा विषाणा मेखलयोश्चात्त्वाले प्राशनम्।[3] प्रतिप्रस्थाता चशंकु मेखले तूष्णीम्।[4] योक्तं च दीक्षा बंधन पक्षे। वाचनम्। साम्प्रैषः । गानम्। सर्वे षांनिधानम्। आसंद्यादीन्या दायोदक देशगमनम् । अर्धपथेपुनः साम्प्रैषः । गानम्। सर्वेषां निधानं उत्क्रान्ते च सथौ च कृमयत्त्वा चर्यति। अग्न्यन्वाधानाद्यवभृथ्येष्टि रेककपालेन। इच्छ्याऋजीषग्रहणम् । स्विष्टकृत्तिचसकृत। प्रणीताविमोकांति ऋजीष कुंभस्यावनम्।[5] विसृज्योपस्थानम्। मज्जनम्। कृष्णाजिनां त्तस्य च मज्जनं पुत्राय तत्तप्रदानं यजमानपत्न्योः स्नानादि वस्त्रप्रधासवत्समिदाधानं तम्।[6] सोमलिप्तप्रासनम्।[7] वाससा मदानमत्र। उन्नेतु रून्नयनं गच्छत्तायाा महीया जपः।[8] यजमानस्यसमिदाधानम्। पत्नी च गार्हपत्ये तुष्णीम्। व्रतग्रहणम् । एकव्रत वर्हिर्होमादिसमिदाधानम् तम्। कृष्णाजिनम के कृत्त्वाशाला द्वार्य मपरेणयजमानस्यासनम्।[9] संस्कृन्याज्यंस्रुवाहुतिः । अपरे यजमानस्याहुति

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- आग्नीध्रे भक्षण वषट्कारे पद्मणाभ्याम्। -का०श्रौ० 10/6/17.

2- जाघन्यणालीः संयाजश्चयन्ति। - तत्रैव, 3/8/5.; 6/9/14.

3- का०श्रौ० 10/8/13.

4- प्रतिप्रस्था च शंकुयोक्त्रे तूष्णीम् । - तत्रैव, 10/8/14.

5- ऋजीस्येच्छनाद्येत् । - तत्रैव, 10/8/27.

6- का०श्रौ० 10/9/4.

7- सोमलिप्तं प्राशयन्ति। - तत्रैव, 10/8/5.

8- तत्रैव, 10/8/7.

9- शालाद्वार्य मपरेणास्ते यजमानः कृष्णाजिनमङ्केकृत्वा। - तत्रैव 10/8/8 .

मिछंतित्काप्रत्ययोपदेशात् । कृष्णाजिननिधानम् । प्रायणीया वटुवपनीया। पथ्यास्व स्तिश्चतुर्थी[1] अतिप्रणीतस्क इछन्ति। शालाद्वार्येतुघोषणा। शाल मुखी येऽवपनीययां चरंतीति श्रुतेः । अनुबंध्यायां वाचस्पति[2] प्रैषः । आहवनी यशालाद्वार्य दक्षिणाग्नीनां परिस्तरणम् । पात्रासादनादि व पामार्जनोते विशेषः । दक्षिणा वर्ज पूर्णपात्र वर्ज चबर शुकं पात्रासादनम्। नपृथमग्मिध्म प्रोक्षणम्। आग्नीध्र उत्पवन प्रत्युत्पवनाज्यग्रहणानि। स्तरणमग्नीषो मीयवत्। यूपोस्त्वेव । उपाकरण मंथनयोर्नियमः। गोः पशुः । नियोग प्रोक्षणे यथा दैवतम्। परिवास्य व पांग प्रेक्षणप्रैषः । शामितुर्गर्भाविक्षणम् । दक्षनेस्थालीचैवोष्णीं षं चोपकल्पयित वा इतिप्रैषः । मेधपक्षेस्थाल्युष्णीपयोरुपकल्पनम्। प्रोक्षणीः संस्कृत्य-मेधपक्षेतुष्णीं स्थाली प्रोक्षणम् । अवदान पक्षेमंत्र वत्प्रोक्षणम्। शूलोखयोर्गर्भसत्कयोः । वपामार्जनांते अनपेक्षमध्वर्यु यजमानयोगमनम्।[3] निरूहैतं गर्भमितिप्रैषः । निरूत्य-माणाभिमंत्रणम्। यूपकादक्षिनिपक्षे शालाद्वार्यपत्नी यूपोछ्रयणम्। तत्र वाचस्पति प्रैषः । शालाद्वार्य दक्षिणेनोपवेशनंब्रह्मणः ।[4] प्राजहित्तस्य परिस्तरणम्। पात्रासादनम्। अग्निहोत्रहवणी प्रजः । शम्याहबदुपलम् । पवित्र छेदनानि पवित्रे। आज्यस्थालीकुशमुष्टिः । अन्तर्द्धान तृणं अभ्रिः । स्रूवौजुहूप्रभृत् । धृवासन्नहनाच्छादनानि कार्मर्यमयाः परिधयः । ऐक्षव्यौ विधृतीहोतृषदन-माज्यम् । अन्तर्द्धानकटः । पूर्णपात्रं कमपि वर्गा चेति उपकल्पनीयानि इध्माश्च वाल्प्रस्तरोपसन्नद्धंबर्हि यूपश्चतुष्टयं नाभिमात्रो यूपः । यवाः आपअवटकुशाः अवटार्थीयमाज्यं यूपां जनीयंचत्रिगुण रशना उपाकरण मंथनयोर्विकल्पः । द्विगुण रशनामित्रावरुण दंडः । पशुः अतिः पवित्र करणादि आज्यसाद नांत पशुवत्।

- - - - - - - - - - - - - - - - - - - - - - - - - - -

1- पथ्यास्वस्तिश्चतुर्थी। -का०श्रौ० 10/9/11.

2- तत्रैव, 10/9/12.

3- तत्रैव, 11/1/3, 11/X14.

4- अग्नीषोमीय प्रणयेनायोत्तरेणधिष्ण्यान्छालाद्वार्य पूर्वोत्यास्ते दक्षिणतः । - तत्रैव, 11/7/12.

वेदिकरणत्त्वत्रांज्याधिश्रयणां तेसन्नदेव पत्नी प्राकृतान्या ज्यानि । नप्लक्ष शाखा च साहोम ह्वनि च । सर्वालंभः । आत्मालंभः । उकदोपस्पशनम्। अभ्यादि असिप्रदान शामित्र वर्जपर्यग्निकरणां तमु ग्रहीत एव मैत्रावरूणं दंडः। पशूत्सर्गः । वृतग्रहणं आज्यभागद्वयम् । उपांशुयाजवत्त्वाष्टोयागः । स्रुग्विधानम्। पविप्रतिपत्तिः । उल्मुकस मासादि कर्मापवर्गांति मैष्टिकम् । अनुयाजां तेस्वरूहोमः अनुबंध्या पुरोडाशोभाग परिहणांतः ।पशुविशसनम्। अवदान ग्रहणम् । गर्भस्य कंठं वा वकृत्त्यस्थाल्यां मेधश्रवणम् । ऋजुरेवावदानपक्षः अव दाना न्यधिश्रित्य स्थाल्यां मेधाधिश्रयणम्। गर्भमुष्णी बेणावेष्टच निधानम्। ततः शमित्रनु शासनादि। मेधस्य तत्रस्थाभिधाराभावः प्राणदानं तूष्णीमस्ति। अवदानवद्धवादक्षिणतोमेधस्था पनम्। आलभ्या वदानानि तूष्णीं मेधस्या लंभः । वशावदानकाले प्रवण्यामेधस्य द्विरवदान ग्रहणम् । उपस्तरण प्रत्युपस्तरणे तस्यै वक्षताभ्यंगश्च। अवदानान्यनुहोमोपस्थेत इति । अंगान्यद्भुता यस्यतं मात्रा समजीगममिति पुंसि। पयोस्तौ मात्रा समजीगममितिद्वयो। येषां तेन्मात्रेति वहुष्वयस्यैता मात्रासमजीगममितिस्त्रियाः। पयोस्तेमात्रेति द्वयोः । यासाता: मात्रेतिबहुषु । स्त्रीपुसयोः पुंवत् । अविज्ञाते च पुंवत् । सौविष्ट कृतेप्रति प्रस्थातु रेव प्रचरण्यां सर्वमेधग्रहणमुपस्तीर्णेद्विरभिधारणम्। स्विष्टकृतमनु होमः । संचराभ्युक्षणादिस्वरूहोमां तंपाशुकम् । व्यूहनादि समिष्टयजुरंते जुह्वा मुपस्तीर्यों प्लीपवेष्टि तस्य गर्भस्या रोपणम्। प्रत्युपस्तरणम् । तिष्ठतः शामित्रे होमः । अंगैरभ्यूहनम्। शलावभृतश्चात्र। नाग्नीषोमीयसवनीययोः । वशाभावउछा। उभयाभावे पयस्या। महावेद्या मासादनां तम्। वर्हि रषिसृवेत्वे तिप्रस्तरवर्हिषः प्रोक्षणम् । आज्यभाग प्रभृतीडं तामेके। तत्र पदार्थानां लोपः। शेषप्रतिपत्तयश्च पर्वतं ते । प्राजहि ते समारोप्य निर्मथ्योदवला नीयाग्नेयः पंचकपालोहिरण्य दक्षिणाग्न्यन्वाधानादि। पशुवद्वाहुतिः । पुनरूद्धृत्य सायमाहुतिः वर्हिरादीपनम्। ब्रह्मत्वमुक्तंयथा सूत्रमिति। अथपयस्या आज्यभागप्रभृतीडं त्तां चेत्करोति । तत्र शाखाछेदनम्। सन्नमनम्। नो पवेष निष्पत्तिः । पवित्र बंधनम्। षड्वर्गस्यापाकरणम्। मित्रावरूणाभ्यां भागमिति विशेषः । वाचस्पति प्रैषः। प्रणीताप्रणयनम्। अतिप्रणीतस्या हवनीयस्यैव परिस्तरणम्। पात्रासादनम्।

दक्षगुणवर्ज विनियोगक्रमेण। अग्निहोत्र हवणी वज्रः पवित्रछेदनानि पवित्रे आज्यस्थाली कुशमुष्टिः दोहन चतुष्टयं योक्तं स्रुवः ध्रुवासन्नहनावछादनानि परिधयः । विधृत्याज्याम् । वाजिनभांडंहोतृषदनम्। जुहूपभृत। शृतावदानम्। प्राशित्रहरणी। इडापात्री।[1] उपकल्पनीयानि सपिद्वयम्। अष्टादशेध्मकाष्ठानि वा इंधनर्थित्वा स प्रस्तरवर्हिः आमिक्षार्थ दधिचेति। वाग्यमनंकुक्कुटाहननं त्रात्रतेन शम्या न सादते । न हवन्नो पलानिवप्राशित्र हरणे अपिपवित्र करणादि प्रोक्षणी संस्कारां तम् । पात्रप्रोक्षणं प्रोक्षणी निधानां तम वाग्विसर्गः । आज्यनिवापो वेद बंधः । उपसृष्टादि परिक्षालनां तोदोह : । आज्या धिश्रयणम्। तस्यैव पर्यग्निकरणम् । उदकालंभः । शृतेदध्यानयनम् । पोक्षणी प्रैषाद्याज्यग्रहणां तम्। तत्रविशेषः । नस्यपादं च प्रहरणं नयाग्योर वने जनम्। स्रुवादि संमार्गः । शृतावदानानंतरं वाजिन भांडस्य च । ध्रुवायामेव चतुर्गृहीत ग्रहणम्।[2] ब्रह्मणेप्रदानम्। अन्धेरेवछादनम्। इध्मात्तमिधादानादिसूक्ता दनां तम् । तत्र विशेषः ।

नोशुकोद्वहनम्। अधृतवत्त्यो र्जुहूपभृतोघृतशव्दवर्ज मंत्रेपसादनम्। ध्रुवायां घृताच्यसि ध्रुवानाम्नेति। वाजिन भांडस्यो पस्तरणम् । तत्रस्थाभि-धारणमद वत्त्वावाजिननिषेकः । आमिक्षोद्वासनम्। प्राणदानम्। वाजिनस्य च। आज्यस्थाल्यासादनाद्यात्मा लंभनां तम् । वाजिनस्योत्करेसादनम्। व्रत-ग्रहणम्। होतृप्रवेशनम्। इध्मप्रक्षेपः। अहवनीयोपवाजनम्। अग्निसंमार्ग प्रैषोग्नि संमार्गः । आश्राव्यहोतृवरणम् । आज्यभागप्रभृति डांतं प्रकृति वत् । भाग च तुर्द्धा करण वर्जम् । प्राशित्रा वदानंभवत्त्येव। समस्यमार्जनम्। पवित्रप्रतिपत्तिः। अग्नि संमार्ग प्रैषो व्यूहन मभ्युक्ष्य जुह्वापरिध्यंजनम्। अग्नि संमार्गः सूक्तवाक प्रैषः । प्रस्तरादानंम् । विधृत्तिप्रक्षेपः प्रस्तरांजनम् । नीचैर्हरणम् । तृणहरणम् प्रस्तरप्रक्षेप। सद्वशाखाया प्रस्तरानुप्रहरणम् । अनुप्रहरेति युक्ते तृणप्रक्षेपः । आत्म लंभः । उदकोपस्पर्शनम्। अत्र वा वाजिनयागः संवादशेषो वाकयोरभावः । परिधिप्रक्षेपः। संस्रवाहुतिः । देशेनिधानम्। अत्रवा वाजिनयागः । वेदयोक्त-योर्विमोकः । आवेदेस्तरणम् । अन्धेरवछादन वर्हिर्होमः । प्रणीत्ताविमोकः

1- इध्मन्मादधाति । - का०श्रौ० 9/11/29.

2- तत्रैव, 10/3/14.

घृतविसर्गश्चेति । अग्निष्टोमिकीयस्या समाप्त ।

क्षिप्रमेतत् । सम्प्रदाय स्थान । द्वादशाहेनाग्निमता[1] सत्रात्मके-नयागंकुर्वनामेककल्पां नो चैत्रशुक्ल षष्ठयां पृथक् पृथक् आशनि। वैकल्पिक-पदार्थावधारणम् । एकारणिपक्षे गृहपत्त्वरण्योः संवादः । गृहपत्तेरेव समारोपः ।[2] यथास्वं वेत्तरेषाम् । बह्वयश्चेदरथोरद्वयोरेव समारोपः । उक्त सानं मंथनम्। गृहपतिर्मध्येरीत्त्या दक्षिणोत्तरणी तरेषाम् । गृह-पत्त्याहवनीयेंगार प्रासनम्।[3] समुच्चित्यदक्षिणाग्निम्। गृहपतिं वा पर्युप-विश्य मंथनम्। तद्वार्ह पत्त्येग्निप्राशनम्।[4] तत आहवनीयो[5] दक्षिणाग्निश्च। उक्तमेकारणिपक्षे। तत्र प्राजापत्त्यः पशुः। यजमान कर्तृकेऽग्न्यन्वाधाने त्विमन्पक्षे गृहपत्त्यन्वारंभोस्माक मग्नेस्मभ्यं तमंता मिति च विशेष स्वगार्ह पत्त्यपूर्वकर्मिति रेष्वपि एकश्चेद्यथोक्तम्।[6] वाचस्पति प्रैषौ गृहपेतरेव । परार्थेषु सर्वत्र।[7] उभयार्थोन्वारंभः । अहश्वसर्वत्रसर्वेषाम् । यूपाह्वत्त्यां यज्ञ-पतींस्तिरेति । उदिंगत्तयज्ञपतींत्सुधातु न्यज्ञपत्तीन्देव युवद्वति । परिग्रह प्रसवे यजमानाः संत्तु यजमानांश्चयेहीति । एवं सर्व प्रसवेषु वेद वंधनेन्वारं-भोस्मभ्य वेदोभूयादिति । स्वगार्हपत्यस्थानेषु सर्वाः पत्न्याः संनह्यते।[8] एकश्चेद्गार्हपत्यस्तत्रैवापत्न्याज्या वेक्षणेन्वा रंभः।आज्या लेंभे पाहि यज्ञ

---

1- का०श्रौ० ।2/1/1

2- गृहपतिप्रथमः प्रथमः सर्वत्र । - तत्रैव ।2/1/5

3- गृहपत्याहवनीयेऽङ्गारप्राशनम् । - तत्रैव ।2/1/18.

4- गार्हपत्ये प्राशनमप्त । - तत्रैव, ।2/1/22

5- आहवनीयस्ततः । - तत्रैव, ।2/1/23.

6- वा यथोक्त गृहपतेः । - तत्रैव, ।2/1/26

7- गृहपतिः प्रथमः प्रथमः सर्वत्र । - तत्रैव, ।2/2/5.

8- तत्रैव, ।2/2/11.

पतीनिति। एवं पुरोडाश प्रधानेषु । यूपस्यान्वारंभ चषाले क्षणे गहपतेः ब्रूतेति। प्रैषो वाचनम् च सर्वेषां। एवं सर्व वाचनेषु। पत्नीनां च । परि-व्ययणे परिमान्यजमाना निति। मंथने मा यज्ञ पतीनिति।[1] संतत्वग्निनत्येक विंशेनवज्रे णेति च गृहपतेरेव। हिरण्यगर्भ इत्त्युत्तराधारः । पशुसमंजने संयज्ञ पतय आशिष्टागच्छंतामिति। यजमानवरणो पुरएते । मयजमानामनुष्याणा-तेषा मद्धरिगार्हपत्त्यं दीदक्षतम् । हिमाअष्टादशयवोराधनं सीन्संपृचाना असं-पृचानास्तन्वं इति सर्वेषामभिधान साम प्रति वषट्कारे होमनियमः । प्रयाजानुमंत्रणेत्त्वषिमंतोभूया: स्म अपवितिमलोभू यास्म यशस्विनो भूयास्म। ब्रह्मवर्चसितोभूयास्म अन्नादाभूया स्म इत्त्यन्वारब्धो तृणाया सने यज्ञपतीन धा इति । गृहपति पत्नीं शुद्ध करोति। तृणामिष्टानं गृहपतेरेव। प्राणदाने यजमानेभ्योविंदेति। एवं सर्वत्र मार्जनं पत्नीनां च । प्राणयने यजमाना वाचं यच्छतेति । हविर्ग्रहणे यज्ञापतयो ह्वार्षुरिति । प्रथने यज्ञपतयः प्रथंतामिति। यज मानामित्यभिवासो उक्त मुद्गिंगन प्रोक्षण प्रति प्रसव प्राणादानलंभेषु । मयीदमिति सर्वेषाम् । न चतुर्द्धाकरणम् । पवित्र प्रतिपत्तौ यजमानानं प्राणा पानाविति । अनुयाजप्रसवेतेन यज्ञपतीं स्तेन मामवेति। व्यूहनं गृहपतेः । प्रजापतेर्वनस्पते रुजितिम ज्जीयास्म वाजस्यास्मान्प्रसवे तायमिमेयज माना-दिंषतियाब्धेनान्देष्टिं गृहपतेर्जाघन्या पत्नी संयाजनम्।[2] आज्येनेत रेषां वह्वश्चेत । जाघन्येवेडा। अदब्धाहुति वर्ज सुक्सुवानिति वहूनि संस्कारवेति। पिष्टलेषायां यजमानानां कामा इति वेद विमोकेननाहः स मिष्ट यजूंषि यज्ञपतीन गच्छेति । एषवोयज्ञो यज्ञ पत्तयः सहसूक्तवाकः । सर्ववीरस्तं जुष-ध्वमिति। शूलावभृथे गृहपति पत्नी गार्हपत्येषुसमिदा धानं करोति । पूर्ण-पात्र ग्रहणम् । उपरिस्थिलि कतया अंजलिंकृत्वाविष्णुकुमभाग भूमिद्धिकसूर्य प्रदक्षिणा वर्त्तनप्रागामनेष्वन्वारब्धामः । आहवनीय गार्हपत्येषुत्रोनाम

---

1- गृहपतिं वापर्युपविश्यमन्यते । - का०श्रौ० 12/2/4, 12/3/10.

2- पत्नीसंयाश्चयवृयहान्यन्तवर्जम् । - तत्रैव, 12/3/23.

गृहयाहवनीयो पस्थान व्रतविसर्गभागप्राशनानिभेदेन। सूपविक्षणे वर्चोनोधे धीति । प्रागमने अनुनस्त नुहि। त्वङ्•मस्तिकोद्धृतघृताक्तशिरसोनिधानम्। शेषप्राशनं चातदर्हः पक्षेग्नि सन्निवापो घोषणाया। एकगार्हपत्यपक्षे पि- विभज्य पुनः सन्निवापः । तत्रोरवा संभरणमजापयसावसेकां तम् । विश्व ज्योतिषां करणं गृहपतेः । पत्त्यपत्न्या आषाढायाः । अशक्तपक्षे स्वकाले- पशुः । समारूढनिर्मथिते नियतक्रिया सर्वपक्षेषु उखासं भरणे अग्नीन्पृथस्व काले अस्मिन्ननपिपक्षे। चैत्र शुक्लषष्ठ्या देव यजनजोषणादि प्राक्सुत्यायाविशेषः । उदग्वंशं शालाकरणम् । एकारणिपक्षेप्राग्वंशं वा। समारोपः पूर्ववत् । एकारेस्मि पक्षेपशुबंधस्थाने सत्रेणेतिविशेषः ।[1] उदवसादनम्। सर्वेरणि पाणायो गृहपति मन्वारंभते । सपुनः शालास्तंभम् । एकारणिपक्षे गृहपतिरेवारणि पाणिः । संवत्सर चातुष्प्राश्य पक्षीहिताग्निक्षेत् गृहपतिरेव लौकिकारणि पाणिः सोमनिधानं वा। मंथनम्। गार्हपत्त्येंगारप्राशनंत्तु विशेषः । तत उद्धरणम् मर्द्धव्यामाधिकेषु सप्तषुप्रक्रमेषु। गृहपति प्रमाणं सर्वत्रकृत्त्वर्थ नो गोपायस्वेत्यु- पदेशः । अन्नोपहरः । इष्टाशनाद्यप्सुदीक्षेकस्यप्रयादनां तम् । अध्वर्युर्गृपति ब्रह्मोद्गातृ[2] होतॄनदीक्षयति। अनुपतिपत्नीः[3] प्रतिप्रस्थातादीक्षयति। अध्वर्यु ब्राह्मणाछंसि नं प्रस्तोतारं मैत्रावरुणं चप्रतिप्रस्थाता वीक्ष्यतित्ततत्पत्नीर्नै ष्टादीक्षयति। प्रतिप्रस्थातृपोतृ प्रतिहर्त्तछावाकान्नेष्टादीक्षयति।[4] तत्पत्नी तुन्नेतादीक्षयति। न्नेतारं च सपत्नी करोत् । पत्नीर्नैष्टा दीक्षयति। नेष्ट्रा- ग्नीसुब्रह्मण्यग्रायस्तु त उन्नेतृ।दीक्षयति। तत्पत्नीब्रह्मचार्यादीना मत्यंतमे[5] दीक्षयति उन्नेतारं च सपत्नीकम् । दीक्षणीयायाम ग्न्यन्वाधानाम् । परि- स्तरणां गृहपतिगार्हपत्त्ये होमा भावान्नेतरेषु। उत्कीन्मूहस्थानानि प्राजापत्त्य

---

1- दीक्षाकालसंवादप्रभृति पशुवन्ध स्थाने सत्रेण । - का०श्रौ० 12/2/10.

2- अध्वर्युगृहपति दीक्षयतिब्रह्मादीश्च । - तत्रैव, 12/2/15.

3- अनुपतिपत्नीखत्तर उत्तरः । - तत्रैव, 12/2/20.

4- नेष्ट्रादीकुन्नेता। - तत्रैव, 12/1/18.

5- का०श्रौ० 12/2/19; 12/2/21.

अजनदीक्षाएकैकस्यप्रवेशनांताम् । उखाप्रवृंजनमत्र वा । यजमानकर्तृकं चेद्गृहपतेः। दीक्षणीया समाप्तिः । कृष्णाजिनदीक्षादंडोच्छ्रयणांत्ताएकैकस्य यथोक्ता।[1] अत्र वा उखाप्रवृंजनंमिदाधानांतम् । स्वमप्रतिमोकश्च स्वस्वमेव सर्वेषां मन्त्रः । अस्त ऊर्ध्वप्रागुपस्थानादन्वारंभः। सीदत्वमित्त्युपस्थानं भेदेनतथा वा त्स प्रांडदाहने दीक्षिता इमे ब्राह्मणा इति । प्राक प्रैषाद स्तमनं चेदनुपरिपाठ - याग्निहोत्रहोमः । आस्तमयाद्वाग्यमः। । अस्तमितेभरस्मो दापः । वाग्वि- सर्गोदीक्षिता वाचं विसृजध्वम् । पत्नीष्वनुग्रहः । समिदाधानम् । बहुवचनेन गोदोह प्रैषः । व्रतानिपृथक्तेन करणीयानि । अविवृद्धवाचनात् गृहपति प्रते व्रत्तेन्यज्य समिदाधानम् ।[2] विवृद्धवाचनेन्द्रवेति। सर्ववाचनेमेवं वाग्वंधने दीक्षित वाचं यच्छतइयाह।[3] पत्नीषु वाग्विसर्गेबंधनेचनोहः । उदितेभस्माद्वपनादि[4] समिदाधानांतम् । एवं दीक्षितधर्मैद्वारंभा[5] स्भान्यासतोविष्णुक्रमवात्सप्रैर्व्यर्त्त्वा संयूपछेदन महावीरकरण चनीवाहनानि यथोक्तम् । उत्तमेहनिगार्हपत्त्यपरिलेखः । प्रंडुलात्त्प्रक्रमणम्।[6] वेदिमानं पृष्याय मनांतं सोमनं वसाबाद्यातिथ्य हविः कृदंते विशेषः । पदचतुर्गृहीतेन्वारंभो गहपतेः।[7] गुहाक्षी लोहाकर्णी सोमक्रयणी। पदक्रमसर्पणोन्वारंभोयजमान कर्तृकं चेत गृहपतेः । अर्थतः सेमाध्यावापः । आगते सोमेच्छादयेत्त्सर्वे षां जरा बोधनं गृहपतेः।[8] स्वानभ्राजेति जपश्चशिरसो पोर्णनं सर्वेषां पत्नीनां च । गृहपति सक्तो मैत्रावरूण अग्निमानं परिकृश्च न्निखननां तम् । तृतीयायामभ्यवहरणादि प्रायश्चित्त्यं तं कृत्त्वा विष्णुक्रम

- - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 12/2/22

2- अस्तमिते समिदाधानं सर्वेषु । - तत्रैव, 12/4/6.

3- वाग्विसर्जन सत्र कामेन । - तत्रैव, 12/4/25.

4- तत्रैव, 12/4/7.

5- तत्रैव, 12/4/8.

6- तत्रैव, 12/4/11.

7- चतुर्होतृव्याख्यानं होतुः । गृहपति राजानाति । - तत्रैव, 12/4/16.

8- तत्रैव, 12/4/21.

वोत्तसप्रसमासोयथोक्तः । गार्हपत्त्य व्यूहनादि प्रायणीय वेदविमोकां तं पक्षेयोक्रमस्य । सीरयोज नादिवपनां तं दंडः श्रीर्बिर्णसोमक्रणादि गृहपतेः । वाचनादि सर्वेषाम् । आदिनिर्वापिगृहपति पत्न्यस्वारभते । हविः कृदंते परिश्रिदभिमंत्रणादि लोगेपृकोपधानां तम् । शम्यादानाद्युत्तरेवादिछादनां तम्। सिकतानि वपनाद्यालंभनांतम् । उपसद्धोमेगृहपतेरन्वारंभः । चर्मचितिप्रणयनाद्य श्चोत्सर्जनां तम् । उत्तरवेदि प्रोक्षणाद व्याघारणां तां मयिगृहणामीति जपः। सर्वेषाम् । सत्त्यसमागानं गृहपत्तेः । पुष्करपर्णादिलोकं पृणांतिविशेषः । सर्पनासोपस्थानपुरुषाहुप्रायणांत्तपरिलेखा गृहपत्तेः । पंचशिरो व्याप्ति श्चत पुरुषमंत्रेणोपधानम् । स्रुवाहुती चैवम् । अपराह्ने सत्तानूनप्रंव्रतंगृहपतेः ततः प्रवर्ग्योंयदावश्च परिणयनमुत्त्संगीति। वाग्वंधादि। प्रातस्यसदंतेपुरीष निर्वापः। सप्तर्ष्योपस्थानम । एवंव्यत्त्या संवितिपुरीप्रत्यहमश्च परिणयनम् । चिकर्ण्या- चेकादश्यामन्युछ शंसनप्रैषां तम् । अपराह्ने व्रत प्रदानादि घृतोषि तस्य मित्करणां तम् । चतुर्दश्यांद्वादस्युपसत् । तत्र पंचगृहीतीदिरूङ्•मती होमां ते विशेषः । ...मं स्तनमि तिवाचनपक्षे वृतेति प्रैषः । वसोर्द्धारागृहपतेः । अभिषेकः सर्वेषाम् । हविर्द्धानप्रक्षालनादि विशेषः । हमं स्तनमिति वाचनपक्षे वृतेगृहपति पत्न्या अक्षोपांजनम् ।

अष्टाव मश्नि तत्रोस्तु तत्रः सहेति धिष्ण्यांश्चि त्वादीर्घशाला- पक्षेपार्श्वगार्हपत्त्यानुपत्रामध्यवचयनम् । पर्युपवेशनं प्रक्षेपि । एकारणिपक्षेपि। एकाहवद्वा । तत्र परिलेखः सर्वेषाम् । शाख्याव्यूहनं च । शाखायानिरसनं च । ऊखर्मानि वापोमंडल छादनमेकैकस्य। अतऊर्द्धमनुदेवताशादि। सप्तदश शाखाम्। एकाहवद्धोमे पक्षेवाना नागार्ह पत्त्याः । अपरेसर्वपक्षेषुएका मेव शाखामिछंति। प्रातः सवनह्यर्थेसप्तदशानां षड्वर्गाणामपाकरणम् । तत्तोगृहपतिशाखायादधि- र्दर्मस्य। प्रातःसवनवदुत्तरयोः । एकैवशाखेत्यपरेयत्कारणम् । बहुत्वेप्रमाणा- भावात् । शालद्वार्थमपरेणासनं गृहपतेः । अपिवृतान्वारंभोयथास्वम् । यजमा- नानामेके नैववास साछादनम्। आग्नीध्रीये उद्यते प्रतिचित्त्यं गाराहरणं

शालाद्वार्यात् । विसृत्योपस्थानमन्वारंभपूर्वकमिदं वयं मनुष्यानितिनिः क्रमणप्रभृति अंगुलिविसर्गा तस्यैकस्या पत्नीनां स्वगार्हपत्येषु समिदाधानम्।[1] सुब्रह्मण्या भेदेन सविस्तीत्येति वाहुग्रहणानि च शब्दाद्भेदेन । शालाद्वार्य मपरेणासनं गृहपति पत्न्याः।[2] उत्तरवेदिमपरिहरणम्।[3] अनुपरिपाशारक्षणम्। सुब्रह्मण्या पूर्ववत्ते ।[4] यथोपाकृतं दोहः । उखाधिश्रयणे यज्ञपत्यः । पयस्यार्थे सप्तदश षड्वर्गाणां स्वक्षाखाभि स्पाकरणम् । आवसथादीनामदानम् । अपररात्रेस्स्वयमेवोच्छायोपविश्य परिस्तरणादि ध्रुवावर्जमाशुकं पात्रा सादनम्। अर्द्धसोमोपावहरणम्। प्राक्प्रातरनुवाको पाकरणारतिनयोजनम्। पूर्ववत्तु ब्रह्मण्या सवनीयनिर्वापः प्रत्यग्नि। तत्राग्नीन्मध्यमोविरोधादन्धे इतरेषु । पात्रासादनं पाशुकमस्त्येव। सव नीच्यथमिवप्रोक्षणप्रैषो बहुवचनेन। प्रोक्षितेति प्रतिप्रश्न विरोधात् । यथा स्वमन्वारब्धेदोहः । एकपुरोडाशेष्वैन्द्रो धिकोगार्ह स्यक्षयेवा। आज्ययां तंकृत्त्वा स्रुवः संमृक्षीति प्रैषोग्नीधः । अध्वर्योः सम्मार्गः। ध्रुवाया माज्यं गृहीत्वास्त्रु चामासादनं यथा न्यायम् । पात्रयोजनेधिकं षोडशिनः ।[5] अनियतस्थानम्।[6] अंशोश्च। पात्रे जनात्त्सर्वाः पत्न्यः डंन- पंक्ति। निग्राभ्या समर्पणं गृहपतेः । कृतकरणमारात्रिकम् । अपोनिधायां- शोरर्धपाणिप्रक्षालनहिरण्य बंधने। अद्रयादानांशुनि वपनीयसर्जन सकृत्प्रहरणम्।[7] उद्यम्य वाश्चप्रहरणम् । स्वाहेति होमः ।

---

1- अस्तमितेसमिदाधानं सर्वेषु। - का०श्रौ० 12/4/6.

2- का०श्रौ० 12/4/10.

3- उत्तरवेदिश्रोण्यां पवित्रस्थाम् । - तत्रैव, 12/4/11.

4- तत्रैव, 12/4/27-28.

5- तत्रैव, 12/5/2.

6- तत्रैव, 12/5/3.

7- उद्यम्य वा प्रहरणम्। - तत्रैव, 12/5/12.

हिरण्यदानम्।[1] सत्रादन्यत्रयथोक्तं वत्सत्तरीणांदानम्।[2] अदाभ्यंग्रहणं भूतिमिछतः।[3] अभूतिमिछतोऽपि ग्रहणम् । तत्वात्रैनिग्राभ्या आसिच्यांशुग्रास नं गछतो वधूननम्। होमः । हिरण्या वधाणम्।[4] अंशुवदक्षिणा।[5] अंशुनिधानम्। अभिषवे उरसिनिग्राभ्या गृहपतेः।[6] सर्वेबां वाचनम्। मितालंभनेतेनेभ्यो यजमानेभ्य इति विशेषः । षोडशिग्रहणम् । अध्वर्योराहोमात्षोडशिना सम्यमनम्।[7] आग्रयणे पाह्यिस्तत्तीनिति सभ्यः सुन्वन्नीयमानेभ्य इति । ध्रुवस्याहोमान्मूत्र पुरीष नियमः सर्वेषाम्। सयन्वारभ्यानिः कृयणेब्रह्मा गृहपति प्रतिहर्त्तारमन्वारभेतम् । आश्विन-ग्रहणेब्रह्मागृहपति ग्रहणेन्वारंभश्चेद्गृहपतिरेव।[8] अवकाशावनेयथाग्रहं ब्रुवंत्त ईक्षध्वमितिप्रयोगः । भूर्भुवः स्वरितिजपः सर्वेषाम्। ऋजुवांज्यावरणेन्वारम्भुर एतेमे सुयतो यजमाना इति। उक्तमन्यत्पशौ सूर्पां मंत्रेणन्वारंभः । प्रास्नास्ति रस्वस्ति नोस्मिप्रित्रितिविशेषः । नरूस्विगवेक्षणम् । धिष्ण्याभिमंत्रणेन्वारंभः । यात्तस्मा नग्नयः पितृतास्मा नग्नयोगोपायतास्मान्नमो वोस्तु सास्मान् हिं सिष्टेति : सवनीययाग स्तंत्रेणां पाकपुरोडाशप्रक्षेपं चशरावें द्रुस्यसहप्रक्षेपः। वार्हस्पत्यश्चेद्यज प्रैषोभेदेन। स्विष्टकृदं तंत्रेण । पंचप्रसवस्या। भिधानं होतृ धिष्ण्ये। भ्रुग्रा मंथिप्रचरेरायस्पोषेणयजमानानिति। यजमानचमस भक्षेहोता

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- हिरण्यचोपश्रिपृति । - का०श्रौ० 12/5/11, 12/6/1

2- द्वादशवत्सतर्यो गर्भिण्यो दक्षिणाऽसत्रे । - तत्रैव, 12/5/14.

3- बभूषतोऽदाभ्यं गृह्णाति। - तत्रैव, 12/5/15.

4- हिरण्यंपोपश्रिपृति । - तत्रैव, 12/5/11.

5- अंशुवद्दक्षिणा। - का० श्रौ० 12/5/22.

6- का०श्रौ० 12/5/16.

7- तत्रैव, 12/5/23.

8- तत्रैव, 12/6/12-13.

पृच्छति यजमाना उपहूयध्वमित्तिसर्वैपृत्त्याहुत्युपहूयत इति । गृहपतिप्रभृतयो होतारं पृष्ट्वा पृष्ट्वा कृ यजमाना उपहूयध्वमित्ति एवं यजमा नानां प्रत्येकं भक्षा: एवं सर्वभक्षेषु वैश्व देवगृहणेन्वारंभश्चेदगृहपते । माध्यंदिने सर्पणाभिषवनिग्राभ्या वाचनाद्युक्तम् । षोडश्यत्र पेदाश्रयणा दुत्तरस्ततउक्थ:।[1] अस्मिन्पक्षे मुष्टिनाम रूत्वतीय: । स्तोत्रां तेप्रैषेदक्षिणा उपावर्त्तत्यस्याभाव:। दधिधार्मप्रत्यक्षभक्ष: । दक्षिणहोमाभाव: दक्षिणापथेनगमनं यथोक्तं मंथौदनति लमाष नयनं पुरूषार्थत्वात्। सदोगमनं सदस्य प्रोक्षणांते आत्रेय प्रासर्पकदानानि गृह्यते। सौम्याश्विनसहिता नग्नीत्सवनी यान्निर्वपति। शेषं यथोक्तम्। वसतीवयसिक: पुनर्ग्रहण मत्र वा।[2] आदित्यग्रहार्थगृहपतेर्हविर्धानप्रवेशनम्।

तृतीयसवने आग्रयणा दुत्तरोवाषोडषी।[3] नत उक्थ्या।[4] आसिरा-वेक्षणेगृहपतिप त्न्यन्वारंभोन चोह: । प्रकृत्ता वसमवे तत्वात् । पिंडपितृयज्ञ वद्दानेपुरोडाशश्चात्रा: सप्ताधिकान्दप्रशे करोति भागान् । पुनरथैवं कृत्त्वा एकैकं पिंडान दद्यात् गृहपति चमसेस्वपितृभ्यो गृहपति: । तथा चान्येगृहपति। पितृभ्य एव प्रकृतिवत्स्वचमसेष्वागृहपति चमसे सर्वे ब्रह्मोदयो यथापूर्वमृत्त्विक् चमसेष्वधिकं स्वपितृभ्योदानमेतेषाम् । सावित्रग्रहणे। जिन्वयज्ञपतीनुभगायेति । प्राग्यज्ञायजियादग्नि विमोचनं वा। यज्ञायज्ञियेगृहपति पत्न्यन्वारन्धा उदगातारमीक्षते । ऊर्वासिक: सर्वासाम् । पात्र प्रक्षालनां ते उक्थ्यविग्रहणानि तत: षोडशी अगृहीतेश्चेत् । पूतभृतोग्रहणम्। वाग्यमनम्। चमसोन्नयनम्। उपस्थानं उपास्तमयम्। कृष्णेश्चे उपतिष्ठति तृणहिरण्यैरूपाक रणादि-भक्षयंते। चमसैश्चतुस्तोत्रास्त्रय: । पर्याया अध्वर्युकर्तृका: उक्थ्य वछस्त्रकर्तार: प्रथमं प्रथमं शस्त्रं होतु: । यज्ञायज्ञियवच्चमससोन्नयनम्। तदंते चमसानुन्नीर्य

1- का०श्रौ० 12/5/23

2- प्रतिप्रस्थातावसतीवरी: परिहरति । - तत्रैव, 12/4/24.

3- पृष्ठ्य षडहप्रथमोऽग्निष्टोम चतुर्थ षोडश्यवथ्या इतरे। - तत्रैव, 12/3/1

4- तत्रैव, 12/3/1.

संधिस्तोत्रम्। होतुराश्विनम् । प्रतिप्रस्थाता आश्विन मासादात्मनमालभ्य चमसैः सहजुहुयात् । यथापशुदैवतं न्यूनम्। वा ईस्वत्येषचदर्विकसोमस्य प्रयोगः।[1] सर्वान्ते आश्विनस्यसर्वशाखाः प्रक्षिप्यंते ।[2]उदयनीयां तेग्नि विमोकपक्षेन परिधिप्रक्षेपः । सर्वोपवेषहोमः । हारियोजनानां तत्रवेः सुत्यामितिप्रैषः । वत्सालंभावः। पत्नीसंयाजाः पत्युवत् । वेदविमोकौ पोकृणां पक्षे। एक-वर्हिर्होमः । राक्षसभागः । भागावेक्ष णम्। प्रासनादि यथोक्तम् । शाखा-छेदनाद्युपगूहनां तं। उक्ते नन्यायेन वसतीवरिग्रहरणमत्रवानिधानां तम् । व्युकूमतेति प्रैषः । वसतीवरिपरिहरणम्।[3] शालाद्वार्यम्परेण गृहपति पत्र्यास्ते।[4] उत्तर वेदिमरपरेणगृहपतिः।[5] एवं सर्वत्र । अर्थात् सोमपरिहरणम्।[6] वृह्मणे रक्षणम्। वाग्यतस्या इत्तरेषां समित्स्वाध्यायोपगमः ।[7] तत्राप्यशनम्।[8] आगमनं। सुव्रह्मण्या समिदाधानमाहवनीय स्वगार्हपत्यदक्षिणाग्निषु पूर्व-वद्दोहाः । प्रत्त्युपाकरणं च तस्मिन्नेवाहनि उपस्पृश्य पाप्लिकः । प्रथमो-ग्निष्टोमः । तत्रपाक्षिक मग्नियोजनम् । अतिग्राह्यमात्र सधिकम्। सवेष्टहः सुसदसिषवमानं प्राणी योदनीय वर्जम्। पशुर्यथोक्तः प्रातः सवनेआग्रयणादनं तरमति ग्राह्य ग्रहणम्। मध्यंदिने वा उक्थ्या दनम् तरंग्रहणम् । पृष्टोपाकरण काले वाति ग्राह्यग्रहणम् । षडहस्यान्यतरे त्र्यहेग्रहणमेकै कस्य। उभयोर्वा। माहेन्द्रस्तोत्रेदक्षिणेन वेदिरथ्संसारणम् । माहेन्द्रमन्वतिग्राह्यहोमः । भक्षणं

---

1- इतरेविसृज्यन्ते स्वाध्याय समिदभ्यो वा। का०श्रौ० 12/4/3.

2- वसतीवरीपरिहरणाद्दिवा । - तत्रैव, 12/4/, 12/4/24

3- का०श्रौ० 12/4/7-8.

4- तत्रैव, 12/4/7-8.

5- तत्रैव, 12/4/10-11.

6- का०श्रौ० 12/3 /122

7- वाग्विसर्जनं सत्रकार्मकः। - तत्रैव, 12/4/25.

8- तत्रैव, 12/4/15.

यजमानैः । एवं पत्नी संयाजां तेनकश्चिचद्विशेषः । द्वादशाहाद्विकाधर्मा अतिरात्र उक्ताः । सोमरक्षणांताः।[1]प्रतिपत्तयश्च। पक्षे वसती वरिग्रहणम् शाखाछिदनादि प्रातरुथ्याः। रथसंसारणस्थानं दुंदभिशब्देनोपाकरणम्। अत्राथुक्तमन्यत् । श्वः पुनरूथ्याः । तत्रोपवाजनै रूपाकरणम् । उक्तमेवा-न्यदत्रापि। श्वश्चतुर्थः पार्ष्ठिकः षोडशी। त्र्यतत्र यद्युत्तेरश्च इति ग्राह्याउ-भयोर्वति तस्तत्यात्र मासाद्यते । नियमेनषोडशिनः । प्रातः सवनेतिग्राह्योत्तर-कालंषोडशी। मध्यंदिनेवाग्रयणादुत्तरः । तस्मिन्पक्षे धाराग्रहांत्तेति ग्राह्याः। उपाकरणकालेवाषोडशी। पृष्टयोपाकरणकालेवाति ग्राह्याः । अरणिभ्यामुपा-करणम् । उद्गातुरूरौमंथनं च होतृप्रत्ययः । प्रतिगरौ माहेन्द्रस्य। षोडशि-प्रचारोपथोक्तः । श्वः पंचमः पार्ष्णिक उक्थ्यः । तत्रसा वकयोदपात्रयोपा-करणम् । षष्टः पार्ष्णिक उक्थ्यः । स्वयमतृपाजेज्यासं वासिनेनोपाकरणम् । प्राकृत्तं च सर्वत्र होतृ प्रत्ययः प्रतिगरः ।[2] स्वाध्यायार्थेन वहुवदेत्।[3] नान्यं पृछेत। न्यान्यस्मैप्रवूयात्।[4] मधोः प्राशनं घृतस्य वा।[5] श्वः प्रभृति अन्वहंत्रयः छांदोमिका उक्थ्याः[6] पार्ष्ठिकधर्मवर्ज यथोक्ताः ।पुनः छांदोमिकएवात्य-ग्निष्टोमः ।[7] तत्राग्निष्टोमद्धर्माः पृष्ट्यधर्म वर्जम्।[8] पत्नी संयाजान्ते सत्रोच्छादनम्।[9] तत्रापामुपस्पर्शनम्। सर्वेषांबाला प्रवेशनम्।[10] सर्वेष्वनारब्धेषु

---

1- एके को वाग्यतः सोमं रक्षत्याबोधनात् । - का०श्रौ० 12/4/1.

2- होतृप्रत्ययः प्रतिगरः । - तत्रैव, 12/3/15.

3- षडहान्ते न वहुवदेत् । - तत्रैव, 12/3/17.

4- नान्यस्मै प्रब्रूयात्। - तत्रैव, 12/3/18

5- मधोप्रोशनं घृतस्य वा । - तत्रैव, 12/3/20.

6- का०श्रौ० 12/3/21.

7- तत्रैव, 12/3/22.

8- तत्रैव 12/3/22.

9- पत्नी संयाजान्तान्यहान्यन्त्यवर्जम् । - तत्रैव, 12/3/23

10- दशमेपराह्णेऽयउपस्पृश्यलाप्रवेशनम्। - तत्रैव, 12/4/7.

शालाद्वार्ये आज्याहुती तेषामेवोत्तरेणपरिक्रम्या परेणहविर्धानं मस्या परकूवरी मालभ्य सत्रस्यार्द्गिानम्।[1] उत्तरस्यामुत्तरवेदि श्रोण्यां वागानम्।[2] दक्षिणस्य हविर्धानस्याधोधोऽक्षं प्राचग्निः क्रमणम्।[3] पूर्वेण सदः प्रविश्य स्वासनेषूपवेशनम्।[4] प्राजापत्त्यग्रहणं यथोक्त।[5] ब्रह्मोद्यमा[6]श्वेमेधिकम्।[7] अनस्तमितेद्वंवपलिंभः।[8] वाग्यमनम्।[9] विसृज्याध्वर्योः प्रतिपत्तिमानं।शाश्वाच्छेदनमुपगूहानां तम् । वसतीवरिग्रहणं वा । अनस्तमिते परेणोत्तरवेदि मासनम्। प्युक्रामतेतित्रैबः । प्रतिप्रस्थातुर्वसती वरिपरिहरणम्।[10] वाग्विसर्गो यथोक्तः । सोमरक्षणम् । यथा भजते समित्त्स्वाध्यायोपयोपगमः । तत्राप्यशनम्। आगमनं सुब्रह्मण्या-ह्वानं गृहपतेः । योवात्ते नोक्तः । यस्ययस्यसुब्रह्मण्या गीयतेस सुब्रह्मण्य उपमाह्व यस्वेत्युतकोपहूतः ।[11] समिदाधानं कुर्यात्।[12] परिवाप्या दोहः । प्रत्त्युपाकरणम्। उदयनीयः प्रायणीयेनमाख्यातः।[13] तत्रविशेषः । सवनीयपात्र

---

1- का०श्रौ० 12/4/8-10.

2- उत्तरवेदिश्वोन्यांवोत्तरस्याम्। - का०श्रौ० 12/4/11.

3- का०श्रौ० 12/4/12.

4- सदः प्रविश्य पूर्वेण स्वासनेषूपविशयन्ति। का०श्रौ० 12/4/13.

5- का०श्रौ० 12/4/14.

6- 7- का०श्रौ० 12 /4/19-21.

8- तत्रैव, 12/4/23.

9- तत्रैव, 12/4/25.

10- प्रतिप्रस्थातावसतीवरीः परिहरति। - तत्रैव, 12/4/24.

11- का०श्रौ० 12/4/27.

12- तत्रैव, 12/4/28.

13- प्रायणीयेदवसुत्यमिकेप्राप्तकालत्वात् । - तत्रैव, 12/6/29, 33.

सादनेध्रुवासाद्यते सवनीयपुरोडाशेषु पूर्णपात्रा कमपि वर्गा च । सवनीय आग्नेय ऐन्द्रग्नः[1] सर्वसमास्यते वा।[2] स्तोमायनं वा[3] तृतीय सवनीयैः पुरो-डाशैः सहपूर्णपात्रः सौम्याश्विन[4] वारूणाः। नवसतीवरिग्रहणम् । नियमे-नाग्निविमोकः। श्वः सुत्याभावः । वृह्मन वाचंयछेति वर्जम् । प्रायणीये-तुविपरीतम् । वेद्यालंभादि समिष्टयजूंष्वेकादश। आसंधीदुंवरिहणाद्यवभृथेष्टिः। विशेषः । कृष्ण विषाणादिवहुत्त्वेप्यविपरिणामः । आपोवक्रमण वाच नं सर्वेषाम्। अग्न्यन्वाधानेममाग्न इतिपदे अस्माकमापो वर्चोविदःवेष्व रक्त वयव इंधनास्तन्वं पुषेमास्यभ्यत्रमंत्तापृदिशश्चतस्रोयुष्मादिभरध्य क्षाभिः पृत्तना जयेमेति विपरिणामः । पूर्ववत्त्स्नानं सर्वेषां गृहपति पत्न्याः समिदाधानम्। वृतग्रहणादि व्राह्मण तर्प्पणां तम् । कृष्णाजिनांक करणं गृहपते । सु बाहुतिः। उदयनीयाः सप्तदशगार्हपत्य पक्षे सप्तदशे च । तत्रविरोधाद्दह हवः कर्त्तारः । प्रणीतासुरव्योध्वर्युः सर्वाहवनीयानुत्तरेण निध्यात् । परिस्तरणनियण्या स्वं हविर्द्धारणमेकमेवसर्वेषामुपसर्जनीपात्रहोतृषदने च । शेषं पृथक् पात्रासादनम्। धूरीषारोहणे वेक्षमाणाय द्रव्य निरसनानि भेदेन । वृह्मन हविप्रोक्षिष्याम इति प्रश्नः । एवं सर्वत्रप्रोक्षित यज्ञं दिवा वर्द्धयत यूपत्राकस्य पृष्टे यजामानाः संतु। सप्तऋषीणां। सुकृतम्। यत्र लोकस्तत्रेमं यज्ञं यजमानांधकृत्तर्तु प्रोक्षितेति प्रश्नः एवं सर्वे प्रोक्षणेतु पूर्वान्परिग्रहान्परिगृहीथाम् । इतिपरिग्रहे। परिग्र हे। वृहस्पतयः परिगृही वतवेदीः सुगावोदेवाः सदना निसं त्वामुवर्हिः प्रथमभां साध्वंतरहिं स्राः पृथिव्यो देव्योदेव्यः संतु देवतावर्द्धयतयूयना कस्यपृष्टे यज-मानाः सन्तु । यजमानांश्चधत्तेति। परिगृहीतेति च । प्रोक्षणी रासादयत इध्मं वर्हिरूपसादयतस्रुवः संमृष्टपत्नीं सन्नह्याज्यो नादेतेति । होतृषदन

---

1- ऐन्द्राग्नः सवनीयोऽन्वहम् । - का०श्रौ० 12/6/14.

2- सर्वसमासो वा। - तत्रैव, 12/6/18.

3- स्तोमायन वा । - तत्रैव, 12/6/15.

4- का०श्रौ० 12/6/4.

मुत्तरस्यां वेदौ। अनुपरिपाद्याग्निसंमार्ग उदक् संस्थः । होतृवरणमध्वर्यो रेव । प्राशित्रहरणे मेकमत्रैव । इडाचास पवित्रैमर्जिनम् । पवित्रप्रतिपत्तिर्यथा-स्वम्। अनुयाजप्रैषो षु । ब्रह्मन्प्रस्थास्याम: समिध: । आधायाग्निदिति। ब्रह्मणप्रतिप्रसवतु प्रतिष्ठत । समिदनु मंत्रणे एतास्ते अग्ने समिधस्ताभिर्वर्द्ध स्वेति तूणप्रैषे अनुप्रहरतेति संवाद्ध्वर्यु: । एकीकृत्य भागावेक्षणम् । विभज्य-प्राशनम् । गार्हपत्य एकश्चेद्यथोक्तम् । अनुबंध्यादीक्षोपसत्यक्ष पर्युपवेशन प्रक्षयो: प्राजहितविभज्यसर्वास्वरणिषु समारोप्य निर्मथ्य सन्युप्योपदवसानाय। एका-रणिपक्षेपूर्ववद्। पयस्यामैत्रावरुणी। विभज्यसायमाहुति: । आदीपनम्। स्वगार्हपत्या नगृहीत्त्वा प्रवेशनमिति। द्वादशाह: समाप्त: ।

गवामयनेमाघकृष्णाष्टम्यां द्वादशाहवत्प्रजापत्यादिफाल्गुनपौर्णमास्यां चैत्र्यां माघशुक्लैकादश्यां वा।[1] अशक्तेस्वकाले प्राजापत्य उखासंभरणं च । प्राजापत्यउक्ता न्यूहस्थानानि। माघकृष्णाष्टमी दीक्षितानां फाल्गुनं कृष्णद्वितीयायां प्रायणीयः । माघैकादशी दीक्षितानां फाल्गुन शुक्लपंचम्यां प्रायणीयः । फाल्गुनपौणमास्यां चेद्दीक्षा[2] तत्र चैत्रस्य नवम्यां प्रायणीयमः । चैत्रस्यचे[3]दैशाखस्य पवमाने शूद्रात्रा लंभनं सर्वेषाम् । सवनांतेषु जपश्च । प्रायणीया च्चतुर्विंशमहाग्निष्टोम उक्थ्यो वा।[4] तत्र पृष्ठ्योपाकरणम् । वाणेन शततं तुनासदेवैतत्तेनवाद्यत्ते । प्राकृतमप्युपाकरणम् । भवत्येव। वृसीषूपवेशनम्।[5] होतुः प्रेंखे। अध्वर्योः फलके। उद्गातुररत्निमात्रांग्यां प्रादेशयाद्वा[6] शूद्रंवर्यमासंघाम्। स्तूयमानेकर्म। अंतर्वेदिएकः[7] प्रशंसति अपरत्र्याक्रोशे न्नित्तत्रिणः।[8] पुंश्चल्ब्रह्मचारिणौ परस्परमाक्रोशतः ।[9] वैश्यः । शूद्रश्चव्यायच्छतः।[10] परिमंडले चर्मणि हेतुभूते । तत्रवैश्यो जेता। मार्जालीयं दक्षिणे न मैथुनकरणं परिवृते।[11] क्षत्रियसंबद्दय स्वेति प्रैषः ।[12] दक्षिणां वेदिश्रोणिमध[13]

---

1- का०श्रौ० 13/1/3, 4, 5, 6, 8.

2- फाल्गुनी पौणमासे। - का०श्रौ० 13/1/3.

3- चैत्र्याबत्तर्याम्। - का०श्रौ० 13/1/6, 3.

4- का०श्रौ० 13/2/1, 2.

5- वृषीषूपविशन्ति । - का०श्रौ० 13/3/1.

6- तत्रैव, 13/3/4.

7- तत्रैव, 13/3/ 6.

8- तत्रैव, 13/3/7.

9- तत्रैव, 13/3/8.

10- तत्रैव, 13/3/9.

11- तत्रैव, 13/3/11

12- तत्रैव, 13/3/12.

13- तत्रैव, 13/3/12.

रेणास्थितस्यकवचार्यणं स्तूष्णीं ।[1] शालामपरेणगत्त्वोत्तरेण चात्वालं वशाचर्मणः । कटे आस्तीर्यस्य विशाख्यां चोद्भ्रितस्य[2] वेधः । दक्षिणेन च संगमनम्।[3] एवं द्विपरपरम्। पुरस्ताद्वेदेः कवचमोचनां सदः सृक्तिषुदुंदुभी नांवादनम्।[4] आग्नीध्रमपरेणश्च भ्रस्यस्पुछेन चर्मणाववद्यवालधानेना हरणम्।[5] गोधावीणाकाः कांडवीणाश्च पत्न्योवादयंति।[6] उपगानं चर्म्र्हन्ना विशेषाश्चकुर्वन्ति।[7] शिरः सुकुं भान् कृत्वा मार्जलीय समीपेदास्यः स्थाप्यन्ते।[8] प्रतिपर्यायं वाचनम्।[9] अपसव्यंसव्यं वास्तोत्रांतात्परिगमनम्।[10] त्रिस्त्रवा।[11] इतरथावृतिः ।

मार्जालीयेनिषिच्ययुः पूरयित्वा तत्रैवोदकुंभविधानं[12] महाव्रतधर्माः। उद्गात्रालंभ सवनांत जपाः सर्व सुत्यासु। चतुर्विंशतिमहेश्वर सुत्याभावः । ब्रह्मन्वाचयछित्यस्ति समिदाधानं च। नत्वा ध्यायीयगमः । एवं प्रभृत्त्याभिप्लविकानि षडहानि । प्रथमांत्यावग्निष्टोमौ। मध्येउक्थ्याः । ऐहिकाः

---

1- का०श्रौ० 13/3/13.

2- तत्रैव, 13/3/13.

3- तत्रैव, 13/3/16.

4- तत्रैव, 13/3/19.

5- तत्रैव, 13/3/20.

6- तत्रैव, 13/3/21.

7- तत्रैव, 13/3/23.

8- तत्रैव, 13/3/24.

9- तत्रैव, 13/3/25.

10- तत्रैव, 13/3/27.

11- त्रिसिर्वा। - का०श्रौ० 13/3/28.

12- निषिच्य मार्जालीये पूर्णन् निदधाति । - तत्रैव, 13/4/1.

सर्वैधर्मास्तत्र । ऐन्द्राग्नः सवनीयोन्वहमिति । गणाधर्म तथाभवत्येव ।
नृपत्यग्नि सवनीयाः मंथोदनतिलमाषैः पुरूषच्छितिः । कृष्णाजिना-
निधून्वानाः सत्र संयोगादभवन्त्येव। श्वः सुत्याब्रह्मन वाचं यक्षामि
त्त्वाध्यायोपगमाभावः । एवं पुनस्त्रिस्त्रि रेतानि षडहान्यावर्तते ।
अंत्येह निश्वः सुत्यामिति भवति। स्वाध्यायोपगमश्च । ततः पाष्णिकः
षडहोयथोक्तः अन्त्येहनिश्वः सुत्त्या स्वाध्यायश्च । एवमयमेकोमासोद्वा-
त्रिंशद्भिरहोभिः । अभिप्लवाधेव चत्त्वार उत्तरेनासाः षष्टेमासे त्रयोभि-
प्लवाः । तत्रांत्येहनि श्वः सुत्त्यास्वाध्यायश्च । ततः पाल्पिकः
षडहो यथोक्तः । तत्रांत्येहनिनाश्वः सुत्यास्वाध्यायश्चा पंचविंशति तमे
अहनि अभिसिदग्निष्टोमः । त्रयः स्वर समानोग्निष्टोमा उक्थ्यावा।
षष्टेमासे अष्टाविंशतिभिरहोभिरमासःपुनरग्निष्टोमो विषुवात् । तत्रद्वितीयः
सौर्यः पशुः । उदित्यमितिग्रहोगृह्यते। अतिग्राह्यवद्धोमः । भक्षवर्जम् । महा-
व्रतधर्माश्चात्र। तद्वतः स्वरसामप्रभृतिप्रातिलोम्येनषरामासाः । अभिजित्स्थाने
विश्वजिदग्निष्टोमः सुत्यास्वाध्यायश्च। एहिकां ते उभयमस्ति। षष्टेमासे
त्रयोभिप्लवाः । गोआयुषीऐह्किो अभिप्लववत्। ततः पाष्ल्कानि षडहानि
छांदोनिकानि चत्वार्ये दंदशरात्रः । त्तदंते महाव्रतमग्निष्टोमः । तत्र
प्राजापत्यो द्वितीयः पशुः । अतिग्राह्यवद्ग्रतेहो बिनइंद्रवाचस्पति विश्वं कर्म-
न्निति वा उपमायार्त्वितिभक्षणम् । महाव्रतधर्मा श्चात्र । उदयनीयश्चतुर्विंश
महरभिजित्रयः स्वरसमानोषद् । विषुवान्विश्वजि महाव्रतमितिगवामयनि-
कान्येतान्यहानि । प्राणी योदयनीयौच पृष्ठववर्ज मैकाह्किानि । तत्राप्यं-
श्वयाभ्येसत्र संयोगात। अनूबंध्यास्तितस्त्रोपियूपेवध्यन्ते।[1] त्तदपाहोमान्ते सर्व
केशश्मश्रुलोमवपनम् । पत्नीनां च । उदवसानीया त्रे धावत्ती।[2] उक्तमन्य-

---

1- अध्वन्ध्यावपाहोमान्तेद्वादेवाम् । - का०श्रौ० 13/4/23.

2- उदवसानीयां वा । - तत्रैव, 13/4/24.

तदादशाहे। अपरिस्मिन्यजनी पेष्टशमनीयः पृथक्पृथक् सर्वेषाम् । सहस्र दक्षिणो वा।[1] ऋत्त्विग्वरणाद्या दीपनां ते विशेषः । वरणं पृष्ट समनीये नाहं पक्ष्य इति । अंशवदाभ्यो चात्र तिस्त्रो नुवंध्यास्त्रैधा तवीच सहस्र दक्षिणापक्षे।[2] गवामयनं समाप्तम् । शरद्विवाजपेयोब्राह्मणराजन्ययोः ।[3]

तत्रषोडशिविकारत्वान्नाग्निः अग्निस्तु षोडशिनित भवति। अथातोग्निमग्निष्टोमेनानु यजंतित्तमुक्थेनत मतिरात्रेरोति इतरा सुसंस्थासुश्रवणात् तद्वि कारे चान्य भाव दर्शनात् । अपरेणोत्तरवेदिमौ दुंबरी-मासंदीवस्त चर्मणा स्तृणतीयंत्तदतिवाजपेये। तत्रैवाग्नेरभावइति चेत् । तत्पृ-कृतावप्राप्तेः उत्तरवेदि दर्शनात् । आश्वयुजे सुत्त्यात्त्वेत् भाद्रपदपौर्णमास्यां वृहस्पति सवः श्राद्धपूर्वकः । आश्वयुजशुक्ल दशम्यां दीक्षा। कार्तिकामावा-स्यायां चेदाश्वयुजेशुक्ले वृहस्पति सवः।[4] कार्तिक शुक्ल दशम्यां दीक्षा।[5] ऋत्त्विग्वरमाद्यादीपनां विशेषः । देवशर्मन् वाजपेये नाहं पक्ष्यइति ऋत्त्विग्व-रणम् । प्राग्दव यजनजोषणात्त् हिरण्य माला बंधनम् । ऋत्त्विजां यजमान-मानस्य पत्न्याश्च । प्रागशुदीक्षायाः संस्कृत्या ज्यंसकत गृहीतेन समित्पूर्विका एकाहुतिः पुनदीक्षणीयारंभ आहुतिः।[6] दीक्षा सप्तदश।[7] प्रायणी पादौ आहुतिः । सोमक्रयणी चतुर्गृहीता दौ आहुतिः । क्रय कालेप्रतिप्रस्थातुर्नेष्टु-र्वासोमं दक्षिणेन नासी सनपरिस्तुक्रयणं केशवात् परिस्तु द्रव्याणां[8] वा।

---

1- का०श्रौ० 13/4/8.

2 तत्रैव, 13/4/4, 13/4/14.

3- वाजपेय शरद् वैश्यस्य। - तत्रैव, 14/1/1.

4- उभयतः शुक्ल पक्षौ वृहस्पतिसर्वन यजते । - तत्रैव, 4/1/2.

5- तत्रैव.

6- देवसवितरितिजुहोति यजत्यादिषु । - तत्रैव, 14/1/11.

7- सप्तदश दीक्षा* - का०श्रौ० 14/1/20.

8- तत्रैव, 14/1/13, 14, 15.

पर्युह्यमाणेतु हरणम्।[1] दक्षिणेनप्रवेश्यदक्षिणाग्नौ पत्कापरेतेनेष्टुः सुराकरणं द्रव्याणि चेव ।[2] आतिथ्यादावाहुतिः । प्रवर्ग्यो पसदौ च । वेदिमानादौ प्रवर्ग्योत्सादने अग्निप्रयण नेहविर्द्धानप्रवर्त्तनेच । हविर्द्धानस्य दक्षिणेनापर द्वारं क्रियते।[3] खरं कृत्वानाराशंसस्थाने परम्।[4] सदः करणादावाहुतिः । आग्नीध्रीयस्यधिष्णनिवापग्नीषोमीयादौ अग्नीषोमप्रणयनेन च। सप्तदशारत्निर्यूप उत्कीर्ण समाग्रोगोधूम चषालः ।[5] प्राक्यरिव्ययणात्सप्तदशनिर्वाप्तोश्चिर्यूपवेष्टनं व्युदग्रंथनं वा। वसतीवरि ग्रहणादावाहुतिः । परिहस्तो चापात्रयोजने षोडशिपात्र मतिग्राह्यनादीनां चाकृतुकरणं षोडशिसवतम् । एकधनप्रवेशनकाले अपरेण द्वारेण प्रवेश्यनेष्टुः खरेसुरास्थापनम् ।[6] दक्षिणेन द्वारेण पात्राराषाहस्त्यपात्रे वालपवित्रेणरापावनम्।[7] अपोनिधायां ध्रवदाभ्यग्रहणं यथोक्तम् । प्रातः सवने अंतराग्रपण्योक्थ्यावातिग्राह्यान्गृहीत्वाषोडशी गृह्यत् ।[8] तस्याहोमादाग्यमनम् । तथापंचंद्राः सप्तदशापरेगृह्यंते। गृहीत्त्वा पर्यक्षं धारणम् । परिमार्जनं सादनम् । तथासप्तदशापरान्नेष्टा सुराग्रहान्गृह्णाति व्यत्यासेन ।[9] अथोक्षं धारणम् । हिरण्ययेन मधुग्रहणम् । खरमध्येसादनम् । त त उक्थ्यादि।[10] सवनीया अतिरात्रपशवः । तदनंतरं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 14/1/16.

2- तत्रैव, 14/1/17.

3- दक्षिणतः सन्धिं करोति । - तत्रैव, 14/1/19.

4- खरंकृत्वानाराशंसस्थाने ऽपरम् । - तत्रै , 14/1/18.

5- उत्कीर्णसमाग्रो गोधूम चषालः । - तत्रैव, 14/1/22

6- का०श्रौ० 14/1/26.

7- तत्रैव, 14/1/27.

8- तत्रैव, 14/2/1.

9- तत्रैव, 14/2/5.

10- तत्रैव, 14/2/9-10.

पुरस्तात्क्ष्वैष्टकोपधासम्। तद्धर्वे च स्वयमातृणाया उपरि। अर्धोत्तेधातां वच्च स्वयमातृणाया: पुरस्तात् । तस्या: पुरस्तात् द्वियजु: । तांपूर्वेणरेत: सिचौ । तेपूर्वेणविश्वज्योति: । तां च पूर्वेणविश्वज्योति: । तां च पूर्वेण-रुतव्योत्त्त्यो: पूर्वेणषाढा: ।[1] पूर्वेष्टकाद्यु दशुरव उपदधाति। प्रतीष्टकं नित्त्ये। सकृदेत्:। तिचोर्हतव्ययोश्च । दधिमधुघृत: । कूर्माजनम्। दक्षिणेना षाढामालि मात्रे अवकारस्तरणम् । तत्रापांगमं भन्निति तिसृभि: कूर्मोपधानम्। मध्यम यापहनम् । अवकाड परिष्टान्नित्ये च । स्वयमातृणामुत्तरेणार्द्धपदामात्र योरुलूखलमुसलयोरुपधानम्।[2]

प्रत्यङ्•मुखस्य। सकृन्नित्ये च । उपध्यापेषणम् । उलूखलउखाकरणम् । पुरस्तादुपशयानिवाप: । उत्वोपधान मन्त्र: । उलूखल मुसलयोरुखायाश्च निरवननम् । सृवाहुतिहोम:।[3] असंवत्सरभृति उपस्थानम् वा।[4] शिरसिहिरण्य शकलप्रासनम्।[5] प्रथमं मुखेपुनर्दक्षिणस्या नासिकायाम्।[6] तत उत्तरस्याम् । एव यक्ष्णो: । श्रोत्रयोश्च।[7] एवंप्रतिशिर: । एकशिरसि पंचशिरोव्यासिपक्षेएका शिरसि सर्वहिरण्यप्राशनम् । पुरुषशिरसि उद्गृहणम्।[8] उखायामध्ये उपधानम्। उत्तरपूर्वकोणेश्च शिरस उपधानम्। दक्षिणपूर्वेगो: । अपरोत्तरे अवे: । दक्षिणापरे अजस्य।[9] प्रतिशिरोनित्ये। मध्येमेर्धर्चिश: । सृवाहुती। तत उपस्थानं[10]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 17/4/25-26.

2- तत्रैव, 17/5/3-4.

3- तत्रैव, 17/5/5.

4- उपस्थानं वाऽसंवत्सर प्रभृतेन । - तत्रैव, 17/5/6.

5- का०श्रौ० 17/5/7.

6- नासिकयोश्चि त्वेति । - तत्रैव, 17/5/10.

7- श्रोत्रयोरभूदिदमिति। - का०श्रौ० 16/5/11.

8- सहस्रदाइतिपुरुषशिर उद्गृह्यमध्ये। - तत्रैव, 17/5/14.

9- का०श्रौ० 17/5/15-16 गोऽजयोश्च दक्षिणत:।- तत्रैव, 17/5/16.

10- एत्य च त्वंयनिष्ठेति चित्योपस्थानम् । - तत्रैव, 17/6/1.

स्वयमातृणामपरेणेत्त्यानूकां तेष्वपस्योपधानं पंचानां पंचानाम्।[1] पूर्वानूक्यामभितोर्धपद्ये। शेषेषु पद्या: ।[2] प्रतिदिशंनित्त्योप्राणभृत्तांकर्णसहितानामुपधानं दशदशानाम्। पूर्वदक्षिणकोणेप्रथमम् । पुनरुत्तरापरे।[3] ततो दक्षिणायो। ततः पूर्वोत्तरे पूर्वकोणयो: स्वयमातृणासंलग्नेर्धपद्ये। पश्चात्त्या दोने रेत: सिग्वेलाया मन्यादश।[4] कर्णसहितासंलग्ने द्वे द्वे। पश्चादनूकभितश्च । द्वादशसु द्वादशसुनित्त्ये। पुरुष मुपार्ययवा। अस्मिन्पक्षे पुरुषा दारभ्य कर्णांतं यावत् । कर्णादारभ्यपुरुषां तं वा। एवं हि श्रूयते ताह्कैयु रुक्ममुपार्थोपदधतीप्रत्तप्रकृत्य एषवै प्राणस्तमेता विभ्रति यत्प्राणं विभ्रति तस्मात्प्राणभृतइतिएवं प्राप्ते आहनं तथाकुर्या देशोह्वैप्राणोय एषहिरण्मय: पुरुषस्तस्य त्वयमात्त्या यावदिदमभ्यपमग्निर्विर्हितस्तद्य दास्यैता अंगं नाभिप्राप्त्नुयु: प्राणोहास्य तदंदं नाभि प्राप्नुयाद्दुवैप्राणां गंनाभिप्राप्नोति शुब्यति वावैत तुम्ला यत्तिवातस्मादेता: । पूरिश्रित्स्वेवो पार्थोपदध्यादिति । केचित्त स्वयमातृणायां समं त्तं प्राणभृतो पधानमिछंति तदयुक्तंश्रुतिविरोधात् ।[5] ताह्केपुरुषमुपार्थोयदधतीति। पंचशिर:पक्षे पूरणं कल्प्यम्। लोकंपृणा: षट्सप्ततिं पादमात्र्य:।[6] तन्मध्येष्वेकेकामर्धपद्यांपुरस्ताच्चार्द्धपद्यास्थाने पादमात्र्यौ। पत्करणं अपस्यान्नूक्यामभितोर्द्धपद्ये। पूर्वयो पुरुषयो: प्राणभृता चपरेण पद्यास्थानेर्धपद्ये द्वे द्वे।[7] पूर्वार्द्धे द्वादशपद्या। अपस्या संलग्ना: षोडशच पश्चादपस्या संलग्ना एव। विश्वज्योतिषमभितो-

---

1- का०श्रौ० 17/6/5.

2- प्रत्येत्य शेषम् । - तत्रैव, 17/6/6.

3- उत्तराड परेण। --तत्रैव, 17/8/5.

4- का०श्रौ० 17/6/3, 17/8/1, का०श्रौ० 17/12/6.

5- तत्रैव, 17/8/12-20.

6- तत्रैव, 17/8/25.

7- तत्रैव, 17/10/1.

धर्मपदे। तत्वेलायां चपश्चात् द्विपशुष्वेचैवम्। द्वादशानामर्धमध्यानां पूर्व दक्षिणेपूर्वार्धपदायां उपधानम्। दक्षिण परेयं चानामुपधानम्।[1] उत्तरापरेच-त्तसृणामुपधानं पूर्वोत्तरेर्धपदेऽपधी येते। एकत्रिंशदधिक शतद्वयं चपादभागानां प्रतिपुरुषमितिविभागः। दक्षिणपूर्व कोणादारभ्यप्रदक्षिणयोगेनस्वयमातृण्णया अवच्छादयतः। पूर्वान् कांतंयावत् प्रत्येत्या वशिष्टं छादयति। प्रथमंद्वयोर्मंत्रः। पुनर्दशसुदशसु। पक्षपुच्छेभ्यश्चेभ्यः पराक्रमनम्। दक्षिणपक्षेषट् पंचाशतं पादमात्रीणां तिस्रोर्धपदाः। पंचां शेच शत्तेयांद भागानां एकैकस्मिन्पक्षे पक्षेपंचाशतं पाद-मात्रीणम्। सप्तार्ध पदाः पंचशेच शतेपादभागानां एकैकस्मिन्पक्षेपक्षेपंचाशतं पादमात्रीणा सप्तार्धपदाः षड्विंशेचशते पादभागानां पुछे। उत्तरोदि-क्षिणेन व्याख्या तः पक्षः। चात्वालदानीय मध्ये पुरीषनिवपनम्।[2] पूर्व-मध्यांतकछादनम्। प्रतिदक्षिणामात्मानम्। पक्षपुछानां च।[3] एवं सर्वचितिषु। पुरीषवत्या श्रितेरूपस्थानम्।[4] द्वितीयायामाश्विन्युपधानां रेतः सिग्वेलायां द्वितीयेलोके अनुकमुत्तरेण पूर्वा। दक्षिणा अनूकम्।[5] अपरेण अयशः अर्कं दक्षिणेन। उत्तरा अनूकमपरेण। दक्षिणामुत्तरेण पंचमी। तेचार्धपदेप्रतिकष्टं नित्ये। पूर्वयोरेवोपरि ऋतव्योपधानम्। सकृन्नित्ये। वैश्व देवीराश्विना नूकांत्तरे ष्वुपदध्याति। तथेतरा अनूक पार्श्वेषु वैश्वदेवी संलग्नाः प्राणभृतः प्राणभृत्संलग्नाः अपस्याः। सर्वासामाश्विनीवद्दक्षिणतोर्धपदाः। अनूकांतेषु वयस्योपधानं पंचानां पंचानांचतस्रः पुरस्तादनूकमभितो जंघामागोप्रतिदिशं नित्ये। पूर्वाउपधायदक्षिण उत्तरतः पश्चात्। दक्षिणश्रोणेरधिलोक पृणोपधानं पूर्ववत्।[6] दक्षिणश्रोण्याम्। जंघामात्रामुत्तरातृामध्यर्धेजंघामात्री। श्रेगार्हिरण्यध्यर्धा च

---

1- दक्षिणाश्रोणेरधिलोकम्पृणाः पूर्ववत्। - का०श्रौ० 17/8/25.

2- का०श्रौ० 17/11/22

3- पुच्छसद्वा वैके। - तत्रैव, 17/12/19.

4- का०श्रौ० 17/12/15.

5- तत्रैव, 17/10/17; 17/12/13

6- दक्षिणाञ्चात्प्रत्यगरत्निमात्रादधिलोकम्पृणा पूर्ववत्। -
- का०श्रौ० 17/12/23.

पुनर्व यत्यान्तः पूर्वेणाप्यध्यधात्रिग्रा हिणी जंघामा अध्यर्द्धजंघामात्री च एवमुत्तरतः पुरस्तात्पश्चाच्चयम् । त्रिग्राहिणीस्थानपुरस्ता ज्जंघामात्र्यौ एवमपरयोः पुरुषयोः । द्वात्रिंशा द्वात्रिंशात्तार्द्धः पद्यालोका व्याप्ता भवन्ति पूर्वयोः पुरुषयोः पादोनास्त्रयस्त्रिंशत् । प्रतिपुरुषंषद् षद् पाद-मात्र्यः । तिस्रस्तिस्रो र्धपद्याः।एकोन चत्त्वारिंशे च शतेपाद भागानामुपधेये। अपरयो र्द्वौ द्वौ। अर्धपादभागा वधिकौ। पक्षपार्श्वेषु त्रिगाहिरण्यः पंच पंच। स्रक्ति जंघांतरेषु अध्यर्धाः । सप्तसप्त । पुच्छपार्श्वयोश्चतस्रश्च तस्रस्त्रि ग्राहिरापः स्रक्ति जंघांतरेस सैवाध्यर्द्धाश एवं प्रतिपक्षे षड्त्वारिंशत्सार्द्धाः पद्यालोका न्यासाभवन्ति। द्वानवते नशतद्वयेन पादभागानां अर्धपययाच वसिष्ट व्याप्तिः । पुच्छेतु सार्धारास्त्रि चत्वारिंशत्पद्या लोका व्याप्ता भवन्ति। पंचषष्टेन शत द्वयेन पादभागानां अर्द्धपादभागाभ्यां चशिष्टव्याप्ति उक्तः कृमः प्रथमायां पूर्ववत्पुरीषनिवापः । उपस्थानं च अपराह्लेसता नूनप्रवृत-प्रदानम् । प्रवर्ग्योपसदौ उपास्तमयमश्च परिणयनं पशुवद्युत्सर्गः । तावत्प्रति परिगणम्। वाग्वंधृषादि यथोक्तं भस्मोद्धपन समिदाधानवर्ज आप्राप्त-वाग्विसर्गात् । भवः प्रतिपदिद्धिस्तनं वृत्तकरणं शिक्यनिधानां तम्। तृतीयायां स्वयमातृणो पधानं वैश्वदेवीवत् विश्वज्योतिष उपधानम्।[1] रुतव्योपधानमर्धोत्तेष्ठयोः कूर्मवद्वकाः । सकृन्नित्ये। तयोरेवापर्यपरे पूर्वार्द्धिदशप्राणभृतः सकृन्नित्ये दक्षिणेप्यथेछंदस्याद्वादश। अष्टानां छंदस्याना-भितोर्ध पद्ये। सकृन्नित्ये। एवं पश्चादुत्तर तश्च । बालखिल्या लोकस्य प्रावण्य श्चिमाः ।[2] प्राणभृत्संलग्नाः । सप्तवालखिल्याः।[3] मध्यमाम-भितोर्द्धपद्ये पश्चात्पद्याः । उभयत्रनित्ये। जानत्य जुष्मती रूपदधाति। उत्तराश्रोणे रारभ्यपूर्ववल्लोकं पृणोपधानम्। स्रक्तिषबृहत्यः। प्रथमयतृतीयो वतितिष्ठ सप्ततीनां पादमात्रीणांषोडशाना मर्धपद्यानां च विभागः ।

---

1- विश्वकर्मेति विश्वज्योतिषमुपरिपूर्वस्या। - का0श्रौ0 17/9/3.

2- बालखिल्यलोकपश्चाच्छिद्वा। - तत्रैव, 17/9/10.

3- बालखिल्यासप्तपुरस्तात् ।- तत्रैव, 17/9/11.

कर्णसहिता: प्राणभृत्स्थानेषु सप्तसप्तारेतः । सिग्वेलायां[1] अष्टौ। बृहती संलग्नेतु द्वे द्वे पश्चात्छंदस्या अभितए कैकासार्द्धा। उत्तर पार्श्वे छन्दस्या अभितो द्वे द्वे पद्ये सार्द्धे । एवं दक्षिणे । पुरस्तात् प्राणभतोभितस्तिस्त्र: । प्राणभृत्संलग्नानां बालखिल्यानामभि तश्चतस्त्र: सार्धा: द्विश्यास्त्वभितोर्ध-पद्या: एवमपरयो श्चोश्च त्वारिंशच्चत्वारिशत्यादाधिक लोकव्याप्ति:। तयोरेको न चत्वारिंशछतद्वयं उपधेयं। दक्षिणेपक्षेषट्यां चाशतं पाद मात्रीणां षट् पंचाशदधिकं पाद भागानां शतद्वयम्। पुछेपंचाशत्यादमात्र्य: चतस्त्रोर्द्धपद्या: दात्रिंशदधिकरणं तद्वयपादभागानाम् । उत्तरोदक्षिणेन व्याख्यात: । पूर्ववत्पुरीष निवपनम् । उपस्थानं च। चतुर्थ्या अनूकांषु मृत्युमोहिन्युपधानम्। प्रागनूकमुत्तरेण प्रथमापश्चिमानूकां तं दक्षिणेन द्वितीया तृतीयादक्षिणे नूकां ते चतुर्थ्युत्तरे नुकांते पद्यालोकं दक्षिणे न। प्रतीष्टकंनित्ये। पूर्वापरे जंघामात्र्यौ दक्षिणोत्तरेपद्ये तात्संलग्नश्च। तद्दुपरिष्टाद्भविष्यन्ति। पूर्वामपरेणसंलग्ना-श्चतुर्दशार्धपद्या उपधायसकृन्नित्ये। अपरामृत्युमोहिन्य: पूर्वादक्षिणेन। अपरा-मुत्तरेण। दक्षिणामुत्तरेण। उत्तरामुत्तरेण। प्रतीष्टकं नित्ये। चतुर्दश संलग्ना: षट्। सकृन्नित्ये। रूत्तव्योपधानां रेत: सिग्वेलायां सृष्टी: सर्वतोनूकमुभयते। द्वे द्वे।[2] दक्षिणत: पंचा तदनूक्यामभितोर्धपद्ये। प्रदक्षिणम्। सकृन्नित्ये। उत्तरां सादारभ्य लोकंपणा: पूर्ववत्।[3] दक्षिणोत्तरयोरभितश्चतस्योद्पद्या:। चतुर्दश-शानामभितोर्धपद्ये द्वे द्वे। षणां चैकेकाम्। श्रोण्योरंतरे वृहत्यौन्निग्राहिण्यौ-पाद मात्र्यौ च। एवं पूर्वयो: पुरूषयो: पुश्चत्वारिंशच्चत्वारिंशद्यालोकाव्या-त्याभवन्ति । अपरयो: पुरूषयो: चत्वारिंशत्यादत्यादभागन्यू  : । पूर्वयो: पुरूषयो: पादभागानांच त्वारिंशदधिकं शतद्वयं शतद्वयमुपलभ्यम् । एवमपरयो: पुरूषयो: अर्धपादभागौ द्वौ द्वावधिकौ चतुर्दशषद्दक्षिणमृत्यु मोहिनीभ्यां उत्तरांश्चे त दक्षिण श्रोणिसक्ताष्टा वृहतीन्निग्राहिणी पादमात्री

---

1- का0श्रौ0 17/10/17.

2- तत्रैव, 17/101.

3- उत्तराशादद्विलोकम्पृणा: पूर्ववत्। - तत्रैव, 17/10/18.

चोत्तरांसेदक्षिण पूर्वकोणे चान्यतरतोर्धपद्या: । तत: पुरूषात्षड्विंशतिपाद भागानपनीयता वतोर्ध पादभागानुपदध्याद। तस्मिन्पक्षेदक्षिणश्रोण्यां च वृहत्यादि। पक्षपुच्छचयनमुक्तं द्वितीयाम्। पुरीषनिवपनोपस्थाने पूर्ववद् । पंचम्या मंतेष्वाश्विनी वद प्रसन्ना:। दक्षिणेअरन्नयंतरे पद्ये च । पूर्वा मुपधाय पश्चिमा। प्रतीष्टकं नित्ये। पूर्वामपरेणार्धपद्यालोकं विहाय विराज उपधीयन्ते। अनूक्रमभित: पंचपंचार्धपद्या: । दक्षिणत: पश्चादुत्तरश्चषद्पद्या असपत्नासंलग्ना:। दशलृदशसु नित्ये। आबाढावेलायां स्तोमभागा: प्राग-नूकमभितश्च तत्र: । एवं पश्चाद । दक्षिणत: सप्तामध्यमामभितोर्ध पद्ये। उत्तरत: षद् सप्तवा। सप्तचेन्मध्यमामभितोर्धपद्ये। प्रदक्षिण मुपधानम् । सकृन्नित्ये स्तोमभागा सु पुरीषनिवाप: । अनूकेषुपूर्व वर्ज मृतव्या वेलायां अश्विनी वन्नाक सदुपधानम् । अधोत्तेधानां पुरीषमोच्ये। परिएव मेव पंच-चूडानाम्।[1] पश्चिमोत्तमोपधीयते । वक्ष्यमाणा स्तत्र: । मध्यमामभितो-र्धपद्ये। प्रागनूक्रान्ते गायत्रीरेत: स्त्रिग्वेला यांत्रिष्टुभ: । तद्वेलायामेत्य-पश्चाज्जगती: तत्संलग्नाअपरतोनुष्टुभ: । स्तोमभागासंलग्ना: पुरस्ता-द्बृहती। गायत्रीरपरेणार्द्ध पद्याउष्लिह: । विराड्वृहत्यं तरेभद्रोन इति ककुभ: । भद्रोनोअग्निराहुत: सुभगभद्रो अध्वर: । भद्राउतप्रशस्तयोभद्रं मन: कृणु ष्व। येना समत्सुना सह: । येनासमत्सुसावहस्तनूहिश्रूरिशर्धताम्। वनेसात्ते अभिष्टिभिरित्यं प्रकारा मन्त्रा: । दक्षिणेनूक्रातिर्पङ्क्ति: । उत्तरेपद-पंक्ती।[2] पंचम्यस मानायां पूर्वांचित्यां पुरीषदत्वात्ततसंलग्नां पद्यामति छंद समुपदधाति। प्राग्लक्षणे चैते। अपरे नूक्रान्ते द्विपदा: । प्रतिदिशंनित्ये। मध्येष्टेष्टकस्य गार्हपत्त्ये सोपधानं पूर्ववर्द । अर्द्धवृहतीस्थानेर्धपद्या: । सर्वा अर्धोत्तेधा: । उपर्येवमेवपुनश्चियति: । गार्हपत्य: पुछउ संधश। चेद विराड्•गण मध्यमेवेद्विपदाश्चाधोत्तेधा: । गार्हपत्यस्य पूर्वभागे सर्वोत्तेधीं पादमात्र्यौं। पूर्वार्द्धे चेत्पुनश्चित्युपधानम्। तस्मिन्पक्षे पुनश्चित्यर्थे गायत्र्यो

---

1- का०श्रौ० 17/12/2.

2- उत्तरेप्-पंक्तिशनेतपद्येति । - तत्रैव, 17/12/14.

मध्यमा उष्णिगभितोर्ध्वद्वयोः अर्ध्वम्। अधिद्विविराजौ ककुभश्चेत्यर्धौ त्रेधाः षद् पद्यालोका: रूत्तव्योपधानां विश्वज्योतिषश्च[1] दक्षिणां सात्पृत्यगर त्निमात्रादधिलोकंपृणा: पूर्ववत्।[2] पुछ द्वयोत्यो: पादलोकावष्टौ मध्यत-आपूर्ववर्तातत्समध्यमभाग इति । मध्यमभाग एवं पद्यालोका: षट्पंचा शत्सा-र्धा व्याप्ता भवन्ति। दक्षिण भागे सार्धास्त्रयो विंशति: उत्तरे सार्ध एक विंशति: प्रतिविभागमुपधेयम्। मध्यमेवाद्भागानधिकानुपदध्यात्। दक्षिणोर्ध-पादभागान्। मध्य मेभागे रूज्वालिलिखता: । दक्षिणोत्तरयार्वक्रालिखित: । मध्यस्तनचितिषु उक्तानुक्रमध्यस्य दक्षिणेमत्स्यद्धये। उत्तरे चोर्दविलक्षणानि। पूर्वा-परयो: प्रांचिपूर्ववत्पुरीषनिवाप: । विकर्ण्युपधानम्। तांदक्षिणेन स्वयमातृणाया: सकृन्नित्योमाभगानं हिरण्यशकलै: प्रोक्षणम्। पुरूषाभिहोमवत्प्रतिदिशं शातद्वयं शत द्वयं प्रकिरति।[2] शतरूद्रियहोमे जुहोतिस्तत्रजंघामात्र्यादि षुपरिश्रित्स्वगन्य-न्वाहान।[3] ब्रह्मोपवेशनमं परिश्रितो दक्षिणेन प्रणीतापणय तं तालाभिवोत्तरेण। परिश्रिताभिव परिस्तरणम्। पात्रासादनम्। दशगणौ कपालस्थाने कर्परम्। भर्जनम्। अर्धवत्त्यन: पात्री वा। पवित्रछिदनानि पवित्रे आज्यस्थाली कुश-मुष्टि: । अभ्रि: पक्षेयोक्तं स्रुवोध्रुवासन्नह ना वछादनानि। परिधय: । विधृत्त्यौ आज्यम्। उद्धरणपात्र्येका। जुह्वपभृत् । अर्क्व पर्ण शृतावदानमौषधंम्। पूर्णपात्रम्। कर्मापवर्गोवित। उपकल्पनीयानि चात्रनिकावर्हि: इध्मकाष्ठमेकम्। अर्कवकाष्ठं च। शूर्पाग्नि होत्रहवण्योरादानादि सादनांते विशेष: । चतुर्मुष्टिकानां पंचविंशत्य धिकशत-चतुष्टयं गृह्णयते । पवित्रकरणादिप्रोक्षणी निधानां तं विवेकी करणम्। कर्पराधिश्रयणम्। गवेधुकानां कर्परप्रक्षेप: । पर्यग्निकरणम् । उद्वास्यतनम्। कृष्णा-जिनादानादिकंडनं कणां तं कुक्कुटाहननमत्रेवागवेधुकानां श्रपणापकर्ष: । सर्जनो-पधानम्। कृष्णाजिनादानादिपेषणम्। अर्द्धपिष्टे आज्यनिर्वापो वेदवंध: । अपिष्ट-

---

1- विश्वज्योतिष परमेष्ठीत्वेति । - का०श्रौ० 17/12/22.

2- दक्षिणांसात्पृत्यगरत्निमात्रादधिलोकम्पृणा: पूर्ववत् । - तत्रैव 17/12/23

3- तत्रैव,

4- तत्रैव, 18/1/1.

पेषणम्। प्रोहरसामीक्षणम् । तिलानां च। तिलानां भर्जनप्रेक्षेपः । पर्यग्निकरणम् । अनंतरं मेवोद्वासनम्। वेदमानादिसम्मर्शनां संभूतत्वान्न तु क्रियते। परिश्रितो परणार्थवदेदिस्वननम्। उत्तरपरिग्रहः। अनुमार्जनम्। प्रोक्षण्यासादनम्। स्प्य-स्रुवं च प्रहरणे च । पाण्योर वनेजनम्। स्प्ये वर्हिरासादनम्। स्रुक्संमार्जनाद्यात्मा लंभनां ते विशेषः । जुह्वंसमृज्य अर्कपत्रसंमार्गः । पत्नीसंनहनं वा। आज्यग्रह णम्। ध्रुवाया मेव यावत् स्यात्तस्य दक्षिणश्रोण्यां संन हननिधानम्। तावत एवस्तरणम्। आहवनीयकल्पनोल्मुकाभावः । परिधिमुपस्पृश्य समित्रिरसनम्। नद्वितीयाधानम्। जूहमासाद्यार्क्क पर्णा सादनम्। जतिलमिश्रीकृत्यप्राणदानम्। परिश्रितुप वाजनम्। पूर्वाधारः पन्चवर्कपर्णे उपस्तीर्ययावद्ग्रहखजं द्विदिरवदाना-न्गृहीत्वा प्रत्युपस्तारः । अवर्ककाष्ठेन शानयतो नमस्त इत्यध्यायेन संततो होमः । अनुवाकांतेस्वाहाकारो जानुमात्रे पंचांते च नाभिमात्रे। प्राक् प्रत्यवरोहे-भ्योमुखमात्रे प्रतिलोमं प्रत्यवरोहाः । परिश्रृत्तु स्रुग्धानं पवित्रप्रतिपत्तिः परिश्रृत्संमार्गः । सार्क्कपर्णव्यूहनम् । अभ्युक्ष्य जुह्वापरिध्यंजनम्। प्रस्तरादानं मध्यमूलयोध्रुवमेवांजनम्। तृणग्रहणे प्रस्तरप्रक्षेपः । आत्मालंभः । उदकोपस्पर्शनम्। परिधि प्रक्षेपः संस्रवाहुतिर्विश्वेभ्यो देवेभ्य इति । धरिविमोकः । वेद्यालंभः वेदविमोकः । पक्षेयोक्तस्य समिष्टयजुर्वातायेति वर्हिहोमः । प्रणीता विमोकः। राक्षसभागः । पूर्णपा त्रादिकर्मापवर्गा तं चात्वाले अर्क्क पर्णकाष्ठयोः। प्रासनम्। अजाक्षीरं चेदग्न्य न्वाधानादनं तरं शाखाछेदनम्। पवित्र वंधनातम्। पंचविंशत्य-धिकशतचतुष्टयस्यबह्वगणामपाकरणम्। पात्रासादनेतावत्य उखाःप्रधानयागेतावंति द्विरवदानानिगृहीत्वा पूर्ववद्धोमोर्क्क काष्ट वर्जितमितिविशेषः । चित्यं परिषे कोग्नीधः । तत्र दक्षिणेनिकक्षेद्धि निधानम्। तत्र आरभ्यप्रदक्षिणं कुंभेव परिषेकः ।[1] अद्रौ कुंभनिधानम्।[2] पुनरादायैवमुद्धिपरम्।[3] तावत्प्रतिपरिगमनम्।[4] कुंभेद्धिनिधानम्।

---

1- का०श्रौ० 18/2/1.

2- तत्रैव, 18/2/2.

3- तत्रैव

4- तावत्प्रतिपर्येति। -तत्रैव, 18/2/3 .

दक्षिणे वेदिश्रोणौ प्रादिष्टतोनिरसनम्।[1] अभिन्नेभेदनप्रैषः ।[2] प्रतिप्रस्थातुः। अध्वर्योरभिद्भिभेदनम्। अनपेक्षमार्गनम्।[3] यजमानस्य प्रार्थयां तेजपः। मंडूकादि वेणुयष्ट्यां बध्वा मंत्रकृष्टवत्कर्षणम्।[4]पक्षपुच्छानामात्मा नमसि अंत्यमुत्तरम्।[5] उत्करेवेणुयष्टिकरणम्।[6] चित्त्यमालभ्यतिष्टोत्तोहिं कृत्यसामगानमध्वर्योर्यथोक्तम्। अग्न्युवध्यप्रैषः। अपराह्णेव्रतप्रदानम्। प्रवर्ग्योपसदम्। अश्वपरिणयनादि यथोक्तम्। प्रातर्वाग्विसर्गा तम्। रात्रौ व्रतकर णांते औदुंबर्यास्तिष्ठः । समिध्येधूते उप्यंत इति विशेषः। औपवसथ्ये द्वितीयायां एकस्तनं व्रतम्।[7]पंचगृहीत्वा तं गृहीत्वा तत्रपंचहिरण्यशकलपातनम्।[8] दधिमधु घृतं पात्र्यांस्थाल्यां वा महामुख्याम्। कुशमुष्टिं चोपरि । उभ यमादायचित्यारोहणं च।[9] एवमारोहणावरोहणगते प्रवर्ग्योपसदम्। अर्धव्रत प्रदानं सर्वस्य वा । पुनः प्रवर्ग्यौ पसदनं प्रवर्ग्योत्सादनं यथोक्तम्।[10] अग्नौपरिव्यं तेदेवाः ।[11] अग्नौ चेत्स्वयमातृणा[12] संलग्नः प्रथमो महावीरः । पंचगृहीतहोमः समित्पूर्वक एक चर्चा । पूर्वसंस्कृता देव षोडशगृहीता-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अभिन्नेभेत्तवेब्रूयात् । - कात्यौ0 18/2/>.

2- तत्रैव, 18/2/9.

3- तत्रैव, 18/2/10.

4- तत्रैव, 18/2/11.

5- वेणुमुत्करेकृत्वाचित्यमालभ्यतिष्ठन् । - तत्रैव, 18/2/13.

6- हिंकृत्यसामगायति पुरस्ताद गायत्रम्। - तत्रैव, 18/2/1.

7- तत्रैव, 18/3/3.

8- तत्रैव, 18/3/5.

9- तत्रैव, 18/3/4.

10- तत्रैव, 18/3/9.

11- उपसदन्तौ प्रवर्ग्या त्सादनं यथोक्तामग्नौपरिव्यछेवाः - तत्रैव, 18/5/9

12- स्वयमातृण्णास्पृष्टं प्रथमम्। - तत्रैव, 18/3/10.

र्धमसमित्कं अनुवाकशेषेणा[1] तथा चक्षुषः। पितेत्य पुरमनुवाकेन घृतोषित समिदाधानम्।[2]अग्निप्रणयनम्।[3] तत्रप्रति प्रस्थातुरिध्मोप्रथमन्योरूवमनप्रैषः । शेषमध्व र्योः। त्रिरूक्तायामुद्यमनम्। चित्यंपरिसमनम्।[4] सर्वेषां मन्त्रः । ब्रह्मणोप्रतिरप्य जपः । आग्नीध्रदेशंदक्षिणेन पृष्ठ्या[5] सतवनस्पृश्नेरश्म उपधानं नित्य वर्ज[6]अतिक्रमणं सर्वेषां मन्त्रः । स्वयमातृणायाः उपरिप्रतिप्रस्थातुरग्नि धारणम्।[7] अध्वर्योः शुक्लवत्सापयसाभिहोमः । तत्र ब्राह्मण तर्पणां तेविशेषः अग्न्यन्वाधानम्। शुक्लवत्सायाः कृष्णाया गौरेकेस्या एवदोहनम्। उपभृतदतंतरं दोहनस्या सादनादि स्थल एव। वेदिखननानाभावोर्थलोपादनुमार्जनं च । जुहोति धर्माः शतरूद्रिये उक्ताः । दोहनस्वयमातृणवमवसिं चनोद्धिरदानहोमः कर्मापवर्गा ते पैतुदारवादि। तत्राग्निधानम्।नित्ये च समिदाधानम। यथासूत्रि तंतू वादिहोमः। तेनैवसंस्कारेण समिधामाधापपूर्णाहुतिः।[8] अनुक्तमपि सर्वत्रति छटतः । समिदाधानम्।[9] तत्रोपादानं इछतश्चित्यभिमर्शनम्। वैश्वानरोयजतिर्या वदुक्तश्च मारूताजुहोतयः । वाचस्पतिप्रैषः । प्रणीता प्रणयनम्। परिस्तरणमा हवनीयदक्षिणा दन्योः । पात्रासादनम् दशगणेस्पृयेग्निहोत्रहवण्यस्त्ये व पवित्रैच। वैश्वानरस्य कपालाग्नि द्वादश। इतरेषां सप्तसप्त। मर्धवत्पुनः पात्री वा। उपवेषः । आज्यस्थाल्युपसर्जनीषात्रं कुशमुष्टिः पक्षेयोक्तम् । सुवोधृवा संहननावछादनानि। परिछदमवर्हिश्चशूर्पाग्नि होत्र हवण्यो रादानादि ग्रहणेविशेषः । मंत्रवद्वैश्वानरस्य

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 18/3/11-12.

2- तत्रैव, 18/3/14.

3- अग्निं प्रणयति। - तत्रैव 18/3/15.

4- तत्रैव, 18/3/15-19.

5- तत्रैव, 18/3/10.

6-नानित्ये। - तत्रैव, 18/3/21

7-तस्यामग्निं निदधाति सुपर्णोसीति वषट् कारेण। - तत्रैव, 18/4/4.

8- पूर्णाहुतिं च सप्तत इति। - तत्रैव, 18/4/9.

9- तिष्ठन्समिधः सर्वत्रमध्ये। - तत्रैव, 18/4/10.

ग्रहणम्।[1] इतरेषां तूष्णीं प्रोक्षणं च पात्रप्रोक्षणेध्रुवामारूतकपालोद्धरणपात्र्यः।
पूर्णपात्रं कर्मापवर्गां वेतितूष्णीं हवदुपलम्[2]च। कुक्कुटाहननं तूष्णीं फलीकरणं च।
वैश्वानरचितिं निर्वत्यदक्षिणोत्तरौमारूतौ। पश्चाच्चसंकृष्टतरौ। एव मपरौ च।
सप्तमंपश्चात्। होमासादनयोश्चैवं । मारूतानां कर्मविशिष्टकम्। तूष्णीवैश्वानरस्य
मंत्रवत्। मंत्रवत्पर्यग्निकरणम्। पुछादपरमासादनं केचिदिछंति।[3] तद युक्तम् ।
आहवनीय सहितमेवकुशानामस्तरणम्।[4] उत्तरपरिग्रहाद्यनुमार्जनाभाव श्चेतिसिद्धान्तः।
न प्रोक्षणीप्रैषः । उक्तहेतु चा द तूष्णीं स्फ्यो दं च प्रहरणम्। नपाण्योरवनेजनम्।
पत्नी संहननं वा। ध्रुवायामेव चतुर्गृहीत ग्रहणम्। वर्हिषः स्रुक्भ्यां चेति प्रोक्षणम्।
नोल्मुकोद्वहनम्। अद्रव्यवत जुह्वप्रभृतोरासादनम्। तूष्णींध्रुवायाः । मारूतानां प्राण-
दानकपालां जनोद्वासनालंभनानि तूष्णीं। नानुयाजसमित्परिशेषणम्। तूष्णीं निद्र
वं कृत्वा एक गृहीतेनोत्तराघार इन्द्रायस्वाहेति न प्रयाजाः । उपविष्टस्यैवाग्नये
सोमायेति च आज्यभागौ। सर्वहुतं वैश्वानरं कृत्वाहस्तेन मारूतं जुहोति। वैश्वा-
नरे वा। तस्मिन्पक्षेवैश्वानरः पृथुत् कार्यः । अतःप्रभृतिपावदेवोच्यतेतावदेव
भवति। अग्निसंमार्गव्यूहनम्। अभ्युक्षयपरिध्यं जनाद्यात्मालंभनां ते परिधिप्रक्षेपः।
संस्रवाहुतिः धुरिविमोकः। तूष्णीं वेद्यालंभः । पिष्टलेपाहुतिः । वेदविमोकः।
पक्षेयोक्तस्य। आवेदेस्तरणम। समिष्टयजुर्वातायेति। वर्हिहोमः । प्रणीताविमोको
राक्षसभागः । पूर्णपात्रादि तूष्णीं गार्हपत्यो पस्थान वर्जम्। इन्द्रं दैवीरिति
जपः।[5] इमं स्तनमितिवाचनं वा यजमानस्य।[6] जपश्चेदध्वर्योः । वसोर्धाराहो-
मोयज मानस्य। तत्रौ दुंबर्याः।[7] स्रुचोर्थवत्परिमाणम्। स्रुवेण च गृहीतग्रहणम्।

---

1-का०श्रौ० 18/4/23.

2- विमुखेनाख्येऽनूच्यम्। - तत्रैव, 18/4/24.

3- तत्रैव, 18/4/22

4- तत्रैव, 18/4/22

5- इन्द्र दैवीरिति जपति । - तत्रैव, 18/4/25.

6- इमंस्तनमिति वाचयति। - तत्रैव, 18/4/26.

7- तत्रैव, 18/5/1.

इत्येवोच्येहोमोऽग्निप्रासेवाजश्चम इत्यष्टानुवाकेन प्रतिकल्पः स्वाहाकारः। स्रुक्यासनम्। तत्संस्कारादेवसमित्पूर्वकः। पार्थहोमः।[1] वाजप्रसवीयहोमाम्।[2] जुहोति। तत्रशाखाछेदनाद्यु पगूहना तम्× सप्तानां षड्वर्गाणामपाकरणम्। ब्रह्म-णउपवेशनम्। प्रणीताप्रणयनम्। परिस्तरणमाहवनीयस्यपात्रासादनम्। दक्षागणे अग्निहोत्रहवणी वज्रः पूर्वासिन्न एव। शम्याहबदुपल मासाद्यते। अर्थवतिपवित्रे पूर्वासिन्न एव। अनः पात्री वा। आज्यस्थालीउदकस्थालीकुशमुष्टिः दोहनचमुष्ट-यानिसप्त। पक्षेयोक्तम्। स्रुवोध्रुवासन्नहनावछादनानि। परिधयोविधृत्यो। आज्यं औदुंबरश्चमसः। जुहूप्रभृती। औदुंबरस्तु वश्चतुरस्रः। उदकं सर्वौषधमेकवर्ज पूर्णपात्र-कर्मापवर्गायेति। उपकल्पनीयानिइध्मकाष्ठद्वयम्। वर्हिश्चेति। शूर्पादानां दि ब्राह्मणतर्पणां ते विशेषः। चतुर्दश चतुर्मुष्टिका निगृह्यन्ते। आज्यस्थाल्यनंतरं मुल्कैस्थालि प्रोक्षणम्। उपभृदनंतरमौदुंवरस्रुवस्यप्रोक्षणम्। औषधानमेव पात्र्योमोप्या भिमंत्रणं आत्यानिर्वापं कृत्त्वोदक निर्वापः यथोक्त प्राकृतदोहः औषधाना मवेक्षणं आज्याश्रिव श्रयणं सोदकम्। तस्य चपर्यग्निकरणम्। वेदिखननादि शक्मर्शनां तम्। उपभदनं तरमौदंवरस्रुव संमार्गः। आज्यमुद्वास्योदकोद्वासनम्। पत्न्या वेक्षणम्। उत्पवनप्रत्युत्पवनान्यत्तरावेक्षणां तम्। उदकस्य चा ध्रुवायामेव चतुर्गृहीतम्। नोल्मुकोदहूनम्। जुह्वौ दुंबरस्रुवोपभृतावज्रोपग्रहे सादनम्। चमसमुपस्तीर्यपयसां तस्तत्रस्याभिघारः उद्वास्य चमसेउदकासेकः पयसां च। तत्रौष धान्योप्य प्राण-दानं तत आसदनादिमाज्यभागांते औदुंबरसुवेणसंभृताद्वजो पग्रहेण वाजपेयिकहोम :।[3] अग्निकानां च।[4] पवित्रप्रतिमत्याद्युक्ता जुहोति धर्माः। कर्मापवर्गाति स्रुवप्रासनमा-हवनीये।पुच्छमुत्तरेण परिश्रिस्यककृष्णाजिनास्तरणम्।[5] तत्र चमसशेषेणाचित्यन्वारब्धस्य यजमानस्याभिषेको[6] यथासूत्रतः। दक्षिणताश्चित्येवा। चमसप्राशनमाहवनीये।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1-अग्नये स्वाहेति षट् पार्थानि+ जुहोति। - का०श्रौ० 18/5/3

2- का०श्रौ० 18/5/4.

3- तत्रैव, 18/5/4.

4- अग्निकानि च वाजस्यन्विति। - तत्रैव, 18/5/5.

5- का०श्रौ० 18/5/6

6- अभिषेक सामर्थ्यात्। - तत्रैव, 18/5/4.

पूर्वसंस्कृतदेवासमित्युक्तः । पार्थहोमः।[1] अन्ववधानां तत्संस्कारादेवा द्वादशगृहीतेन राष्ट्रभृद्धोमः।[2] तत एव पंचगृहीतग्रहणम्।[3] आहवनीयस्यो परिप्रत्यङ्•मुखे रथशिरसि प्रत्यङ्•मुखस्य होमः । पुनरुत्तरतो दक्षिणामुखस्य । ततः प्रत्यङ्•-मुखस्य । प्रत्येत्य दक्षिणत उदङ्मुखस्य ।पश्चाच्चपूर्ववत्। पुरूषाहुतित्वदा । रथनी उप[4]उपरिग्रहणम्। सर्वत्रप्वध्वर्युरभिमुखो रथशिरसः।[5] वार्त्तहोमेष्वंजलिना-हुत्यपुरस्ताद् वर्हिर्वेददक्षिणस्यां धुरिहोमः । एवमुत्तरतः । उत्तरस्यां दक्षिण-तोदक्षिणपृष्टे। प्रतिहोमं योक्त परिग्रहणम्। अध्वर्योरासथहरणम्।[6] पास्त इति प्रतिमन्त्रहोमः । जानन् ब्राह्मणवत्तीः।[7] हविर्धानप्रक्षालनाद्याग्नीध्रालंभनां तम्। प्रतिनिवांपधिष्ण्य वपनम्।[8] पंचमविद्विभाग लक्षणानि। आग्नीध्रेयर्धपद्यां-मध्ये उपधायदक्षिणतस्तिस्त्रन्यादभागाः ।[9]पश्चादेवय उत्तरतस्तिस्त्रः । स कृन्मन्त्रः । पुरीषमोप्योपरिष्टान्यश्मा उपधीयते। होत्रीयेर्धपद्यास्थानेऽष्टौ चतुर्भागानुपधाय दक्षिणाशेर्धपादभागौ। तदपरेणपादभागलेके वाद्येर्धपादभागः । अनंतरं चतुर्भाग द्वयस्य पश्चात्पादभागत्रयम्। दक्षिणवदुत्तरांसः । त्रिः कृत्वो मंत्र वचनम्। पुरीष निवापुन आग्नीध्रवछेषाणि। ब्राह्मणछंस्यर्धेपद्यास्थाने वचत्वा-रोर्धपादभागः दशलुमन्त्रः एकस्यां च मार्जली यथेपद्यामभितोर्धपदे।[10] यावदिष्टं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अग्नयेस्वाहेति षद पार्थानि जुहोति । - का०श्रौ० 18/5/3.

2- तत्रैव, 18/5/16.

3- का०श्रौ० 18/5/17.

4- प्रदक्षिणं ध्वनीऽपरिहारः । - तत्रैव, 28/5/18.

5- अध्वर्युरभिमुखोरथशिरः । - तत्रैव, 18/5/20.

6- प्रगृह्याध्वर्योरावसथहरणम्। - तत्रैव, 18/6/3.

7- जाननं ब्राह्मणोह्वा जुहुयाद्वा। - तत्रैव, 18/6/3.

8- का०श्रौ० 18/6/7.

9- पृश्यन्माचाग्नी धीये। - तत्रैव, 18/6/8.

10- षष्मार्जालीये । - तत्रैव, 18/6/12.

कंपरिश्रितः परिनिधाय[1] चयनानि। गर्वाधिष्टाग्निचित्वा। ततः परिश्रिन्नि धानं पुरीषस्य[2] च। तत्त उपस्थानम्। अभिमूर्धेदिद्वत्संवत्सरो सीति। पंचम्यु पस्थान मन्त्रः । अधिकेष्टकानांभित्वोत्करेस्थापनम्। अनुदेशाद्यापुरोडाश स्विष्टकृतोभिषेचनीवत । अग्नीषोमीयस्व पशुपुरोडाशमनु अभिषेचनीय वद्वविर्नि-वापः स्विष्टकृदन्तः । प्राक्प्रातरनुवाको पाकरणात् । अग्न्याधेजनं दक्षिणा-कालेऽवयविनड्रथाशवानां दानम्। प्रागग्निमारुतस्तोत्राद्गिन विमोचनम्।[3] हुत्वा-ऽवर सम्भिष्ट यजूंषि इष्टोयज्ञइतिप्रत्यृचमपरे। अनुवंध्या पशुपुरोडाशमनु वेदिका हविर्निवापः।[4] यजुप्रैषाणिः अनुमतिराकासिनीवाली कुहूम्यश्चर बोधात्री द्वादशकपालः सर्वहुताः।[5] उपांशुत्वेतानि भवन्ति स्विष्टकृद्यजुप्रैषः । हृदयशूलांते सूवाहुति होमः।[6] चित्यनामकरणम्। उपस्थानम्। उदवसानीयां तेपुनरूहृत्यमैत्रा-वरुणीययस्यामग्न्यन्वाधानादि ब्राह्मण तर्पणां ता तूपरमिथुनं दक्षिणा।[7] तदंते सायमाहुतिः । आदीपनांते वर्षत्यसरणादि संकल्पः।[8] पुनः सोमेछायां चयना-शक्तौ स्वयमातृणादीना दंडकोच्चारितानामन्यतमः ।[9] चयनं वा। अग्नि समाप्तः ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- व्या वदिष्टं परिश्रित परिनिधाय। -का०श्रौ० 18/6/13.

2- पुरीषच तूष्णीम् । -का०श्रौ० 18/6/14.

3- तत्रैव, 18/6/17.

4- तत्रैव, 18/6/19.

5- का० श्रौ० 18/6/20.

6- तत्रैव, 18/6/21.

7- तूपरमिथुनदक्षिणोदवसानीयाऽन्ते । - तत्रैव, 18/6/23.

8- वर्षत्यक्षरणमतः । - तत्रैव, 18/6/24.

9- अचयंव वा चित्यस्वाहननीयात्रिसम्पतेश्चित्यस्याहवनीयाभि सम्पतेः ।

- का०श्रौ० 18/6/34.

ऋद्धिकामस्यसौत्रामणी।[1] तत्रमातरश्राद्धम्। अग्निचित्तः सोमाति-पूतस्यसोमवामिनश्च श्राद्धाभावः ।[2] राज्ञोपरूद्धस्य।[3] अलंपशोरपशोश्च भवति।[4] द्वादश्यां प्रातर्हुतशेषस्थापनम्। तत्र समारोपादौविशेष। व्रतोपाययनप्रणीताज्य-भागपूर्णपात्र विष्णुक्रमब्द्दोतारहुतिश्येतान्नुमुहूर्तनामभावः । उदवसानमत्रखादि-रायूपः । ऋजुः पंचारत्नि प्रभृतिः दक्षिणात्रन्वाहार्थः ।[5] इडाया अनंतरमासादनम्।[6] पश्विडांत्तेदानम्। वपायांद्विरभिधारणम् । भागावदाननियमः । उपांशुपशुदेवत्ता। पशुपुरोडाशेप्रणीताः । आज्यभागौ व्रतग्रहणं पूर्णपात्रंकर्मापवर्गाचिति। अपराग्नीनां पूर्वेचतुर्गृहीत्तस्या भावः । वर्हिर्होमान्ते तत्कालमेवशूलावभृथ इति। परिसमाप्य-गृहानेत्याहवनीयोद्धरणम्। अभ्यादधामीति प्रत्यृचं त्ति सृणां समिधायभ्याधानम्। पुनरूहृत्यादित्यैवरूः । तत्रसप्त दशो वज्रः उपांशुदेवता। दक्षिणावत्सः । अंतः पात्र्यस्थाने चर्मणिसुरासोमविक्रयिणः सकाशात सीसोनविरूढा नां व्रीहिणां क्रयणम्। विरूढानां मेव पवानां ऊर्णाभिः । सूत्रैर्लाजानाम। येन केनचित्त्किण्वस्या सुरासोम-विक्रयिनक्रप्यास्तसुरासोमा इति प्रत्येकमामंत्र्या मंत्र्यक्रयणम्।[7] क्रप्याइति प्रत्याम-त्रणम्। दक्षिणेन प्रवेशनम्। किण्वस्यचूर्णनम्।[8] व्रीह्यादीनां च । गार्हपत्यंप्रत्यक्षीकृत्य व्रह्मवरणम्। तमेव दक्षिणेनोपवेशनम्। तमेवोत्तरतः प्रणीताप्रणयनम्। पात्रासादनं शूर्पाग्निहोत्रहवणीस्फ्यकृष्णा जिनोलूखलमुसलानि दशगणे। अर्थवत्पुनः पात्री वा। पवित्रछेद नाक्षिपवित्रे। उपसर्जनी पात्रम्। व्रीहिश्यामाकौ। उपकल्पनीयानि

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य । - का०श्रौ० 19/1/1.

2- अग्निचित्तसोमपाजिसोमातिश्चत्तसोमवामिवाम् । - तत्रैव, 19/1/2

3- राज्ञोपरूद्धस्य । - तत्रैव 19/1/3.

4- अलभ्यशोरयशोः । - तत्रैव 19/1/4.

5- तत्रैव, 19/1/8

6- तत्रैव, 19/1/11.

7- तत्रैव, 19/1/18.

8- का०श्रौ० 19/1/20-21, 23, 25, 27.

चालनिका चरु पात्रद्वयम्। आवामभांडे कुंभीशूर्पादिनादि ग्रहणं सादनम्। प्रोक्षणीनिः शेषकरणम्। विवेकीकृत्यना नावीजधर्मवत्। कुक्कुटाहननवर्जम्। कंडनं करणां तम्। उपसर्जन्यधिश्रयणम्। तंदुलेक्षणम्। पवित्रयोश्चरूं पात्रयोः संवपनम्। पसर्जन्यानयनम्। ग्रहणम्। चर्वो। राधिश्रयणम् । पर्यग्निकरणम्। चर्वोरालंभनम्। पृथगाच। प्रणीता विमोकः । व्रीह्यादि चूर्णानां तृतीयांशः । तत्रोदनं प्रक्षेपः। कुंभ्यानिखननम्। प्रातर्हुतशेषभक्षणम्।[1] रात्रौस्वयमेवाग्निहोत्रहोमः।[2] हुतशेष-स्थापनम्। अश्विभ्यामपाकरोमीति हस्तेनैवैकस्यागोरपाकरणं दुग्ध्वाकुंभ्यान्नि षेकः।[3] शष्पचूर्णा वपनम्।[4] समर्थश्चेद्हुत शेषभक्षणम् । प्रातरग्निहोत्रं हुत्वा हुतशेष-स्थापनम्। अपराह्हेहुतशेषभक्षणम्। रात्रौ स्वयमेवाग्निहोत्रहोमः । हुतशेषस्थापनम्। सरस्वत्या अपाकरोमीति हस्तेनैवद्वयोरपाकरणम्। हुतशेषभक्षणम्।[5] प्रातर्हुतशेष स्थापनम्। चतुर्दश्यां समारोपः । उद्वसानम्। ऐन्द्र देशमुत्तरेण। मंथनम्। विहरणम्। अग्न्यन्वाधानम्। शाखाछेदः । सन्नयमउपवेनिव्यतिरस्तूर्णीं। पवित्रवंधनम्। उपगूहनं। ब्रह्मवरणम्। यूपाहुतिः ऐन्द्रवध्वमाहरणम्। पंचकासा दनमुभयोः । शम्यादीनामुप-कल्पनमध्वर्योः । पवित्रकरणादिद्विकप्रोक्षणांत्तमुभयोः । वज्रंगृहीत्वापक्रम तृतीयेन सोमवदुत्तरस्या वेदेर्मानम्।[6] इतरस्यपौर्णमासिकधाः । उभयोः परिसमूहनमुत्कर-करणम्। दक्षिणोत्करणम्। तावास्ते। उत्तरस्यां च स्फ्यादानादि उत्तरवेदि छादनां तम् । अपराह्णेहुत शेषभक्षण। रात्रौं स्वयमेवाग्निहोत्रहोमः।[7] नस्थापनं हुतशेषस्य । इन्द्रायामपाकरोमीति हस्तेनैवति सृणामपाकरणम् दुग्ध्वापूर्ववत्प-रिषेकः।[8] लाजाचूर्णावपनम्।[9] एवोग्रहार्थैबहुवर्गस्यापाकरणम्। आप्यायध्वंमघ्न्याशिव

---

1- हुतोच्छिष्ट भक्षः । -का०श्रौ० 19/1/13.

2- चतुरात्रम्। अग्निहोत्र जुहोति । - तत्रैव, 19/2/14-15.

3- का०श्रौ० 19/1/22.

4- शष्पचूर्णानि चावयति । - तत्रैव, 19/1/23.

5- का०श्रौ० 19/1/13.

6- प्रक्रमतृतीयेना वृत्तेनोत्तरां सोमवत् । - तत्रैव, 19/2/2.

7- अग्निहोत्रं जुहोति। - तत्रैव, 19/1/15.

8- का०श्रौ० 19/1/22.

9- लाजाचूर्णानि च । - तत्रैव 19/1/27.

भ्यां सारस्वत्या इन्द्राय सुत्राम्णेभागमिति विशेषः । ततस्तूष्णीं पड्वर्गत्वा पाकरणं शाखोपगूहनम्। उपवासव्येनाश्नीयादिति रात्रौ नास्नात्यत्र। श्वः प्रायणीयाधानादुपयमन्युपनि वपनम्। तं पशुवत् । प्रतिप्रस्थातुः । कपरिण प्रणयनं शालाद्वार्यात । अग्नये प्रक्रियमाणायेत्येवप्रैषः । परिस्तरणम्। दक्षिणे-प्रतिप्रस्थाताकर्त्ता। पात्रासनम्। नाशुकेविशेषः । कुशमुष्ट्यनन्तरं दोहन चतुष्टयम्। जुह्वति सक्ताउखा। वपाश्रपण्यौ वचनः त्रयस्त्रिंशद्गावः । वडवा वाचाभिशुर्दक्षि णाशूलास्त्रयः । उखास्तिस्रः । पूर्णपात्रं कर्मापवर्गार्थेति। उपकल्पनीयेषु विशेषः । त्रिगुणरशने द्वे। द्विगुणरशनास्तिस्रः । पशवोजमेषवृषभाः ।[1]उपाकरणतृणमंथनचतुर्थनि-यमेन। हिरण्य शकलानि चतुर्दश। शेषं पशावुक्तम्। खरार्थाः सिकताः । गोचर्म । कारोत्तरम्। पालाशपात्रम्। गोश्वाल[2] पवित्रम्। अजाविलोमपवित्रम्।[3] वैतसंपात्रम्। पयोग्रह पात्राणि।[4] गोधमकुवलादिचूर्णाः[5] सुराः गृहस्थाल्यः वृकादि लोमानि।[6] श्येनपत्रे। पापशानि पात्राणि । शतात्तृणाहिरण्यम्। सर्वसुरभमर्दनम्। कृष्णा जिनम्। प्रतिप्रस्थातुरभिन्नहनावकाशनानि परिधयः । इध्मबर्हिषोरूप कल्पनं पात्रप्रोक्षणाद्याज्यनिर्वपणां तम्। उपसृष्टादिषपरिक्षालनम्। तोदाहः। द्वितीय स्तूष्णी मद्दध्मपोक्षणम्। आज्याधिश्रयणम्। पर्यग्निकरणं पयोवर्जप्रतिप्रस्थातुः रफादि सम्मर्शनां तम् खननादियुगपद् वरूणप्रघास वदुत्तरपरिग्रहः।[7] प्रोक्षणी-रासादयताभिध्मं वर्हिः स्पसादयं स्रुवः संगृह्टीपत्नीं सन्नह्याज्येनोदेहीति प्रैषः । अध्वर्योरिस्फ्यौ दंषप्रहरणाम् । पाण्योरवनेजनं उभयेस्फ्येध्मवर्हिः सादनं च। पशुवत्संमार्गः । आज्यानि च । वरूणप्रघासवदिध्मप्रोक्षणम्। वर्हिवच्च।[8]

---

1- आश्विनीरधोधूम्रः । सारस्वतोमेषः । ऐन्द्रऋषभः ।- का०श्रौ० 19/3/2, 3, 4

2- सतेपुनातिगोऽश्व बालवालेन पुनातितपरिश्रुतमिति। - तत्रैव, 19/2/9

3- का०श्रौ० 19/2/12.

4- पयोग्रहान् गृह्णाति कुविदङ्गेति। - तत्रैव, 19/2/14.

5- गोधूम-कवल-चूर्णानिचावयति तेजोऽसीति। - का०श्रौ० 19/2×17.

6- का०श्रौ० 19/2/25.

7- तत्रैव, 19/2/2, 7.

8- का०श्रौ० 19/2/5.

अध्वर्यो: सभेभो मूलावसेके: । प्रतिप्रस्थातुर्न प्रस्तरपरिग्रहणम् । उत्तरस्याभिक: वृस्तरणा तेरवरकरणमुभयत्र। अध्वर्यो: सभेभो मूलावसेक: । प्रतिप्रस्थातुर्नप्रस्तर परिग्रहणम । उत्तरस्याभिकवृस्तरणां तेरवरकरणमुभयत्र। अध्वर्यो: प्लक्ष शाखास्मरणम्। दक्षिणस्यां नप्रस्तर: । उभयोराहवनीयकल्पनं दक्षिण स्यानोल्मुकोद्वहनम् । परिधि-परिधानमुभयो: । प्रतिप्रस्थातुर्नविधृत्यादि। ध्रुवामासाद्यपयसोरभिधारणाद्याज्या सादनां तम् । तत: सुरासादनंदक्षिणस्यां तूष्णीं द्वितीयस्य। सर्वालंभ: । आत्मा-लंभ: । उदकोपस्पर्शनम्। दक्षिणां वेदिमपरेणश्वभ्रखननम् । तत्रचर्माविधानम्। परि-स्रुदासेक: । कारोतरावधानम्। कोरेतरे वा परिस्रु त्प्रक्षेप:। पूताया आदानम् । पालाशे गोश्ववा लपवित्रेणपावनम्। उत्तरस्यां वेद्यां वैत सेजाविलोमपवित्रेण पयस: सावनम्। ब्रह्मण: पाण्यमानानुमंत्रणम्। पयोग्रहग्रहणम।आश्विनमाश्वच्छेनगोधम-कुवलयचूर्णा वपनम्।[1]योन्वाखरेसादनम्। श्रौदुंवरेणसारस्वत ग्रहणम्। उपवादवदर चूर्णा वपनम्। सादनम्। नैयग्रोधेनेंद्रग्रहणम। पवकर्कंधुचूर्णावपनम्।[2] सादनं स्थालीभि: सुराग्रहणम्। आश्विनस्य वृकलोमभि: श्रपणम्। दक्षिणेरवरआसादनं योन्येव। एवं सारस्वतेन्द्रो। व्याघ्रसिंहलोमभियण्या संख्यं श्रपणम्।[3] मिश्रैर्वासर्वेषाम्। व्यत्या-सेन वाग्रहणम्। सोमोराजेत्यनुवाकेन ग्रहोपस्थानं युगपत्।[4] चतुर्भिर्वापयोग्रहान्।[5] अध्वर्युप्रतिप्रस्थातारावंत: पात्यैवस्थित्तस्ययजमानस्यश्येनपात्राभ्यां पावनम्।[6] अग्निंप्रेक्षस्वेति प्रैष:।[7] प्रेषणां पयोग्रहसमर्शनम्। सुराग्रहाणां च । अभ्यादिव-पामार्जनां तम् । प्रतिप्रस्थातं पशुनेहीतिस्वकाले प्रैष: ।द्वि: परिवीतोयूप: ।

---

1- का०श्रौ० 19/2/17.

2- यवकर्कन्धुचूर्णानि च वल्मसीति । - तत्रैव, 19/2/22.

3- का०श्रौ० 19/2/25

4- तत्रैव, 19/2/27.

5- तत्रैव, 19/2/28.

6- तत्रैव, 19/2/29.

7- अग्निं प्रेक्षयज्ञियदापियेषेति । - तत्रैव, 19/2/30.

उपाकरण मंथनं योर्नियमः । परिपशव्ययोश्चोगणधर्माउक्ता एकादशिन्याम् । वपात्रयेदिराभिघारणम् । प्रस्थितमिति चप्रैषः । स्वाहाकृताउध्र्वनभसंमारुतं गच्छतेति वपाश्रयणी प्रक्षेपः । वपामार्ज नांते वृतग्रहणं आज्यभागौ यज्ञैषौ।[1] अध्वर्योः पयोग्रहादानम्। प्रतिप्रस्था तुश्च सौराणां पालाशेषु प्रक्षिप्य अश्विभ्यां सरस्वत्यां इन्द्राय सुत्राम्णे सुरासोमेभ्यो न ब्रूहीत्यनुवाचनम्।[2] अश्विभ्यां सरस्वत्या इन्द्रायसुत्रा मृत्युरासोमानप्रस्थितान्प्रेष्येति प्रैषः । युगपद्धोमः । प्रतिप्रस्थातुर्दक्षिणे सौराणम्। अध्वर्योराश्विन भक्षणम्।[3] ततः प्रतिप्रस्थातुः । ततोग्नीधः । पुनरयो वमेव । सारस्वते शेषासेकः । एवंहोतृब्रह्मंमैत्रावणाः सारस्वतम् । ऐन्द्रे शेषोसेकः ।[4] ऐन्द्रयजमानः।[5] एवंसौरान्प्राचीनावीतिनो दक्षिणतोमंत्र मात्रेविशेषः ।[6] प्राणभक्षोवासौराणाम्। परिक्रीतोवाभक्षयति।[7] अवजिघ्रतिवा। यावदुक्तम्। अथवावर्हिष्परिधि दक्षिणस्याग्ने स्त्रीनंगारान कृत्वादक्षिणतः प्रत्यंगारमेकैकस्यहोमः ।[8] यथाहुतप्रक्षालने नोपसेचनम्। पितरः शुन्धध्वमितिजपः ।[9] शतवितृणासंजन हिरण्यप्रक्षेपः।[10]गोश्ववालपवित्रस्य । अजाविलोमपवित्रस्य च । तन सुराप्रक्षेपः । नवर्चवाचनम्। पुनंतुमेति सोमवदादीनां च । सोमाति पूतश्चेदुपस्थानम्।[11] संस्कृत्याज्यं दक्षिणेग्नौ यजमानस्यैहोमः।

---

1- का०श्रौ० 19/2/7.

2- तत्रैव, 19/3/12.

3- तत्रैव, 19/3/13.

4- शेषं शेषमासिन्चत्युत्तरेपूर्वस्य । - तत्रैव, 19/3/15.

5- ऐन्द्रेयजमानः। - तत्रैव, 19/3/16.

6- का०श्रौ० 19/3/17.

7- प्राणभक्षेके। - तत्रैव, 19/3/18

8- तत्रैव, 19/3/20.

9- पितरः शुन्धध्वमितिजपति । - तत्रैव, 19/3/22.

10- का०श्रौ० 19/3/23.

11- तत्रैव, पूर्ववत्सोमातिश्चत्श्चेत् । 25

जुह्वामुपस्तीर्य जुहोति।[1] पयसोदिरवदानम्। प्रत्युपस्तरणम्। अन्वारब्धेहोमः। स्थालीशेषस्ययजमानस्यैवभक्षणम् । चात्वालेहिरण्यं मंतर्धायसपत्नीकानममार्जनम्। ततः पशुपुरोडाशा ऐन्द्राग्नावित्र वारूणाः। पुणीतादिवारूणश्चैककपालोवभृथाय।[2] ऐन्द्रएकादशकपालः । सावित्रोद्वादशकपालः । वारूणोदशकपालः।[3] तत्पात्र संमागति पशुविशसनादि पृथमशा मित्रनुशासनां तम पृथमस्यशूले हृदयं प्रतृणत हुर-वाधिश्रयणम्। तदवदानप्रक्षेपः एवमितरयोः । हृदयान्युत्तमानिकुरुतादितिविशेषः। पशुपुरोडाशभागपरिहरणां तद्देदक्षिणादानम्।[4] इदं वोगोवडवं प्रतिगृह्यतामिति इमावोगोवडवाःप्रतिगृह्यं तामिति वा प्रतिप्रस्थातः ।[5] पशौ संवंदस्वेति प्रैषः। उक्तं संवादादिस्कान्दीशन्यांप्रस्थित मिति चात्र प्रैषः । वनस्पत्यं तेवेद्योरासं दीस्थापनम्। तत्रकृष्णाजिनास्तरणम्।[6] यजमानस्योपवेशनम्। पादयोरूक्मोपारसनम्। राजतं सव्ये सौवर्णो दक्षिणेशिरसिवा।[7] खुरैर्वलाग्रहहोमः।[8] द्वयोर्द्वयो रून्नयनम्। हुत्वा शेषाणां सत्तेस्थापनम्।[9] सर्वसुरभ्युन्मर्दनम्। अभिषेके वाप्रक्षेपः आमुखाद्व-त्रा वपतोभिषेकः ।[10] प्रतिदिशमवस्थाययजमाना लंभनम्। आलब्धस्यशुभंकरा-ताद्दवानंपथालिंगयंगा लंभनं यजमानो द्यमनंम्। कृष्णाजिनेवरोहरणम्।[11]

- - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 19/3/26-28.

2- एककपालचावभृथाय । - तत्रैव, 19/4/2.

3- का०श्रौ० 19/4/1.

4&5- त्रयस्त्रिंशतददात्यनुशिशुं च वडवधेनुकम्। - तत्रैव, 19/4/5.

6- कृष्णाजिनमस्यामास्तृणातिमात्वेति । - तत्रैव, 19/4/8.

7- तत्रैव, 19/4/10-11.

8- तत्रैव, 19/4/12

9- द्वौ द्वौ हुत्वा शेषान् सते करोति । - तत्रैव, 19/4/13.

10- का०श्रौ० 19/4/14.

11- तस्मिन्नास्तेयजमानो नीषसादेति । - तत्रैव, 19/4/9.

वसाग्रहणहणम्। आज्यग्रहश्चेदाश्वचक्षेन आप्याययतोध्रुवाया: सादनं तूष्णीम् । साम्प्रैष: ।[1] ब्रह्मणोगानम्। सर्वेषां निधनं प्रतिगर:।[2] शास्त्रान्तेग्रहादानम्। अश्विभ्यां सारस्वत्यम्। इन्द्रायसु त्राम्णेनुब्रूहीत्यनुवाचनम्। अश्विनौसरस्वती-मिन्द्रसुत्रामाणं यजेतिप्रैष:।[3] होम: । शेषस्यऋत्त्विभि: प्राणभक्ष: यजमानस्य ऋत्विज उपह्वयध्व मितिपृष्ट्वा प्रत्यक्षभक्ष: ।[4] तत:स्विष्टकृदादि। समस्य-मार्जनम्। सहशाखायाप्रस्तरप्रहरणम्। नोपवेशहोम: । अशाखाबंधात् । अतएव-तूष्णीं परिवासनम्। नवसमिष्टं यजूंषि। बर्हिर्हुत्वापरित्सृक्षीरलिप्तान्याहाया वभृथवद्गमनम् । शूलावभृथोभिमन्त्रणां तम्*2 शचस्थतन्यभिशोचते ति मापो मौष-धीर्हिं सिष्टेति च विशेष: ।उदकाधिष्ठानप्रभृत्यवभृथेष्टि[5] रूक्त लक्षणा। भासर-कुंभप्लावनम्। पूर्ववन्मजनम्।[6] अंजलिना अपामादानम्। दाविकृमाउदङ्•गत्त्वादेष्यं प्रतिनिषेक: ।[7] अवभृथवत्सानम्।[8] वासोपासनं उद्वयमित्युक्रमणम्।[9] अपाम सोम-मिति जपतां गमनम्। आहवनीयोपस्थानम्। समिदादानम्।[10] आहवनीयेभ्याधानम्। पत्न्याश्च गार्हपत्ये। तत: प्रणीता विमोकादिसुराकणानां चा पासनम्। कर्मापवर्गा त्तेसंस्कृत्या ज्यं अतिप्रणीते आहुति: । गृहेष्वादित्यश्चरू: पूर्ववत्। वत्सन्या-तादक्षिणा। उदवसानम्। उद्धरणादिपयस्या मैत्रावरूणी[11] उपांशुदेवत्ता। तदन्ते

---

1- साम्प्रैष्यति । - का०श्रौ० 19/5/1.

2- तत्रैव, 19/5/2-3.

3- तत्रैव, 19/4/14.

4- तत्रैव, 19/5/9-10.

5- तत्रैव, 19/5/12.

6- पूर्ववन्मज्जनम्। - तत्रैव, 19/5/13-14.

7- का०श्रौ० 19/5/15.

8- तत्रैव, 19/5/16.

9- सोमवदुत्क्रमणमागनंमच। - तत्रैव, 19/5/17.

10- तत्रैव, 19/5/18-19.

11- तत्रैव, 19/5/21.

समारोपादिपशुरिन्द्राय वयोधसे।[1] त्रिपशुप्रदेशमुत्तरेण । तर्दमाएन्द्रै उक्ता: । सौत्रामण्यां व्यूहनम् । अश्विनो: सरस्वत्यां इन्द्रयाश्विनो: सरस्वत्या इन्द्रस्य सुशाम्णः सवितुर्वरुणस्याश्विन्नो: सरस्वत्या इन्द्रस्यवनस्पते रूजितम् । अश्विनौ सरस्वतीन्द्रो सरस्वतीन्द्र: सुत्रामासविता वरूणोश्विनौ सरस्वती द्रो वनस्पतिस्तपतुदन्तु। सौत्रामणीसमाप्ता: ।

अश्वमेधेफाल्गुनीशुक्लाष्टम्यां नवम्यां वाग्रीष्मस्य[2]वा मातर: श्रा द्वं चतुर्णां पात्राणामंजलि प्रसृतानां च गार्हपत्ये ब्रह्मौदनं पंचनम्।[3] उद्वास्यांजनम्। अद्यर्त्विग्भ्य: । ब्रह्मौदनदानम्। चतुर्णां चगोसहस्राणां शतमा नां च।[4] आज्य शेषण रशनाया अंजनम्।[5] आदानकालेएवनिष्कंप्रति मुंचतौ वाचनम्।[6] वाचयं पेर्कत्त प्रैष: । आवरणपदान वाग्यम: ।[7] सहानुच रीभि: पत्नीनामागमनम्।[8] पूर्वद्वा- रेयजमानस्यप्रवेशनम्। दक्षिणेनपत्नीनां हुतोग्निहोत्रेगार्हपत्यमपरेणवाचाताया उर्वेत- रेउदकशिरस: स शयनम्।[9] इतरा सां च पार्श्वत: । प्रातराहुत्यन्ते उद्दृत्य- पूर्णाहुति:,ब्रह्मणेवरणदानम्।[10] वाग्विसर्जनम्। निष्कसाध्वर्यौ वेदामने।[11] पुनरूहुत्याग्नये पथिकृते ष्टाकपाल: । शतमान दक्षिण:।[12] तथावास: शतदक्षिण:

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- तदन्ते पशुन्द्रियवधिसे। - का० श्रौ० 19/5/22.

2- का०श्रौ० 20/-1-2.

3- ब्रह्मादनपंचतिचतुर्णा पात्राणामन्जलिप्तसृतानां च । - का०श्रौ० 20/4.

4- तेभ्यश्चत्वारि सहस्राणिददाति शतमानश्चतावता।- तत्रैव, 20/1/6.

5- आदानकाले वाSक्षुकम् । - तत्रैव, 20/1/8.

6- का०श्रौ० 20/1/9.

7- तत्रैव, 20/1/10-11.

8- तत्रैव, 20/1/12.

9- तत्रैव, 20/1/17.

10- 11- तत्रैव, 20/1/19-20.

12- शतमानं दक्षिणा सौवर्णम् ।- का०श्रौ० 20/1/21

पोक्षणः । तत्रावाज्य श्रेषेण रशनांजनम्। आदानम्। ब्रह्मन्नश्वंभत्स्यामीतिप्रैषः । तंबधानेत्यनुज्ञातोवचनात्पश्वं उक्तक्षणम्।[1] स्थावरा अपोगत्वाश्च प्रोक्षणमुंप्रति मन्त्रश्वानं चतुरक्षमभिमन्थस्वेत्याधोगवप्रेषणम्। पुंश्चलोर्वासिधृव मुशलेनश्वमत्तम्।[2] यो अर्वतमिति वाचनं वितसकटेनाधोश्वंप्लावनम्। अग्निसमीपा नयनम्।[3] उधृत्याग्नयेत्वा हेत्यनुवाकेप्रतिमंत्रं होमः । लह स्रुवा वृत्तिराहुतीनम्। अश्वश्रवण विरमणाद्वा।[4] उद्धरणादिसवित्रेप्रसवित्रे द्वादशकपालः । शतमानदक्षिणः।[5] तत्रप्रयाजेष्वुत्तरमंद्रगानम्।[6] एव मुद्धरणादिसवित्रप्रासवित्री राजतं शतमानं दक्षिणा तच्यासवित्रेसत्य प्रसवाय सुवर्णं शतमानं दक्षिणा।[7] सवित्र्यन्ते अध्वर्यु यजमानायोर्दक्षिणेश्वकर्णेजपः।[8] प्रागुदमुत्सर्गेनिरष्टेश्वशते।[9] दक्षिणामादेशः । अभिषेक्या-भविष्यथेति प्रैषः । यथोक्त मश्वपरिपालनम्। सावित्र वेदिदेशे दक्षिणेन हिरण्मयेष्वुपवेशनम्। यजमानाध्वर्यकूर्चयोः।[10] फलकयोर्वा।[11] होतृब्रह्मोद्गातारः कशिपुषु[12] पारिप्लवप्रैषः । तत्र हवैहोतरिति प्रतिगरः।[13] अंतेवीणागणगिन इति प्रैषः ।

---

1- का०श्रौ० 20/1/24-26.

2- तत्रैव, 20/1/1/35-36. सिध्रमुसलेनैनं हन्ति । 38

3- का०श्रौ० 20/2/1-4.

4- आश्वसूवणविरमाद्वा। - तत्रैव, 20/2/5.

5- तत्रैव, 20/2/8.

6- तत्रैव, 20/2/7.

7- तत्रैव, 20/2/6-7.

8- तत्रैव, 20/2/9.

9- तत्रैव, 20/2/10.

10- तत्रैव, 20/2/29.

11- फलकयो र्वा । -तत्रैव, 20/2/20.

12- होतृब्रह्मोद्गातारः कशिपुषु। - तत्रैव, 20/2/21.

13- हवैहोतरित्प्रतिगृह्णाति। - तत्रैव, 20/3/1.

यजमान संगानं[1] दक्षिणाग्निमुद्धृत्यपुक्रमहो होम: ।[2]अग्नास्तमितेप्रागग्निहोत्र-होमादाहवनीयेधृति: ।[3] होम: । तत्रराजन्य स्योत्तरमन्द्रागानम्[4] वाचाताता-संवेशनादीनि संवत्सरं क्रियंतोतत्राऽष्टम्यां धारभवावातासंवेशनादि सावित्र्युत्तर मंद्रागान:।[5]सप्तम्यांसमाप्ति: । नवम्यांचेदष्टम्याम्। ब्राह्मचेदष्टम्यां परि-प्लवधृत्यो: सावन: संवत्सर:।[6] त्रयोदश्यां चतुर्दश्यां चसमाप्ति: । वीणागाथि-भ्यां पृथगोशतदानम। ब्राह्मणस्य सावित्र्यं तरोजन्यस्य धृत्यंते। पारिप्लवेनि वृत्तेपि राजभि: संगानपृष्ठ:।[7] आपंचम्या: संगानं च । अश्वादिचरव: । सावित्र यन्ते[8] तन्मध्ये चेत्यपरिज्ञानम्। सामिपौष्णौब्राह्मणतर्पणां त: । अक्ष्यामये सौर्य:।[9] अपूनुमृतेवारुणेयव मय:।[10] अरिष्टयामये वैश्वानरायपुरोडाशो भूमौ श्रप्यते।[11] तत्रांगाराणां प्राचांकरणमस्ति। सव्यांगुल्याभून्येंगार करणमध्यूहनम्। च । नाशेद्यावापृथिव्योस्तंत्रेण एककपालो वायव्यंपय: सौर्यश्चचरूरेकतंत्रेण।[12] तत्रा हतवास: परिधानम्। वैश्वदेववर्द्धि: । प्रजाते वायव्यंपय:।[13] घृतादर्शनयो रन्यस्य रशनादानादि:।[14] तत्ररशनादानादि अवंधनापोचनप् तेक्षणकर्ण जपा: ।

---

1- का०श्रौ० 20/3/2.

2- तत्रैव, 20/3/3

3- तत्रैव, 20/3/4.

4- तत्रैव, 20/3/5.

5- तत्रैव, 20/3/5.

6- तत्रैव, 20/3/5.

7- राजर्षिभि: सङ्गायनमादीक्षणीयाया: । - का०श्रौ० 20/2/8.

8- अश्वादीष्याचरूभि: सावित्र्यन्ते । - तत्रैव, 20/3/12.

9- सौर्योऽक्ष्यामये। - तत्रैव, 20/3/14.

10- वारुणोऽप्सुभृते । - तत्रैव, 20/3/15.

11- का०श्रौ० 20/3/16.

12- तत्रैव, 20/3/18.

13- प्रजाते वायव्यम्। -तत्रैव 20/3/20.

14- तत्रैव, 20/3/21.

उत्सर्गः । कृमहोमः । धृतिहोमायावतोगतास्तेसर्वे आवर्तते। फाल्गुन आरंभ पक्षेफाल्गुनपौर्णमास्यां पशुः । ग्रीष्मेज्येष्ठ्यां पौर्णमास्यां आषाढ्यां वा प्रजापत्य इष्टका पशुः । तदहरेवउखासंभरणादि। तदहरेवर्त्विग्वरणादि। अर्धमासमात्रेमास्यषरामास्यपक्षे चैत्र्याः पूर्वमर्द्धमासादि ग्रहणम् । चैत्र्याभिष्ट-कालापशुः। उखासंभरणादिर्त्विग्वरणानि च । तत्र विशेषाः । अश्वमेधेन पक्ष्यइत्पुरस्तादुदकवति पदेशेदेवयजनम्।[1] सप्तसुप्रक्रमेष्वर्द्धव्यामैवोद्धरणम्। शाला-नियमोत्र। दीक्षणीयायामग्नावैष्णवश्च। नाभ्यं जनाद्यत्र प्रपादनांतम्। चत्वा-र्यौदग्रभणीनि हुत्वा आश्वमेधिकानित्रीणि[2] ततोदीक्षणीया शेषादिकृष्णाजिनो-पवेशनांतम्*[3] आपंच स्याश्वमन्वहम्। षष्ट्या आग्निकयोश्चनिर्वापः । अभ्यं-जनादि च । तत्र एवरिकौदग्रभणस्थानेषडाग्निकानित्रीणि त्रीण्याश्वमेधिकानि[4] विश्वे देवस्येति दशमम्। दीक्षणीयाशेषादि समिदाधानांत आब्रह्मन्निति जपः।[5] ततो रुक्मप्रतिमोचनादि वात्सप्रान्तम्। उद्यानसम्प्रैष। वाग्यमनम्। अनस्तमिते वाग्विसर्जनाद्याग्निकम्। यवागूव्रतम्। सिद्धैवोपादीयते । वाचिविसृष्टायां दैवैरिम-यजमानं सागायन्तेतिप्रैषः । संगानम्। द्व्यदशदीक्षाः। व्यत्यासेनविष्णुक्रमवात्स-प्रैवनीवाहनम्। अत्रदीक्षणामुत्तमेहनि[6] वैद्याग्नि मानम्। अग्निर्यथोक्तम्।न्यग्रोधस्य संस्कारपक्षेउक्तान्यूहस्थाननिषवितान्। नप्त्रम्। उपशदोद्वादश व्यत्यासंचिति पुरीषाः । एकादश्यांविकर्ण्यादि। उत्तमांपंचगृहीतादि। अर्तनोषोमीये एकविंशति यूर्पचतुष्टयानित्रिगुणद्विगुणरशनाः ।पशवश्च। अवटपरिलेखनादिपदार्थानुसमापनम्। अंजनादिस्त्ववर्वगूहनां तमेकैकस्य। यूपजातयोपयासूत्रम्। प्रतियूपमग्नीषोमीयपाणी नियोगः । दक्षिणयूपादारभ्यउदक् संस्थम्। संज्ञपनादिप्रैषोवहुवचनेन। एक एव

---

1- कायस्वाहेति चाश्वमेधिकानित्रीणि। - का०श्रौ० 20/4/2.

2- तत्रैव,

3- कृष्णाजिनदीक्षातः । - तत्रैव, 20/4/3.

4- तत्रैव, 20/4/4.

5- तत्रैव, 20/4/11.

6- तत्रैव, 20/4/13.

पशुपुरोडाशः । तमनुदेवसूहविषांनिर्वापोपण्योक्तः । अग्नीषोमाभ्यांछागानामित्य-
नु वाचनाप्रैषो। वपायां च। दीक्षेपसत्स्वन्वहं सायंवाचि विसृष्टायाम्। वीणा-
गणगिनोदैवरियमिति प्रैषः। प्रातरग्निष्टोमः । तत्रविशेषः । परिस्तरणादौ
प्रजापति नेमंयजमानं संगायतेति प्रैषः । संगानं परिस्तरणादौ विशेषः एकादशिन्यै-
सवनीयाः ।[1] मध्यमे आग्नेयौ[2]नियुज्यदक्षिणोत्तरेच सारस्वतौ। एवंद्वितीये उत्तरे
च।[3] उक्ताएकादशिनिधर्माः । वपायामग्नयेछागयोर्वयाभ्यां भेदस्तोनुब्रूहीतिछागयो-
र्वपिभेदः। प्रस्थितमिति चविशेषः । एवं सारस्वत्तादिषु । एकादशैवपशुपुरोडाशः।
दक्षिणा विजयमध्यत्तप्राचीदिगुत्पन्नद्रव्यतृतीयभागो हेतुः । दक्षिणोत्पन्नद्रव्यस्य
ब्रह्मणः प्रतीच्युत्पन्नस्याध्वर्यवे। उदीच्युद्गात्रे। प्राकृत्त तोशः । क्रमस्य । एवम-
न्वहम्। माध्यंदिनेरुत्त्वने प्रतिदिशं वत्सपत्ती परिग्रहणम्।[4] सादनांतम्। अग्नये
छागयोर्हविषोनुब्रूहीति। अग्नयेछागयोर्हविः प्रस्थितमिति प्रतिप्रधाने। एवं सर्वेषु।
तृतीयसवनेस्वकाले उक्थ्यं गृहीत्वाग्निमारुत्तकालेत्रैधं विग्रहणम्। प्रतिप्रस्थातुः ।
तच्चमसाननुहोमोभक्षण[5] च। अतिप्रैषितेष्वः सुत्यामित्याहवब्रह्मन्वाचं छ्येति च।
नवेद्यालंभः । पत्नीसंयाजांत्तेपिष्टलेपाहुतिः। वेदविमोकः। पक्षे योक्तस्या
समिदाधानाद्यवभृथेषि । कृष्णविषाणादीनामप्रासनम्। पात्राणां च । बर्हि
रादिप्रतिपत्तयः । शाखाछेदनादि उपगूहनां तम्। अत्रवावसती परिग्रहणम्।
सर्वरात्रं जुहोती व्रणउपवेशनम्। प्रणीताप्रणयनम्। परिस्तरणम्। पात्रासादनम्।
दशगणे कर्परद्वयंकपालस्थाने। अनःपात्री वा । पवित्रछेदनानिपवित्रे आज्यस्थाली
कुशमुष्टिः । पक्षेयोक्तम्। स्रुवोजुहूः उपभृत्ध्रुवा। सन्नह नावछादनांनिपरिधयोविधृ-
त्या वाज्यम्। पात्र्यस्तिस्त्रः । सृतावदानम्। व्रीहीयवाः। पूर्णपात्रः कर्मापवर्गेविति।

---

उपकल्पनिथनकिकस्छद्बम्‌ः क्

1- एकादशिन्यौ सवनीया पशवो भवन्ति। - का०श्रौ० 20/4/23.

2- मध्यम आग्नेयौ। - तत्रैव, 20/4/24.

3- उत्तरयोश्च । - तत्रैव, 20/4/25.

4- का०श्रौ० 20/4/30.

5- तत्रच मासाननुहोमभक्षौ । - तत्रैव, 20/4/29.

उपकल्पनियानिकाष्टद्वयम्। प्रस्तर वर्हिश्च। शूर्पादानादिग्रहणेविशेषः । प्रहरद्वयस्य चतुर्मुष्टिका नियवानां एकस्य व्रीहिणा पवित्रकरणादि तुषविप्रमोकान्तम्। भर्जनोपधानम्। आज्यनिर्वापणम्। वेदबंधनम्। पात्र्यामोप्याभिमन्त्रणादियवव्रीहिणामधिश्रयणम्। पर्यग्निकरणम्। धानो द्वासनम्। फलीकरणम्। पृथक्त्वाधानां पेषणम्। प्रोक्षणमीक्षणं स्फ्योदंच प्रहरणम्। स्फ्यवर्हिः स्फ्यवर्हि सादनम्। स्रुकसंमार्जनाद्या जोत्पवनां तम् । अन्यतरावेक्षणम् । ध्रुवायाभेवाज्यग्रहणम्। प्रस्तरवर्हिषः प्रोक्षणम्। सन्न हनविस्रंसनम्। श्रोण्यांनिधानम् । अन्यैरवछादनम्। आहवनीयकल्पनाद्यात्मा लंभनांतम्। नोल्मुकोद्वहनम्। उपवाजनाद्यात्मालंभनां तं जुहोतिवत्। ध्रुवा तत्र्च गृहीतग्रहणमप्यायतः । प्रहरमेकमाज्येन होमः । अस्तमितेप्रतिप्रस्थातुः । समासिच्य वसतीवरी परिग्रहणम्।[1] वीणागणागिन इति प्रैषः । प्रस्तुप्रस्तरः । एवंद्वितीयः प्रहरः सक्तुहोमेन। एवमेवतृतीयोधानाभिः चतुर्थोलाजैः[2] अपरणमात्रेपिविरोधात्। प्रतिप्रस्थातैवऋत्विक्ये बोधनमपामुपस्पर्शनम्। प्रजापतिनेमं यजमानमितिप्रैषः । संगानम्। परिस्तरणादौविशेषाः । भूतएवाहवनीयः । इतरयोःक्रियते। परिधिपरिधानम्। नास्त्येव। पत्नी सन्न द्वैव। इत्तरस्याशुक्रमालाद्यतेध्रुवानिवात्र। वद्योवपाश्रयरापाः शूलोखाश्च । सौवर्णलोहायताः शास्तः द्विगुणरशनावद्यः वेतस शाखाः एकादशिन्यौ पशवः । अश्वादयश्च । अन्यदप्यश्वालंकरणाद्युपकल्पते । सवनीयनिवापे प्रणीताः संत्येव। पात्रयोजने सौवर्ण राजते महिम्नोः पात्रे । अग्नियोजन्या युक्तं द्वादशाहे। एकधनस्थानपशेषस्थापनां तं प्रतिप्रस्थातुः अभिषेचेन प्रतिप्रस्थातु। रेवकर्तृत्वम्। अन्नहोमेतु अध्वर्युः श्रुतिवचनात्। एवंहिश्रूयते। सं स्थितोग्निष्टोमे परिहृता सुवसतीवरीष्वध्वर्युरन्नहोमानुजुहोतीति । अभवादौकेचिदध्वर्युमिच्छन्ति। नेत्यूपरेश्रुति विरोधात्। लाजा होमांत्ते संकृत्याज्यं व्युष्टायांरजन्यां व्युष्टयै स्वाहेत्याज्याहुतिहोमः।[3] उ दितेस्वगायेति।[4] पूर्वसंस्कृतेनाज्येन द्विज्याहुतिः।[5]

---

1- का०श्रौ० 20/4/30.

2- तत्रैव, 20/4/31.

3- व्युष्ट्या इति व्युष्टायाम् । - तत्रैव, 20/4/32.

4- स्वगमित्युदिते । -तत्रैव, 20/4/33.

5- का०श्रौ० 20/4/31.

शेषपरिसमाप्तिः। परिधिप्रक्षेपः प्रणीताविमोकवर्ज योक्तस्य च । अश्वमालभ्य-वहिष्पवमानाय समर्पणम्।[1] वडवादर्शनम्।[2] अश्वारास एवहमोत्रम्। स्तुवर्तवा।[3] उद्गातृभ्यः शतमानदानम्।[4] अश्वारासएवहमोत्रम्। आस्तावाक्रमणम्।[5] एकदशिनानुयाकृत्याश्वादीनुपाकरोतिहोतरश्वमभिष्टुहीतिप्रैषः।[6] अश्वालंकरणम्।[7] रथस्य च ।[8] रथेश्वयो जनम्। अपरेषां चत्र याणामप्योगमनम्। अवतरणम्। वाचनम्।[9] आगमनम्। अश्वविमोचनम्। पत्नीनामश्वाभ्यंजनम्। तत्केसरापुछेषु मणिप्रवयणम्।[10] पक्षेअनुचर्यो ऽपि तूष्णीं जुहोति[11] शेषप्रदानमश्वस्य अखादत्यश्वेश्वहरणम्।[12] होतृ-ब्रह्मणोर्यूपमभितः संवदनम्। ततोऽग्नि मंथनादि पूर्ववदेका दशिन्यैर्नियोगः । अश्वन् मृगानग्निष्टे अश्वे पर्यग्यात्।[13] इतरेषु यथापदेशम्। सवनीया न्प्रोक्ष्यअश्व प्रोक्षणमद्भ्यस्त्वावायुद्वेति च । उपग्रहणमपपितुरग्निः पशुरिति च । उपाकरण-नियोजनप्रोक्षणानियथासंभवं पर्यग्निकरणान्ते कपिंजलादीनामुत्सर्गः।[14]वासोधि-वासहिरण्येषु अश्व संज्ञपनम्।[15] तेषा मुपरिवेदितृणम्। उक्तान्यूहस्थानानि।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- वहिष्पवमानायसर्पणमश्वमालभ्य। - का०श्रौ० 20/5/3.

2- वडवादर्शयत्यभिरसतितत्स्तोत्रम्। - तत्रैव, 20/5/3.

3- स्तुवीरन्वा। - तत्रैव, 20/5/5.

4- शतमानं ददाति । - तत्रैव, 20/5/6.

5- अश्वेनाक्रामयन्त्यास्तावम्। - तत्रैव, 20/5/7.

6- होतरश्वमभिष्टुहीति प्रैष्यति । - तत्रैव, 20/5/9

7- अश्वासौवर्णालंकाराः । - तत्रैव, 20/5/12.

8- रथन्च । - तत्रैव, 20/5/13.

9- अपो यात्वाऽवगाढेषु वाचयति यद्वान्तः इति । - तत्रैव, 20/5/14.

10- का०श्रौ० 20/5/15.

11- अनुचर्यस्य तूष्णीमेकरेषाम् ।- तत्रैव 20/5/17.

12- अप्स्ववहरणमखादति । - तत्रैव, 20/5/19.

13- पर्यङ्ग्यानश्वे । - तत्रैव, 20/20/6/4.

14- कपिन्जलादीनुत्सृजन्ति पर्यग्निकृताश्वा - तत्रैव, 20/6/9.

15- हिरण्यवासोऽधीवासेष्वश्वसंज्ञपनम्। - तत्रैव, 20/6/10.

क्षुल्लकतापश्चिते चतुर्मासिशीदीक्षादीनि।[1] गवामयनमासानां प्रथमषष्ठसप्तमद्वादशसुत्यासु। अग्नि सत्रं यथोक्तम्। त्रिसंवत्सरदीक्षा: षष्ठि:। यथाशक्तिवासीत्येष्वहस्सु। गवामयनादित्यानामयनांगिरसामयनानि । आद्यंतयो: सत्रस्यप्रायणीयोदयंनीयौ विषुवांश्चप्रतिसंवत्सरम्। द्वादशसंवत्सरे एवं गवामयना वृत्ति: ।[3] चतुर्भाश्चाश्चतुर्भागस्त्रिवृदादिस्तोमकै: । शाक्यानामयनंषट्त्रिंशत्संब्रू तत्रापि गवामयनावृत्ति:।[4] तरसमया सवनीया: । तत्र पेषणोत्तर समासिष्वैनुहि देवानितिप्रयोग: । साध्यानामयनंशतसंवत्सरम् । सहस्रसंवत्सरेहां सहस्रंपरिगृह्यते।[5] दशरात्रावृत्त्या। यावत्सत्राणि सारस्वतानि।[6] प्रथमेचैत्रशुक्लसप्तम्यां रूषभाधिकस्य गर्भिणी शतस्योत्सर्ग:।[7] सरस्वतीग्निशनैद्वादशदीक्षा उपसदश्चसदोह विधानाग्नीध्राणि चक्री वंति। उपरवस्थानेषुश्मां सुप्रकिरणम्।[8] यूपउलूखलवृष्नोनविश्वन्यते । तत्रावट संबंधाभाव: । तत्रप्रायणीय: पत्नीसंयाजान्त: । प्रतिपत्स्यते दर्शनहितो गार्हपत्य: । तदंतेशाम्याप्रासनम्। तत्रगार्हपत्यस्थापनम्।[9] यथोक्तमाहवनीयस्य।[10] यथास्थितान्येवयज्ञांगानीयते।[11] भौमानां चपांशूनां यथादेशं प्रकिरणं[12] तूष्णीं तंत्रं पुनर्दश: । एवमहरहर्य-

---

1- क्षुल्लकानायश्चिते चतुर्मासिशीदीक्षोपसत्सुत्यानि। - का०श्रौ० 24/5/8.

2- विषुदन्तमत्रित्तोगवामयनपक्षयो: प्रथमोत्तमौ प्रथमोत्तमौ। - तत्रैव, 24/5/9.

3- द्वादशसंवत्सरं प्रजापते: । - तत्रैव, 24/5/19

4- का०श्रौ० 24/5/20.

5- तत्रैव, 24/5/23-24.

6- यात्सत्राणिसारस्वतानि । -तत्रैव, 24/5/25.

7- का०श्रौ० 24/5/28.

8- उपकिरन्त्युपरवस्थानेषु न खनन्ति । - तत्रैव, 24/5/29

9- का०श्रौ० 24/5/35.

10- यथोक्तमाहवनीयस्य । - तत्रैव, 24/5/36.

11- यथास्थितयज्ञाङ्गानिरन्ति । - तत्रैव, 24/6/1.

12- का०श्रौ० 24/6/2.

जनीयहेनिग्रो कृतुपर्वेद्य शाखाछिदनादिपत्नी संयाजान्तः । ग्रवपौर्णमासः।[1] एवमन्वहंशम्याप्रासनपूर्वकं द्वितीययजनीये आयुः। एवमासमत्रपरिसमाप्तेः । दृषद्वत्य थपेयोनप्त्रीयश्चतुः प्लक्षे प्राश्रवणे अग्नये कामापुरोडाशः । तदन्ते अश्वपुरुष्योधेनुके दद्युः । प्रसप्र्थकेभ्यः कारयचवेउदयनीयः।[2]

प्राग्वावभृथादग्नये कामायेष्टिः।[3] यमुनायामवभृथम्।[4] उदवसानीयान्ते[5] यज्ञोपकरणदानं उदवसानीयाते वाग्नये कामाया तत्रापृष्टशमनीयाः । साम्पुच्छानानित्रीणि। अतिरात्रैः सहस्रपूरणगतवाति रात्रैणेकम्।[6] तदेवचदेयं प्रसर्पकेभ्यः । गृहपतिमरणेद्वितीयमायुषात्रिरात्रेण। सर्वज्यानां विश्वजितात्ति[7] रात्रेणसाम्पुच्छानेष सर्वेषां वाज्योतिष्टोमः।[8] नावभृथं सरस्वत्यां[9] परिपार्श्वे पूदकेषुक्रियते । असत्सुतत एवोद्धृत्या द्वितीयेविशेषः ।[10] इतिवातवतोरयनस्याह्नीतृदत्पंचदशस्तोमेपर्वान्तरेषु व्यासेन भवतः।[11] दर्शपूर्णमासयोः स्थाने एतयोर्विधानम्। गोत्र्यायुषीपर्वसु। व्यवस्थिते एवत वृत्यकृते पंचदशे अकृते यजनीय काल आगच्छति गोत्र्यायुषा समाप्य एव पंचदशस्य समाप्तिः । शुक्ल पक्षेश्चैत्रि वृदग्नि-

---

1- पर्वान्तरेषु दर्शपूर्णमासौ। - का0श्रौ0 24/6/4.

2- उदवसानीयान्ते वा । - तत्रैव, 24/6/12.

3- पुरस्तादृगवभृथादग्नये कामाय । - तत्रैव, 24/6/11.

4- अवभृथमभ्यवयन्ति यमुनां कारपचवं प्रति । - तत्रैव, 24/6/10

5- उदवसानीयान्ते वा । - तत्रैव, 24/6.

6- का0श्रौ0 24/6/15.

7- सर्वज्यानां विश्वजित् । - तत्रैव, 24/6/19.

8-- ज्योतिष्टोमो वा सर्वेषाम् । - का0श्रौ0 24/6/20

9- नावभृथं सरस्वत्याम् । - तत्रैव, 24/6/21.

10- का0श्रौ0 24/6/22-24.

11- तत्रैव, 24/6/22-24.

ष्टोमः । पंचदशस्थानेकृष्णपक्षे वा पंचदश उक्थ्याः शेषं समानम्।[1] तृतीये विशेषः। यजनी ये योरभिजिद्विश्वजितौ दर्शपूर्ण मासस्थानेत्रि ककुः।[2] त्रिकटुकेष्व समाप्तेषु चेद्यजनीय काल आगच्छति अभिजिद्विश्वजितं वासमाप्य शेष समाप्तिः ।[3] अत्रापिसमान मन्यत् । प्रथमे दार्षद्वते ऋत्विगाचार्य योरन्यत्तरस्यग वा संवत्सरं रक्षणम्।[4] अपरसंवत्सर मनुक्तेनैता धवदेशेग्न्याधम्।[5] ततः कुरुक्षेत्रेपरिणाहिस्थलेग्न्याधेयमन्वारंभणीयां तं [6]दर्शपूर्णमासं तं वा।[7] अथवा याहिताग्निश्चेच्चणोग्निहोत्रमेव संवत्सरं जुहुयात्।[8] नगोरक्षणादि। आग्नेयपुरोडाशशम्याप्रासे दृषद्वत्यास्तीरे क्रीयते । आगछता च कर्त्तव्योग्न्यं न्वाधानादि ब्राह्मणतर्पणां तः । अवभृथमभ्यवैति। यमुनात्रिः प्लक्षावहरण देशे[9] प्रतिएक कपालेन पुरोडाशेन। सामगानं यजमानस्यैव।[10] अथवाऽऽप्लमात्रं न द्रृष्टिः[11]क्रियते उदेत्यस्यैवेष्टिः । पशुर्वाग्ने योग्निषोमो वा कर्त्तव्यः।[12] तुरायणं चैत्र शुक्लपंचम्यां वैशाखस्य वा प्रातराहुत्यं ते कृष्णाजिनादीनां दीक्षाल्पाणाम्य संजनम्। त्रिहविष्कवाया इष्टौर्निर्वापोन्वारंभणीयापूर्वकः । आग्नेयोष्टा कपालः। ऐन्द्र एकादश कपालः । केषांचिदष्टा कपालः वैश्वदेवश्चरूरिति । नात्र चतुर्द्धा करणम् । हविः शेष भक्षः । संवत्सरं यजने । तदतेदेवभूयेष्टिनाम्।[13]

---

1- का०श्रौ० 24/6/36.

2- तत्रैव, 24/6/27-28.

3- पूर्ववत्ककुसमापनम्। - तत्रैव 24/6/29.

4- का०श्रौ० 24/6/30.

5- तत्रैव, 24/6/31.

6- तत्रैव, 24/6/32.

7- दर्शपूर्णमासान्त वा । - तत्रैव, 24/6/33.

8- का०श्रौ० 24/6/34.

9- तत्रैव, 24/6/36.

10- स्वयमेव सामगानम्। - तत्रैव, 24/6/37.

11- आप्लवमात्रं वा । - तत्रैव, 24/6/38.

12- पशुनावातद्देवतेन । - तत्रैव, 24/6/41.

13- आप्लावन पात्रं वा । - का०श्रौ० 24/6/38

तत्रस्वयं सामगानम्।[1]

नम्। आप्लव मात्रं वा।[2] उदेत्यामीष्टिः ।[3] पशुर्वाग्नेयः।[4] अग्निष्टोमो वा कर्त्तव्यः[5] द्वादशाह विकल्पा[6] यथा सूत्रं उत्सर्गिणामयनं वोक्थ्याः । त्रयोभिप्लवाः।[7] तृवृदोद्वा एकस्मिन्न हनिस्तो मस्योत्सर्गः।[8] पशोर्वा । सवनविधिक्रिया[9] तत्र वपांते पशुपुरोडाशादि सर्व समाप्यते । अनारंभोसवनी यस्य । तत्प्रति सवनीयानां सांगोपेताना मनुष्ठानम्। तापश्चित्तविकल्पा यथोपदेशं निगदव्याख्या तत्वान्नोच्यंते । सत्राणि समाप्तानि। शुभमस्तु । अथकर्म विनिष्टे सर्वत्र प्रायश्चितार्थमुत्पाद्यते उत्त सर्वत्रेति[10] तत्किंतावत्प्राप्त मनादिष्टं प्रायश्चितं ब्रह्मणा ह्येतव्यमिति उत्पाद्यत इत्वेवं प्राप्त उच्यते विनिष्टे कर्मणि प्रायश्चितं तदं गमितिसिद्धम्।[11] नवां गार्थब्रह्मण उत्पत्तिन्र्या-प्या। अतोयत्रैवब्रह्मा विद्यते तत्रैव तत्प्रायश्चितं ब्रह्माजुहोतीति।[12] किन्तु

---

1- स्वयमेवसामगानम् । - का0श्रौ0 24/6/37.

2- आप्लवन पात्रं वा । - तत्रैव, 24/6/38.

3- का0श्रौ0 24/6/39.

4- पशुना वा तद्देवतेन। - का0श्रौ0 24/6/40.

5- अग्निष्टोमेन वा । - तत्रैव, 24/6/40.

6- द्वादशाहविकल्पाः । - तत्रैव, 24/7/10.

7- का0श्रौ0 24/7/23.

8- स्तोमोत्सर्गोविकस्यास्याहुवः। - तत्रैव, 24/7/4.

9- पशोर्वासवन विधिक्रियाः। - तत्रैव, 24/7/25.

10- कर्मोपपात्रे प्रायश्चित्तं तत्कालम्। - तत्रैव, 25/1/1

11- का0श्रौ0 25/1/2-3.

12- महाव्याहृतिहोमोऽनादेशे। - तत्रैव, 25/1/4.

प्राग्ब्रह्मो त्यतेर्विनष्टे कर्मणिब्रह्मवरणस्या पर्वोन्यात्प्य: प्रभाकर णोमं वादय कर्बमात्रं तु प्रायश्चित्तार्थ श्लोकश्चात्र भवति । आवृतावव्ह्वारासु सर्वाभूत्पाद्यते किल । ब्रह्मणः सूत्र का रेण उक्तं तत्र प्रयोजनम् । अनादेशे महाव्याहृतिहोम: ।[1] तत्होतृ कर्मसंबधिविनाशे पूर्णाहुति वदाज्यं संस्कृत्त्य चतुर्गृहीतं कृत्वाप्रचरण्या गार्हपत्येभूः स्वाहेति समित्पूर्वकोहोम: ।[2] सर्व-प्रायश्चित्तं पंचभिः प्रत्यृचं सकृद्गृहीतैराहवनीये। दक्षिणाग्नावाध्वर्यवेभुवइति।[3] उक्तमन्यत। तत्रउद्गात्रे आहवनीयस्वरिति।[4] अनुपवीतिना अप्रदक्षिणाचारेणा नाचांतेन मुक्ताशिखिना च यत्कृतं तस्मात्त्तर्मविज्ञात्तमित्युच्यते । तत्रा हवनीये प्रतिमहाव्याहृति चतुर्गृहीतानि हुत्वाभूर्भुवः स्वरिति चतुर्थ: सर्वप्रायश्चितं च।[5] होतृकर्मोद्गात्रिकमाध्वर्यव मेव प्रायश्चितम्। अग्निहोत्री चेदुहानोय विशेदुपो-त्थाप्यदुग्ध्वा ब्राह्मणाय देया।[6] यः पुनरनागमी दंडेनवानुपिष्योत्थाप्यदो हन[7]मदानं च।[8] अदुहानाया मन्यां मिति।[9] अप्रायश्चित्त प्रज्ञप्त्यर्थम्। दुह्यामाना चे द्वाश्ये तत्तृणान्या लुप्यग्रासयेत्।[10]

कृत्ययसाचहोतम्।[11] लोहितदोहे दक्षिणाग्नेः परिश्रयणम्। व्युक्रा-मततेतिप्रैष: उष्णेभस्मनिदोहने नैवहोम: । उदकोपस्पर्शनम्। पूर्ववद्गोदनिम्।[12]

---

1- का०श्रौ० 25/1/4.

2- हौत्रिके भूतिरति गार्हपत्ये। - तत्रैव, 25/1/5

3- दक्षिणाग्नवाध्वर्यवेभुव इति। - तत्रैव, 25/1/6.

4- स्वरित्यौद् गात्र आहवनीये। - तत्रैव, 25/1/8.

5- का०श्रौ० 25/1/9-10.

6- का०श्रौ० 25/1/14.

7- दण्डेन वा ऽनुपिष्योत्थाप्य वा दोहनम्। - तत्रैव, 25/1/15.

8- अदानं च । - तत्रैव, 25/1/16.

9- अदुहानायामन्याम् । - तत्रैव, 25/1/17.

10- तत्रैव, 25/1/18.

11- तस्यै पयसा जुहोति । - तत्रैव, 25/2/1.

12- का०श्रौ० 25/2/2.

हौम्यं गविसद्रांइ[1] मितिप्रयोगं गृहीतायां गविरूषभभिक्रमणादि दोषपरिज्ञानेन विसतो दोषः । तथावत्सोप गर्गे। दुह्यमानप्रभृति प्रसिद्धोदोषः हौम्यस्य। यथाकालोपघाते तद्देवतायै तत्पात्रेण होमः । आमन्त्रणेनाति देशोवाततोन्येन होमः । पूर्वाहुत्युत्तरकांस्तुव्यदोषे प्रतिपाद्य सकृद्गृहीतेन उत्तराहुतिः।[2] स्कन्नेस्कन्नप्रायश्चितेनाभिमर्शनं अद्भिरूपनि नयमम्।[3] भिन्नेभस्मोद्यायेकपाल-करणम्।[4] हाविर्यत्तियेस्कन्नेभुवपतय इत्यभिमर्शनम्।[5] देवांदिवमितिचसोमेसविर्पति[6] यस्यैव । उदकोपसेको वागुन्नीत सर्व स्कदनं स्तुग्रेदनयोः पूर्ववदभिमर्शनादित श्रैवा सो नस्यान्युदुन्नीपः न्योस्मै समर्पयति।[7] तत्रनोन्नयन प्रैषः । पूर्वाहुतौ हुतायां माहवनीयानुगमने आध्वर्येवं कृत्त्वापुनरुद्धृत्योत्तराहुतिः।[8] काष्ठंहिरण्यं वाभि-निधायतत्रनाध्वर्यवम्।[9] त्रिरुद्धताहवनीयानुगमनेगार्हपत्ये समारोप्य उत्तरतोग्नि स्थानानुलेपनम्। मंथनमग्निस्थापनम्। आहवनीयोद्धरणम्। पूर्वोद्धृत एवदक्षिणाग्निनरि यते । तेनैवोद्धरणेन प्रातरप्यग्नि होत्रहोमः।[10] पुनरुद्धरणं वाऽथवा वा शब्दं पूर्वोद्धरणे नाभिसंबध्यते। तत्रकर्म। त्रिरुद्धृतानुगमने पिपुनः पुनरुद्धरणम्।[11] पूर्ववदु-दङ्गीत्वासकृदुद्धृते सायं प्रातर्होमो वा । उद्धरणकाले गार्हपत्यानुगमने भस्मना

---

1- हौम्यंगविसद्रिम्। - का०श्रौ० 5/2/3.

2- तत्रैव, 25/2/23.

3- तत्रैव, 25/2/24.

4- तत्रैव, 25/2/25.

5- भुवपतय इति हविर्याज्ञियम्। - तत्रैव, 25/2/26.

6- देवान्दिवमगन्निति सोमे । - तत्रैव, 25/2/7.

7- का०श्रौ० 25/2/29, 30.

8- पूर्वाहुतौहुतायांचेदाहवनीयोऽनुगच्छेत्तदुव्याम् । - तत्रैव, 25/2/1.

9- काष्ठ हिरण्य वाऽभिश्रहुयाच्छ्रुतिः। - तत्रैव, 25/3/2

10- का०श्रौ० 25/3/3.

11- तत्रैव, 25/3/5.

अरणीसंस्पृश्यमंथनम्।[1] आहवनीयमातृत्यगार्हपत्त्यस्थाने निधाय आहवनीयोद्धरणम्।[2] तृणवर्त्या ज्वलन्तमानीयपूर्वत्यत्कापुनरुद्धरणम्। अथवा हवनीयमुपशमथ्यनिर्मथ्योद्धरम्। समारोपादिपूर्व वह्निरतिघोषणा।[3]अथहैकन्यं गार्हपत्त्यंमंथतीति श्रुतिवलेन सूत्र व्याख्यायाम पर पक्षः पूर्वे उपशमितएवनिर्मथ्यहोमः सएव सर्वपक्षेषु दक्षिणाग्निः।[4] त्रिराहुतः दक्षिणान्युनुगमनेनाहरणं वा ।[5] आहवनीय जागरणाभ्युद्वृतो गार्हपत्त्य एव।[6] पश्चात्पुरस्ताद्वानिधायो भयत्रहोमो वातंत्रेकेद्विविल संस्थायासमिधि होमः।[7] येनहविद्रव्यमुभयत्रयाप। तति अग्मितिधानेग्नये एत देव प्रायश्चितं अन्वग्निरित्याहृत्य।[8] अनुद्धृताभ्यस्तमये कुशवध्येहिररोपयश्चाद्धारणम्। इध्मे नोद्धरणम्।[9] सकृद्गृहीतेन वैष्णव्याहुतिरितिघोषणा।[10] चतुर्गृहीतेन श्रुतिः। अग्नये सर्ववतेपुरोडाशोग्न्य न्वाशानादि ब्राह्मण तर्पणान्तः । तदंगत्वाद्विहार एवाग्निहोत्रहोमः । अनुद्धृतेभ्युदये रजतधारम्।[11] पुरस्ताद्विश्व देव्याहुतिः सूर्यावज्योतिष्मते पुरोडाशः इतिविशेषः । उभयत्र वा वैश्व देव्याहुतिरपुरोडाशा।[12] चतुर्गृहीतेन अग्निहोत्रां गभूतास्त्विष्टिष्वनुगमने गृहीतानुगमनस्यान्निमितत्वात्पौर्णमा सवतत्र प्रयोगाद्विरोधाच्च वैश्वानरमारुत तत नवापरार्थत्वादि तिथि

---

1- का०श्रौ० 25/3/3/4.

2- तत्रैव, 25/3/5.

3- तत्रैव, 25/3/9.

4- तत्रैव, 25/3/9.

5- तत्रैव ।

6- जागृतामाहवनीयमभ्युद्धरेच्चेत्तदुक्तम् । - तत्रैव, 25/3/11.

7- का०श्रौ० 25/3/12.

8- तत्रैव, 25/3/13.

9- तत्रैव, 25/3/17.

10- वैष्णव्याहुतिः ब - तत्रैव, 25/3/12.

11- अभ्युदयेरजत धारणं पुरस्तात् । - तत्रैव, 25/3/20.

12- वैश्वदेवी वोभयत्रा पुरोडाशा। - तत्रैव, 25/3/24.

भोजनवत्। असाधारण्यं वा धान यन्निमित्तम्। स्वार्थप्रयुक्तेषु पौर्णमासवेद-वाविरोधाः । साधारण्ये वैश्वानरमारुतवदेव। गार्हपत्या हवनीययोरनु गमनेज्ञाने सत्यस्तमनाभ्युदययोर्वा तत्र पुनराधेयम्। तत्कालिक विहरणकाले मंथमानानाजने अंतिकादग्निमाहृत्यहो मः । प्रत्यागारं ब्राह्मणहस्तं वास्थाप्यत्र दृष्टार्थत्वात्पूर्वसमिधो भावः । उत्तरावादृष्टार्थत्वाददीयते। तदा च समिद्धो मे ब्रह्मण हस्तदी दिसमेद्धातो ब्राह्मणहस्तदीप्तसमिति मन्त्रः। कुशस्तंवे वा।[1] अनासनं तत्र।[2] कुशस्तंवदीदिहीति। अप्सुवा।[3] अवीभत्सनंताभ्यः।[4] आपो दीदिददीतिवारुर्कतविशेषमात्रं मन्त्राणाम्। अहताभ्युदितस्य उन्नीयतम नादाशनम्।[5] पूर्वाहुतिं हुत्वानुमन्त्रणं वरदानं च।[6] सर्वहविनाशिदोषे वाध्वर्यवंकृत्वा[7] सांगावृत्तिहर्तार्हार एवम्। आज्येनवादेवते ज्याप्रतिसंख्याय पुनः क्रिया च।[8] भेदेनापि सन्नियातिका नामावृत्तिः।[9] अंतरागमने नादरः[10] श्वैडकः वराहेषु-दधारा प्राचीभस्मो वा।[11] गर्दभ गमनेग्नयेपथिकृतेपुरोडाशः ।[12] नित्येष्टयति पत्तौ च।[13] तद्यदि पौर्णमासेकृते प्रागमावास्योद्धरणाद्यत्रैवसम्याद्यतेने मिति

---

1- कुशस्तंवे वा । - का०श्रौ० 25/4/6.
2- अथासनं तस्मिन् । - तत्रैव, 25/4/7.
3- अप्सुवा । - तत्रैव, 25/4/8.
4- का०श्रौ० 25/4/9.
5- तत्रैव, 25/4/10.
6- वरदानं च । - तत्रैव, 25/4/12.
7- सर्वनाशे हविषां दोषे वा तदुक्तम् । - तत्रैव 25/4/13.
8- पुनः क्रिया च । - तत्रैव, 25/4/15.
9- का० श्रौ० 25/4/16.
10- अन्तरागमनेनाद्रियेत । - तत्रैव 25/4/17.
11- का०श्रौ० 25/4/18-19.
12- चक्रीवत्यग्नये पथिकृते। - तत्रैव, 25/4/20.
13- प्रज्ञातेष्टयतिपत्तौ च । - तत्रैव, 25/4/21.

कंकृत्वा तत्रकर्तव्यम्। उद्धरणकालप्रभृति तंत्रेण प्रयोगः । दर्शमपिनकृतं ततो-
तिपतिः । तथादर्शमकृतं प्राकपौर्णमासकालाद्यत्र संपत्तिस्तत्र कार्यम्। पिंडपितृ
यज्ञवर्जम्। पौर्णमासकाले नातिपत्तिस्तत्प्रभृतितंत्रेणास्तोत्रमोहे शस्त्रस्य च धेषे
वेष्टिः । तत्राग्न्यन्वाधानम्। वाचस्पति प्रैषः । पात्रासादनम्। पात्रुक्तं
मनय वृत्तमस्त्येवा वशिष्ट प्रयोगा दासाद्यतद्धति। आश्विनन्यायेनावरस
भेरोअस्याः पशुवत् ज्ञेयः । स्वजनमरणे[1] वान्वारंभणीयापूर्व कोयजनीयेहनि।
प्रत्येहनिभिथुन मां सभोजनं चेदग्नये[2] संसर्गायाष्टाकपालः । आहुतिर्वा। तथा
परस्य संसर्गेग्नयेवि विचये।[3] एवमेवापूदवात्संसर्गेतन्वारंभणीयापूर्वको मारुतस्त्रयो
दशकपालीयजनीयेहनि।[4] गेददाहेग्नयेक्षामवते[5] एवमेवभ्रांत्या चतुर्दश्यामुपवसतश्चेदद-
मावास्यायां ज्ञात्वातद्वत एवास्ते।[6] दधिहविशतं च नापस्थाप्यम्।[7] अपरहेपिंड-
पितृयज्ञादित्यैव। शाखयापाकरणम्। हविर्ग्रहणोत्तरकाले विज्ञातं चेद्दोहस्या
पर्वः दिहेदधिपयसीप्रणेष्वामीति प्रणयनम्। तंदुलां स्त्रैधाविभज्यानुदिशेन्मध्य
मानिदानेदानुरितिस्थ विष्टानिदं विष्णोः शिपिविष्टस्येति पयसि चरूः।[8]
दधिपय उपसर्जन्यो श्चाधिश्रयणम् । संदष्योषधीभिरिति दध्नोग्रहणम् । उक्तं
पयसः। पिष्टेसुचे । त्पिष्टान्यनामेवत्रेधाविभागः । पूर्ववत्क्रिया च । शृतिचेत्पु-
रोडाशोग्नेदद्दातुर्दधींद्रस्य प्रदातुः पयोविष्णोः शिपिविष्टस्य ।[9] वृता-
शवितश्चेत । ब्रह्मवरणम्। प्रणीताप्रणयनम् । परिस्तरणम्। पात्रासादनम् ।
अग्निहोत्रहवणी वज्रः । पवित्रछेदनानि पवित्रे दोहन चतुष्टयं चेति । पवित्र-
करणम् । प्रणीतासंस्कारः । पात्रप्रोक्षणम्। उपसृष्टादि दोहः परिक्षालनं तः ।
उद्वास्यदधिपयसि प्रणेष्यामीति प्रणयनम्। पुनर्यथोक्तग्रहणान्यग्नयोदातुरित्या-

---

1- जनमरणे च । - का०श्रौ० 25/4/24.
2- का०श्रौ० 35/4/27.
3- तत्रैव, 25/4/29-30.
4- तत्रैव, 25/4/31-35.
5- गेहदाहेऽग्नयेक्षामवतेपुरोडाशः । - तत्रैव, 25/4/36.
6- का०श्रौ० 25/4/37.
7- तत्रैव, 25/4/38.
8- तत्रैव,
9- तत्रैव.

रभ्यसायंदोह प्रभृत्येत्तदेव। कर्मप्रागुपसंहारएव। आसान्नाप्यवत्ययमेवन्याय:।[1] भ्रात्यां च प्रतिपदुपवासश्चेपिंडपितृयज्ञवर्जदिति हरेवयाग: ।इन्द्राय वृत्रघ्न एकादशकपाल: । अग्नयेवैश्वानरायद्वादशकपाल:।[2] दंडो वा[3]प्राकृताश्चेछ्या।[4] श्वोवेष्टिर्भवति। पशुकामस्यन्वारंभणीयापूर्विका यजनीयेहनि।[5] उद्वास्यमानकपाल नाशे आश्विनोद्विकपाल:।[6]तत्रोद्वासनांते आहवनीयोग्न्यन्वाधानम्। वाचस्पति-प्रैष: । पात्रासादनम्। स्फ्यवर्जदशगण: । अवत्युपश्चे उपसर्जनी पात्रम्। उद्धरण-पात्रीहविर्द्रव्यं चेति । शूर्पादानावासातनं तम्।[6] तैरेवपवित्रै: प्रोक्षणी: संस्कृत्याशेषाभि: पात्रप्रोक्षणां तम्। कृष्णाजिनादानादिकुक्कुटाहननवर्ज कंडनं कणांतम्। कपालोपधानम्। मध्यमधर्मेणप्रथमम्। पश्चाद्वितीयम्। उपसर्जन्यधिश्रयणम्। कृष्णाजिनादानादिपेषणां तम् । प्रोहणम् । ईक्षणम्। सपवित्रं पात्र्यां स्वं स्वाप: उपसर्जन्या नयनाद्याज्योत्कदानम् तम्। पुरोडाशपात्री संमार्ग: । पुरोडाशविभस्मीकरणाद्याश्विनस्या सादनां तम्।[7] स्थालीपूर्वकमासादनम्। आलंभ: । आत्मालंभ: । उदकोपस्पर्शनम्। होतृषदनकरणम्। सामिधेनी प्रैष: । अग्नि संमार्ग: । होतृवरणम् । जौहवमाज्यं पात्रांतरेग्न्यसायांमन्त्रवत्सृचोपदानम्। आश्विनप्रचार:। स्विष्टवत्प्रभृतिभागपरिहरणांतम् संचराभ्युक्षणपवित्रप्रतिपत्तिवर्जम् । पुनरिरतस्य हविषमासादनं सर्वालंभ: । पूर्वाधारहोम: । निह्ववम्। मंत्रणसृचोरादानमुत्तराद्योयेध्रुवासं मंजनम्। स्रुगादायनादियथोक्तं आश्विनपूर्वक व्यूनम्।[8] पूर्वयास

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- संस्काराप्तासान्नायियम्। - का०श्रौ० 24/4/39.

2- का०श्रौ० 25/4/44.

3- त्रिशुकं धनुर्दक्षिणा। - तत्रैव, 25/4/45.

4- दण्डो वा । - तत्रैव, 25/4/46.

5- प्राकृतश्चेच्छया। - तत्रैव 25/4/47.

6- अनभ्युद्दष्टस्यापिशुकामस्य । - तत्रैव, 25/4/48.

7- उद्वास्यमा कंछेत्कपालं न्वयेदाश्विन: । - तत्रैव, 25/5/1.

8- का०श्रौ० 25/5/2-30.

9-उभणेवाभस्मनि। - तत्रैव, 25/5/10.

10- का०श्रौ० 25/5/1.

तूपिष्टलेपा हुतिः । तत्कणैः सह्कणपात्सनम्। सायं प्राणदो हत्तौ ऐन्द्रः पंचशरावर्तुदनः पुरोडाशो वा । तद्यदि सायं दोहे[1] विहित आतिरूपजायते। तत्कालस्वाहवनीयग्न्यन्ववाधानम। ब्रह्मवरणम् । प्रणीताप्रणयनम् । परिस्तरणमाहवनीयस्य । पात्रासादनम् । पुरोडाशपक्षेदशगणः । चरुश्चेत्कपालशम्या हषद्‌पलवर्जम्। अन्र्यवतिधृवादक्षिणेद्रव्यम् । अन्तर्धान कटः। पूर्णपात्रं कर्मापवर्गाविति एतन्न भवति । चस्थक्षे उपवेषश्च । चरोश्चोपकल्पनम्। इध्मवर्हिष्षोश्च पुरोडाशपक्षेपि। शूर्पादानादिग्रहणेविशेषः। सचतुर्भाग शरावमात्रपात्रेणग्रहणम् ।पवित्रकरणादिप्रोक्षणान्तम् । कृष्णाजि नादानादिकंडनम्। कुक्कुटाहननवर्जकर्मान्तः । पेषणो पधाने पात्रिके। आज्यनिर्वापोवेदबंधः । उपसर्जन्यधिश्रयणम्। सपवित्रपात्रयासंवापः । चरोरूपसर्जन्याद्यात्मालंभनांतविशेषः । पक्षेसंयवनपृथनउदकदानं च । प्रोक्षणीपृथेस्रुचौ संमृद्दीति। नस्फ्योदंचप्रहरणम् । बर्हिषोवहुवचनेनैवप्रोक्षणम् । सशेषोमूलावषेकः । नोल्मुकोदूहनम्। अद्रव्यवज्जुहूप्रभसादानम् । होतृषदनकरणादि आश्विनवद्‌भाग परिहरणांतः । अपाकरणादिपूर्ववददन उत्पत्तिः । शवोवाचस्पति प्रैषः अपराग्न्योः परिस्तरणम् । पात्रासादनम् । स्फ्यशम्याहषद्‌पलवर्जितो दशगणः । अर्थ ति अनः पात्रीवापूर्वमना सन्नाश्चेद्‌पवेषः । उपसर्जनीपात्रम् । दोहन चतुष्टयम् ।[2]

धृवाउद्धरणीपात्री व शृतावदानम् । हविर्द्रव्यम् । प्राशित्र हरणेदक्षिणाद्रव्यं तृतीयांतर्धानकटः पूर्णपात्रं कर्मापवर्गाविति । पात्रांतरेप्रोक्षणीरून्नीयग्रहणम् । पात्रप्रोक्षणाद्यान्वाहार्याधिश्रयणम् । तंसान्नाप्यववत्कृतत्वोदेववेदि करणाद्याज्य संस्कार वर्जम् । प्रोक्षणी प्रणीतासु पवित्रकरणम् । सहेन्द्रेणाप्त्योदकदानम्। स्रुवं संमृद्दीतिप्रैषः । स्फ्योदं च प्रहरणं च । धृवाप्रभृति संमार्गः । आज्यग्रहणम् । उल्मुकोदूहनम। तूष्णीं जुहूप्रभृतोरासादनम्। मंत्रवधृवायाः पुरोडाशविभस्मी करणाद्यात्मालंभनां तम् । आज्यवर्जम् । नात्मालंभनं कृत्वात् पूर्वाघारहोमोनिद्भवः । उत्तराधारः । धृवासमंजनम्। उक्तं स्रुवादा-

---

1- का०श्रौ० 25/5/2.

2- सायंदहिस्थाने वा पुरोडाशः । - तत्रैव

पनादि। पिष्टलेप वा सहपूर्वपाकरणाश्चेति । एवमनेन न्यायेनास्मिकाले संप्रवृत्त एवेष्टि स्तत्रालोच्य कर्त्तव्या। क्षीरावदानेगृहग्रहणानंतरं दध्न आर्तिरूपजायते चेत् । क्षीरेण यागंकृत्त्वा ततश्चे दयाग: । पुनरुत्यायदध्नायाग:। सान्नाय्या लाभेचरु:।[1] सायंदोहस्या नेवापुरोडाश: असान्नाय्यवद्दा सम्प्रयोग:।[2] दुष्टं हविरश्ववहुत्यो प्लेवाभस्मनिपुन: सान्निपात्तिकपदार्था अपूर्व कर्मप्राप्ते:।[3] कर्त्तव्यमेवचेदग्न्यन्वाधानादि कर्त्तव्यम्। वहुश्रुतकारकभावादग्न्यन्वाधानादेर- भाव: । एकमनिष्टं चेद्याग: क्रियते।[4] इष्टंचेद्दुष्टेनाज्येनशेषम्।[5] हविरंतरगे प्राकस मिष्टयजुष: स्मृतान्वाहरणम्।[6] सान्निपात्तिकैरंगै:। हुतेचेत्तसदस्याप्यत्तदिहार- एवाग्न्यन्वाधानादिदेवता वदानयाज्यानुवाक्याविपयसिपुष्कलदानम्।[7]पुर्नयथा पूर्व्वकरणम्।[8]आग्नेयेहविष्यग्नी षोमीय सम्बन्धदेवताविपर्यास: । आग्नेययागे- कृतेऽग्नीषोमीयते। तत्क्रमविपर्यासमात्रम्।[9] स्रुच्ये दुष्टेपुनर्ग्रहणम्।[10] स्थालीत: ध्रुवायावात्रदुष्टाद्दास्रुच्यान्नध्रुवायामुपभृतो गृह्यते।[11] स्थाल्यादोषेन्यद्दुपादे यम्।[12] सान्निपात्तिकै: । दुष्टादेव आद्यारादौ कर्मनिवृतेनिवृत्तमेवतदुक्त मदाषोवेति।[13] प्रणीतास्कंदनेभिमर्शनम्।[14] मृन्मयस्य चभिन्नास्या धर्मभेदैर्मृन्मय

---

1- चरु: सान्नाय्यलाभे। -का० श्रौ० 25/5/6.

2- तत्रैव, 25/5/7-8.

3- का०श्रौ० 25/5/9.

4- एकध्यानिष्टेतदुक्तम् । - तत्रैव, 25/5/12.

5- इष्टंचेदाज्येन शेषम् । - तत्रैव, 25/5/14.

6- का०श्रौ० 25/5/15-16.

7- तत्रैव, 25/5/17-18.

8- तत्रैव.

9- अवदान-याज्याऽनुवाक्यासु च । - तत्रैव, 25/5/19.

10- स्रुच्येदुष्टेपुनर्ग्रहणम् । - तत्रैव, 25/5/20.

11- का०श्रौ० 25/5/23-24.

12- आज्यस्थालीदोषेऽन्यत् । - तत्रैव, 25/5/24

13- का०श्रौ० 25/5/25.

14- तत्रैव, 25/5/28.

मन्त्रेणाभिमर्शन पक्षेतिविदित्यभिमर्शनम्।[1] चतुस्त्रिंशद्धोमश्चकालाहुतिश्चाकृभिदा-त्स्वाहाप्राणेभ्य इत्येवमाद्याश्च जुहोति।[2] प्रथमापूर्णाहुति कृतमाद। प्रजापतिः सं,भ्रमाण इतिथथा कालम्। सविताप्रथमेहन्निवप्रत्यहंद्वादशाहादूर्ध्वंद्वादशोवाहुतिरा वत्स्यति। पुनः कृत्त्वाभिन्नेनप्रचरणम्। धर्मधुग्मरणे दोहेवादोहस्थाने न्यस्या उदीच्याः शालायावापुरस्तात्प्राच्याः पुरुकांडादद्दक्षिणेस्थिति चतुस्त्रिंशद्धोमः।[3] यजमान वाचनम्। सैवधर्मधुग्स्यलति चतुस्त्रिं शद्धोमेध्वर्यो: । सर्वत्र वाचनमं च । प्रत्येकमपि हूयमानासुतच्चब्रह्मणः । केचिदध्वर्यो: । पृषदाज्यस्कं दनेच्येके चतुस्त्रिंश-[4] द्धोमं कुर्वन्ति। अपाविष्टेतितनियमेन। पृषदाज्यस्कंदनेचतुस्त्रिंशद्धोमेपि आध्वर्यवनि-वृत्तिः। यत्कारणमन्यस्थानादेशेतद्विधीयते। सोमेज्यो पपाते एकैका आहुतिर्यथा कालमाध्वर्य वंच । तच्चोत्पत्युतरकालमाग्नीध्रीये।[5] उद्गातुः । सुत्यासुच।[6] कालाहुतिः ।[7] आपवस्वे तिध्वांश्रारोहणे।[8] यूपस्यचाया विष्टेति होमः । शार्दूलताधुर्मधुकत्पृतीहोमः।[9] अन्यामाजतेतिप्रैषः । स्वमग्निहोत्रहोम्यशक्तौ उपासनं करोति । सर्पणा शक्तावासीताधः।[10] सायमाहुत्यां हुतायां दुत्तां-र्वलश्चेद्यजमानः स्यात्काल एव प्रातराहुतिर्देया।[11] पौर्णमासान्ते वा मावास्य

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 25/5/29.

2- परमेष्ट्यादीश्च चन्द्रस्त्रिंशतं जुहोति । - का०श्रौ० 25/6/1.

3- तत्रैव, 25/6/2.

4- पृषदाज्यस्कन्दनेचैके । - तत्रैव, 25/6/3.

5- आग्नीध्रीये सुत्यासु। - का०श्रौ० 25/6/5.

6- तत्रैव

7- का०श्रौ० 25/6/4.

8- तत्रैव, 25/6/ 6.

9- तत्रैव, 25/6/8.

10- उपसर्पणाशक्तावासकमधः । - तत्रैव 25/6/11

11- का०श्रौ० 25/7/1.

मेवपिंडपितृ यज्ञवर्जम् । गृहणप्रभृतिप्राग्धविरासादनान्यरण चेद्गार्ह पत्ये हविषां दहनम्। आसादनोतरकालमाहवनीये।[1] मरणांते भवति पदार्थ आरब्धे चेत्स-माप्यते।[2] आमावास्यमारब्धं चेन्मृतेपि समाप्यते । अग्निहोत्र होमेपि गृहणादि प्रागासादनाद्गार्हपत्येदहनम्।[3] आसादनोत्तरकालमावहनीयो मृतेगोप पशुबल-वतीनं प्रत्यङ्•मुखाधिश्रयणम्।[4] संतापजानग्नी नादाय नशिशरीर यारोप्य दक्षिणागमनम्।[5] समेव हुलतृणेदेशेक्षिरिण्याद्या उद्धृत्यवित्तान साधनम्। अंत्तरा-ग्नीर्चितिं करोति।[6] केशादिनि कंतनम्। विपुरी करणं वा । के शादिनिखननम्।[7] सर्पिषांत रंजनम्। प्राग्ग्रीवं कृष्णाजिनमास्तीर्य प्राक्शिरशिचितावुत्तानाधानम्।[8] प्राणपतनेषुहिरण्यशकलप्राशनम्।[9] जुह्वासादनादि यथासूचित पयस्यपादिदानां तम्। स्फ्या[10]ग्निहोत्रहवणी[11]सूत्रश्चनानावनाता वधीयते। अनुस्तरणीचेद्वप्यया मुखा-वच्छादनम्। तदभावेत्पि अन्यवपयामुखप्रछादनमिति घोषणा। अग्निभिरादीपनम्।[12] पुत्रादीनामन्यत यस्याहुतिः।[13] स्त्री पक्षेरिप्यविपरिणामः। स्फ्यादीनामुपधानम्। सभ्यावस्थ्यादुत्तरतोनिधीयते। तदनपेक्षमागमनम्। उदकोपस्पर्शनस्मार्तमुदककर्मलक्ष्यते।[14]

---

1- का०श्रौ० 25/7/4.
2- तत्रैव 25/4/5.
3- तत्रैव, 25/7/7
4- सन्दीपनवतीः प्रत्यग्न्यन्धिश्रयन्त्युखाः ।- का०श्रौ० 25/7/12.
5- का०श्रौ० 25/7/13.
6- तत्रैव, 25/7/15.
7- का०श्रौ० 25/7/18.
8- तत्रैव, 25/7/19.
9- तत्रैव, 25/7/20.
10- तत्रैव, 25/7/21-22.
11- मुखेऽग्निहोत्रहवणीम्। तत्रैव, 25/7/25.
12- वपायामुखमपच्छाद्याग्निभिरादीपयन्ति । - तत्रैव, 25/7/39.
13- का०श्रौ० 25/7/40.
14- अनपेक्षमेत्योपस्पृशन्त्यपः । - तत्रैव, 25/7/4 1.

चतुर्थेहनिसंचयनम्। तत्रैकोद्दिष्टंश्राद्धम्। पलाशवृंतेनास्थीनिपरिवर्त्यै परिवृत्यां गुष्टकनिष्ठिकाभ्यामादाय पलाशपुटेप्रासनम्।[1] शन्निपत्राणामवकानां कर्दमस्य च अस्थां भंजनम्।[2] सर्वसुरभीणां च कर्षुखननम्। कुशास्तरणं हारिद्रस्य च तत्रा वाजत्यस्थितिचयम् । त्वामनसानातिग्नतिर्वाश्मशानं कार्तुमिच्छतः कंभिकुशाना-स्तीर्यहारिद्रवस्त्रं च[3] तत्रास्थिनं चयनम्।[4] तूष्णीं कुंभनिधानम्।[5] प्रोषितस्य चेन्मरणं भवति प्राचीनावीतिन आहवनीयोद्धरणम्।[6] प्रागग्रैर्द क्षिणाग्रैश्चदर्भैः परिस्तरणम्। निवान्या दोहनम्। गार्हपत्येदक्षिणतो निरूप्ताच्लैभस्मनि अधिश्रयणम्।[7] दक्षिणेनैव सकृदुद्वासनम्।[8] स्रुक्स्रुव प्रतपनसंमार्जनेकृत्वासकृदग्रहणम्। अधस्तात्समिधंधार-यतो दक्षिणेनाहवनीयं प्रतिहरणम् । समिधमाधाय दक्षिणाभिमुखस्यापितृतीर्थेन सकृत्सर्वस्यहोमः।[9] शरीराणां हृत्यकृष्णाजिनेपुरुषविधिनास्थापनम्। उर्णाभिः प्रछादनम्। आज्येनाभिघारणम्। पूर्वद्दाहः।[10] संचयनम्। अस्थिनाशेपालाश वृंतानाषष्ठ्यधिकशतत्रयेण कृष्णाजिने पुरुषविधिनादि।[11] मंददग्धा निपलाश वृंतानि क्रियन्ते। संचयनाय 2 अग्निदाऽग्रयणेननवाशनेपतितस्यभोजने प्रतिग्रहेद्वेष्यस्य द्विषतो वा प्रतिग्रहणे। अयाज्ययाजने अविप्रतिग्रहे उभ्यतोदर्शन प्रतिग्रहणे अन्वारंभणीया

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 25/8/1.

2- तत्रैव, 25/8/3.

3- तत्रैव, 25/8/5.

4- सामं चिकीर्षतः कुंभेऽसन्चमनम्। - का०श्रौ० 25/8/6.

5- निधानं तुष्णीम्। - तत्रैव, 25/8/7.

6- तत्रैव, 25/8/8.

7- तत्रैव

8- तत्रैव

9- सकृत्वापितृवत्सर्वस्य। - तत्रैव, 25/8/12

10- का०श्रौ० 25/8/23.

11- तत्रै , 25/8/14.

पूर्वको यजनीये[1] हनिकृष्णं वा[2] वासोदक्षिणा। अग्न्येवैश्वा नरायाष्टाकपालः। यस्याग्निभिरन्धो यजतेयश्च याजयते तयोश्च । दोहात्पुरोडाशेक्षामे आज्येन परिसमाप्यपुनर्निर्वापः।[3] अग्न्यन्वाधानादि। उपाकृतपशुपलापने वायोसते पशुरित्यनुदेशः।[4] तद्वर्णस्य तद्वयसश्वान्यस्यालंभः।[5] नियोगप्रभृतिप्राक्प्रयोजेभ्यो-म्रियतेक चेतैनेवयागः।[6] प्राक्प्रोक्षणाच्चेदास्योपग्रहणं न भवति। संजपनप्रैषप्रति प्रैषो च । तूष्णीं वपाश्रपण्यादानप्रार्णवनवनाभिघारण प्राणदानालंभाः । याज्यानुवाक्यारहिते दक्षिणेग्नौ उपविश्य मंत्रेणहोमो मंत्रेण वपारनभिर्तिविशेषः । दक्षिणाग्नौ परिधिपरिधानम्।[7] स्पृश्यानुसृश्यायाः आधानं उपवाजनं संमा गश्चतूष्णीम्। सोमश्चेन्मार्जालीयने वायोसतेपशुरित्यनुदेशः।[8] तद्वर्णस्यतद्वयसश्चा-न्यस्यालंभः । नियोगप्रभृतिप्राक्प्रयोजेभ्यो। म्रियते चतैनेवयागः।[9] प्राक्प्रोक्षणा-च्चेदास्योपग्रहणं न भवति। संज्ञापनप्रैषप्रतिप्रैषौ च । तूष्णीं वपाश्रपण्यादान-पर्णिवन वपाभिघारणप्राणदानालंभाः ।स्पृश्यनुस्पृश्यायाः आधानं उपवाजनम्। संमार्गश्चतूष्णीम्। सोमश्चेन्मार्जालीये। तूष्णीं मार्जनम्।[10] ततः पुरोडाशादि। पशोः सर्वावदा ननाशे आध्वर्यवकृत्वा न्यस्यालंभः । अग्न्यन्वाधानादि। एकप्रभृत्यसर्वनाशे तस्थानेध्रुवातः आप्यायताव्यवदानं ग्राह्यम्। संज्ञाप्यमानश्चने

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 25/8/15.

2- कृष्णं वाजो दक्षिणा । - का०श्रौ० 25/8/16.

3- का०श्रौ० 25/8/17.

4- तत्रैव, 25/9/1.

5- तत्रैव

6- तत्रैव 25/9/4.

7- तत्रैव 25/9/5.

8- सोमश्चेन्मार्जालीये । - का०श्रौ० 25/9/6.

9- तत्रैव, 25/9/4.

10- सोमश्चेन्मार्जालीये। - तत्रैव 25/9/6.

संस्कृत्याज्यं सकृद्गृहीत समित्पूर्विकाहुतिः।[1]यत् पशुरिति। इमं मे वरुणेति च प्रत्यचं दे।[2] पशूरवास्त्रवणेसन्नाप्य स्या चानु मंत्रणम्।[3] अहर्गणियूपविरोहणं चेत्तं स्थितेहनित्व ष्टदेवत्यः पाटलः पशुरालभ्यते।[4] तत्रकेचिदाहुः । आराद्रुपकार काव्यं निक्रियन्ते। तत्रैवास्मिन्पक्षेऽसावितिपात्तिकाः । अपरेमीयां सतो अपूर्वोयकारकाणां यज्ञांतिनप्रयोजनमत्यपशोत्तस्य परि समाप्तमपृथेवातः संस्थिते हनीत्युक्तम् । तत्रकेचित्मानि पात्तिकैरंगैरयंपशुः समाप्यत इतियत्पुनः । प्रत्यहमंगानिक्रियंते। प्रत्यहश्चोदितं शाकल्येन कर्त्तव्यमिति। सचापयेवपशौवरी यानिधा तथाग्न्यन्वाधानं चक्रियत एव । अग्निहोत्रआसन्नेषु आहवनीयानुगमने संस्कृत्याज्यं गार्हपत्यसमित्पूर्विकाहुतिः ।[5] उद्धृत्याग्निहोत्रहोमःगार्हपत्यश्चेन्निर्मर्थापित्वाज्यं संस्कृत्याज्यं गार्हपत्यसमित्पूर्विकाहुतिः । उद्धृत्याग्निहोत्रहोमः। गार्हपत्यश्चेन्निर्मथ्यापित्वाज्यं संस्कृत्याज्यं हवनीयेहोमः दक्षिणाग्निश्चोद्गार्हपत्यो तत उद्धरणं सर्वेश्चेक्षुगच्छेयुः शीघ्रं मथित्वा प्रतिवातमुद्धत्य वा यव्याहुतिः।[6] पुनस्तमेवस्थानं नात्वाग्निहोत्र होमः। निवास चेत्प्रांचमुद्धृत्यगार्हपत्ये संस्कृत्यश्चादाहवनीयस्यो पविश्यपिबेताहुत मेवाग्निहोमं भवतीतिपोषणा। सैवतत्र प्रायश्चितिरिति श्रूयते। अग्निहोत्राति पत्तावपहुतिं जुहुयानुमनो ज्योतिरित्यनेन मंत्रेणायदा सायंनहुतं तदाध्वर्यवंकृत्वाप्रातरस्तं त्रेणहोमः । प्रातर हुतं चेत्पुनरुद्धरण वेलायाः प्राग्जुहोत्तिकृत्वै वाध्वर्य वं उद्धरण काले अतिपति।[7] सत्रायशंकल्पाशक्तौ सर्वेपृथग्विश्वजिताति रात्रः[8] ऋत्विग्वरणम्। देवशर्मन्विजिताति

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- का०श्रौ० 25/9/13.

2- इमं मे वरुणेति च प्रत्यृचंद्वाभ्याम् । - तत्रैव, 25/9/14

3- का०श्रौ० 25/9/15.

4- तत्रैव, 25/10/1.

5- तत्रैव, 25/10/20.

6- तत्रैव, 25/10/23.

7- तत्रैव, 25/10/25.

8- सत्तायागुर्याशक्तौ विश्वजितातिरात्रेणयजेत ।- तत्रैव, 25/11/1.

रात्रेण्यजेयुः । ऋत्विग्वेसंसेथन शतदक्षिणे। नदादशशत दक्षिणेन वादीक्षिता नामर्थसमाप्तः उच्छाने सोमविभाजनम्।[1] स्वविभागैः पृथग्विश्वजितामिति रात्रेण सर्वपृष्टेन सर्ववेदशदक्षिणेनयजेरन् । तत्रऋत्विग्वरणाद्यादीपानां तेविशेषः।[2] वरणेसर्ववेददक्षिणे नेति।[3] छन्दोगानम्। सर्वपृष्टेनेति। अपोनिधायाश्वदाभ्यग्रहणं यथोक्तम्। आनीतासुदक्षिणा सुपद्युद्गातापछिद्यतेतं अदक्षिणं संस्थाप्यस एव कृत पुनः क्रीयते।[4] प्रस्तोत्रापछेदे ब्रह्मणेवरदानम्।[5] प्रस्तोतुः पुनर्वरणम्। प्रतिहर्त्तां चेदंदशं देयम्।[6] युगपच्चेद्विकल्पः।[7] आनुपूर्व्येउत्तरं अनुष्टेय।[8] अहगणेयस्मिन्न हनि उद्गातायच्छिद्यते तस्यैवा वृत्तिर्न[9] सर्वेषाम्। पत्न्यनालंकुर्वीचेद्दीक्षास्थाणां विमोकं सिकतास्वासनम्।[10] आरजक्रवणात्।[11] संधिवेलयोः सिकतासुतिष्ठेत्।[12] सुत्यासुवेदिसमीपेसिकतास्वासनावस्था ने।[13] त्रिरात्रां ते स्मृति शुद्धायागूसूत्रेणाभिश्रोद्केन स्नानम्। वासः परिधानम्।[14] अभ्यंजनम्। पावनम्। अक्ष्यंजनम्। वाग्य-

---

1- का०श्रौ० 25/11/4.

2- क्रीतेविभागश्रुते । - तत्रैव, 25/11/5.

3- तत्रैव, 25/11/8.

4- तत्रैव

5- प्रस्तोताचेद् ब्रह्मणे वरं दत्वापुनवरेणम्। - तत्रैव, 25/11/9.

6- प्रतिहर्ताचेत्सर्ववेदसंदेयम् । - तत्रैव, 25/11/10.

7- युगपच्चेद्विकल्पः । - तत्रैव, 25/11/11.

8- पूर्वदौर्बल्यादानुपूर्व्ये प्रकृतिवद् । - तत्रैव, 25/11/12.

9- का०श्रौ० 25/11/13.

10- तत्रैव, 25/11/14.

11- तत्रैव

12- तिष्ठेत्सान्ध वेलयोः । - तत्रैव, 25/11/15.

13- वेदिसमीपेसुत्यासु । - तत्रैव, 25/11/16.

14- का०श्रौ० 25/11/17.

मनम्। प्रावणम्। मेखलाद्युल्लेखनांतम्। कृष्णाजिनादिचैछंडांतम्। भूम्युल्लेखवर्जम्। प्रजाता चेद्दशरात्रा दूर्ध्वस्नानादि।[1] सर्वत्रकालाहुतिश्च। दीक्षित स्यामनोज्ञ-स्वप्नदर्शनेजपः।[2] इन्द्रियस्कन्ने अद्भिरल्पलेकः।[3] उदकतरणोभिमन्त्रणम्। अववर्षणे चामेध्यदर्शने सूर्योपस्थानम्। शोणितकरणोहुतिः।[4] निष्टीवनेवमने प्रस्वेदनेधावनेस्व-प्ने अर्त्यश्रुकरणे च ।[5] मन्त्रमात्रे विशेषः । छर्दिकरणेपयःपानम्।[6] उदकस्यवा। पुनश्छर्दनम्। निष्टपूतवद्धोमः ।[7] वयस्यावप्रस्तु चमसे आहुतिं जुहुयात्। उपाकृत-श्चेद्रुपस्थे कृत्वा आमाहीत्याहुः। हिरण्यगर्भ इत्याग्नीध्रीये वा।[8] दुष्ट चमस होमः। पुनरुन्नयनम्। हुताहुति संसर्गतः परिध्यारनिरूहणम्।[9] चमसात्कुश तल्पेन होमोहुतस्य चेति । चक्षुषेत्यपरः तस्यभक्षयं यजमानमिति अववृष्टचमस भक्षणमिंदु रिंदुमवागाहीति। गायत्रछंदशः त्रिष्टुपछंदसो जगच्छं दसोइतियथासवनमछंदसमेके। पतितस्य चमसस्यालंभनं च। चमसंदुष्टमुत्तर दर्वे उपरवेजुहुयात् । पुनरुन्नयनम्। अंत्यादास्तोकमासिच्य नक्षणम्। कलशाशो पश्चिक्षीरा सेचनम्। हिरण्यतो वेहकस्य । पूतभृति तदेव । अद्भिभेदने मारुतेन ब्रह्मसाम।[10] चतुस्त्रिंशद्धोमाश्च।[11] यच्चत देवब्रह्मसामतन्मरुल्लिंगासुरुक्षुगीयते । अपरेत्वाहुरपूर्वमिति। तत्राप्येके चमसयाग-मिच्छन्ति। सोमापहरणेविधावतेछतेतिप्रैषः । अदृश्ये उरूणपुण्यादानांपूर्वालाभे

---

1- प्रजातायाश्चदशरात्राद्दूर्ध्वस्नानादि । - का0श्रौ0 25/11/18.

2- का0श्रौ0 25/11/21.

3- तत्रैव, 25/11/22

4- तत्रैव, 25/11/23-26.

5- तत्रैव, 25/11/28-31.

6- तत्रैव, 25/11/32.

7- तत्रैव

8- आग्नीध्रीयेवाहिरण्यगर्भइत्यृचा । - तत्रैव, 25/11/35.

9- का0श्रौ0 25/12/1.

10- तत्रैव, 25/12/2-16.

11- चतुस्त्रिंशद्धोमश्च। - तत्रैव, 25/12/17.

पूर्वालाभउत्तरस्याभिषव: गौरिकादीयते।[1] अत्ररूपे णवइत्यनुमन्त्रणम्। नाश्वसंबंधाहुति: अवभृथांतंकृत्वापु नर्यज्ञ:[2] द्रोणकलशभेदेनुलिम्पध्वमिति[3]प्रैष:। अध्वर्यादीनामेव पतितमोपसंग्रहणम्। वषट्कारनिधनेन ब्रह्म साम्नास्तवनम्।[4] यदुपलभ्यतेतदेकेनै राप्याययत: प्रचरणम्।[5] अनुपलभ्यमाने आग्रयणादादानम्।[6] आप्यायनम्। आनीतासुच दक्षिणासुएकायां दत्वातथैव यज्ञ:।[7] कालाहुतिरनुक्तापिप्रतिनिमित्तं द्रष्टव्या। प्रात: सवनेसोमेतिरिक्ते चमसोन्नयनम्। उपाकरणम्।[8] अस्तिसोम इत्यासुमरुत्वतीषु।[9] गायत्रस्तोत्रम्।[10] अनन्तर गतस्तोत्रसंख्ययास्तोम: । सर्वत्र माध्यंदिनाच्चे तथैवोपाकरणम्। बण्महाँ असीत्त्यासुगौरीवितमादित्यवतीषुस्तोत्रं होतुरै:···वैष्णवम्।[11] तृतीय सवनाच्चेत्पूर्ववदुपाकरणादिविष्णो:शिपिविष्ट-वत्तीषु गौरीवितनेति विशेष:।[12] कृत्वैतदुक्थ्यं गृहीत्वा विग्रहणं वा।[13] उक्थसंस्थाद्यतिरिच्येत उन्नीयोपाकरणादि कृत्वाषोडशिकार्य:।[14] षोडशी

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- एकांगांदत्वा समाप्यपुनर्यज्ञ: । - का०श्रौ० 25/12/21

2- अवभृथान्तेवाश्रुति सामर्थ्याद। - का०श्रौ० 25/12/22.

3- अनुलिम्पध्वमिति प्रेष्यति । - तत्रैव, 25/12/24.

4- कलशादिनेवषट्कारनिधनं ब्रह्मसाम्। - तत्रैव, 25/12/23.

5- तत्रैव, 25/12/25.

6- तत्रैव, 25/12/26.

7- तत्रैव, 25/12/27.

8- तत्रैव 25/13/1.

9- मरुत्वतीर्येषु गायत्रेवास्तुवीरन् । - तत्रैव, 25/13/8

10- तत्रैव

11- तत्रैव, 25/13/6.

12- तत्रैव, 25/13/8.

13- एतत्कृत्वोक्थ्यं वा गृहीत्वा विगृह्णीयाद। - तत्रैव, 25/13/9.

14- उक्थ्याच्चेत्षोडशी कार्य: ।- तत्रैव, 25/13/10.

नश्येतद्कृत्वातिरात्रं॥[1] अतिरात्र्येतथैवकृत्वाबृहन्महाव्रतं वासोर्यामो वा।[2] आप्तोर्यामे चे तथैव कृत्वा तस्यैवावृत्तिः । अथवा प्रातःसवनादतिरिक्तस्योत्तरे संधावनम्। तृतीयसवनाच्चेद्धारियोजयनेवनीय होमः ।[3] अस्मृता वृजीवमिवस्याप्लव ग्रहणम्।[4] सर्वपक्षेषुकालाहुतिः । दीक्षितानामुपतापेकालाहुति राग्नीध्रनयनग्रेवः।[5] तस्मिन्नकृतेपि तद्देशो वृतोप्यानामैकेनेच्छायाचिकित्सा। अस्थ्नामुपनहनेनैदिष्टिनमुपदीक्षयते नसह्य जेरन्। प्राक्ग्रहणादक्षिणपूर्वस्या वेदिस्रक्त्यां यामिनस्तु वनं मार्जयित्वा। कृतेमार्जाली पंत्रिः परियन्ति पितृवत् । तथ्यानूरू वा प्रानास्तो त्रियाजयन्तर।[6] अग्नआयू वीतिप्रतिपदन्न। कर्मापवर्गाद संवत्सरे पूर्णेस्थि यज्ञ यथोक्तः।[7] एकयजे मरणान्तकर्म।[8] साग्निकेसत्रे यजमानमरणे चेत्कालाहुतिः। सोपत्करणस्या हिताग्न्या वृताद्दहनम्। नैदिष्टिनः समारोह्योद्वसायनिर्मथ्यविहृत्य नखनिकृंतनाद्युदासनातं[9] सान्नपातिकं उपह प्रार्थनम्।[10] अग्निसंसर्गः । समान जनपदसंसवे महारात्रे प्रातरनुवाको पाकरणम् । अग्रेणाग्रतरेण कर्म प्रवर्त्तनम्। सुसमिद्धहोमः।[11]

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- षोडशिवश्चेदतिरात्रः । - का०श्रौ० 25/13/11.

2- अस्येर्यामो वा । - तत्रैव, 25/13/14.

3- तृतीयसवनाच्चेद्धारियोजनेऽवनीयहोमः । - तत्रैव, 25/13/17.

4- अस्मृता वृजीस्याब्वहरणम् । - तत्रैव, 25/13/18.

5- आग्नीध्रमेनं नयतेति ब्रूयात्कृतचेद् । - तत्रैव, 25/13/20.

6- का०श्रौ० 25/13/33.

7- कर्मापवर्ग्यादसंभवान्मरणस्य । - तत्रैव, 25/13/36.

8- तत्रैव, 25/13/36, 25/14/1.

9- तत्रैव, 25/13/3.

10- तेपूपहवमिष्ट्वाऽग्नीन्त्संसृजेत । - तत्रैव, 25/14/4.

11- सुसमिद्धहोमः । - तत्रैव 25/14/9.

उत्तरादुत्तर कार्यम्।[1] वृषण्वनी प्रतिपदिछणनुवाचनं वा।[2] वृहद्रथंतरपृष्टय: कार्य:[3] माध्यंदिनेपवमाने तौरश्रवसे उच्यते।[4] अभीकादीनि चैके।[5] प्रात: सवनेनिपतकालेसं वेशायेत्याहुति: ।[6] त्रिष्टुभजगत्या इत्यु तरयो: सवनयो:।[7] वाहवीयादीनि होताशं सति।[8] साख्य मरणेछ्यापृतिसवनं यथासूत्रितां होम:।[9] सर्वमरणेछ्या[10] सर्वेषाम्। गिरिभिन्नथंतरे।[11] सं स्रव: गिरौ।[12] रथाइनांतरेच।[13] अविद्विषाण्योर्वा विद्विषाण्योर्वा विद्विषेणापि।[14] सोमहादैकालाहुति पूर्वप्रतिनिधाय तत एव यज्ञ: समापनम्। पंचगा वो दक्षिणा।[15] प्राग्द्वादशाहात्पुनर्यज्ञ:।[16]

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- संस्थोत्तरं च कुर्यात् । - का0श्रौ0 25/14/10.

2- इच्छन्वृषण्वती प्रतिपद । - तत्रैव, 25/14/11.

3- वृहद्रथंतर पृष्ठ: । - तत्रैव, 25/14/12.

4- तत्रैव, 25/14/13.

5- तत्रैव, 25/14/14.

6- तत्रैव, 25/14/15.

7- त्रिष्टुभजगत्या इत्युत्तरयो: सवनयो: । - तत्रैव, 25/14/16

8- तत्रैव, 25/14/17.

9- तत्रैव, 25/14/18.

10- सर्वमरणमिच्छन्त: सवेऽनुसवनम्। - तत्रैव, 25/14/21.

11- बन्धन्तरेऽसंस्रवो गिरिन्नच्येत । - तत्रैव, 25/14/22.

12- गिरौ। - तत्रैव, 25/14/23.

13- रथाहने च । - तत्रैव, 25/14/24.

14- सर्वत्रा विद्विषाणाम् । - तत्रैव, 25/14/25.

15- पन्चगा दत्वा प्राग्द्वादश्या: पुनर्यज्ञ: । - तत्रैव, 25/14/29

16- तत्रैव,

सत्रेप्येतदेवाहहरावर्तेति ।[1] प्रमादात्तत्रोपि कर्मण्य त्वा इदानीं कालाहुति वशिष्टे नानिमित्तेन पद्धती सर्वेषां पुत्रा पुरोहिणी । इति सम्प्रदायेप्राय-श्चित्ताध्याय: समाप्त: इति श्रीमाल ववंशावतंस वाजपेय्युनामक सम्प्रदाय-शर्मकृताकात्यायनश्रौतसूत्र सम्प्रदायपद्धति: समाप्ता: ।

---

---

---

1- सत्रेप्य विशेषात् । - का०श्रौ० 25/14/31

## प्रयुक्तग्रन्थसङ्केतादिनिर्देशिका

| ग्रन्थनाम | संकेत: | प्रकाशनस्थानम् |
| --- | --- | --- |
| 1- अग्निचयन | अ०च० | डॉ० विश्वम्भरनाथ त्रिपाठी |
| 2- अथर्ववेद: (सायणभाष्यम्) | अ०, अ०सं० | सं० विश्वबन्धुशास्त्री |
| 3- अमरकोष: (रामाश्रयी टीका) | अ०को० | निर्णयसागर, बम्बई |
| 4- आपस्तम्बश्रौतसूत्रम् | आ०श्रौ०सू० | चौखम्बा प्रकाशन वाराणसी |
| 5- ऋग्वेद: (सायणभाष्यम्) | ऋ० | वैदिक संशोधन मण्डल, पूना |
| 6- ऐतरेयब्राह्मणम् (सायणभाष्यम्) | ऐ०ब्रा० | सं० डा० सुधाकर मालवीय |
| 7- काठक संहिता | का०सं० | औन्ध, महाराष्ट्र |
| 8- काण्वसंहिता | का०सं० | सं० श्रीगोपालचन्द्र मिश्र वाराणसी |
| 9- कात्यायनश्रौतसूत्रम् । | का०श्रौ०सू० | सं० वेबर |
| 10- कात्यायनश्रौतसूत्रभूमिका (सरला वृत्ति) | का०श्रौ०भू० | म०म० विद्याधर शर्मा गौड़ |
| 11- कौषीतकिब्राह्मणम् | कौ०ब्रा० | बी० लिंडनर, जेना |
| 12- गोपथब्राह्मणम् | गो०ब्रा० | पाणिनिकन्या विद्यालय, वाराणसी |
| 13- जैमिनिसूत्राणि | जै०सू० | आनन्दाश्रम, पूना |
| 14- जैमिनीयन्यायमाला (सविस्तरा) | जै०न्या० | चौखम्बा प्रकाशन, वाराणसी |
| 15- ताण्ड्यब्राह्मणम् | ता०ब्रा० | चौखम्बा संस्थान, वाराणसी |
| 16- तैत्तिरीयब्राह्मणम् | तै०ब्रा० | आनन्दाश्रम, पूना |
| 17- तैत्तिरीयसंहिता (सभाष्या) | तै०सं० | वैदिक संशोधन मण्डल, पूना |
| 18- धर्म का स्वरूप | ध०स्व० | श्री गोपालचन्द्र मिश्र, वाराणसी |
| 19- धर्मशास्त्र का इतिहास (काणे) | ध०इ० | हिन्दी समिति सूचना विभाग, लखनऊ । |
| 20- निरुक्तम् | नि० | खेमराज श्रीकृष्णदास, बम्बई |
| 21- पारस्करगृह्यसूत्रम् | पा०गृ० | खेमराज श्रीकृष्णदास, बम्बई |

| | | |
|---|---|---|
| 22- प्राचीनभारतीयसामाजिकधर्म: | प्रा०भा०सा०ध० | डा० श्रीकिशोर मिश्र: |
| 23- बौधायनधर्मसूत्रम् | बौ०ध०सू० | चौखम्बा संस्कृत सीरीज, वाराणसी |
| 24- बौधायनश्रौतसूत्रम् | बौ०श्रौ०सू० | सं० कैलेण्ड |
| 25- बौधायनशुल्वसूत्रम् | बौ०शु०सू० | सं० विभूतिभूषण भट्टाचार्य: |
| 26- बौधायनस्मृत्याह्निककाण्डम् | बौ०स्मृ०का० | आनन्दाश्रम, पूना |
| 27- बृहदारण्यकोपनिषद | बृ०उ० | सर्वहितैषी प्रकाशन, वाराणसी |
| 28- भारतीयकर्मकाण्डस्वरूपाध्ययनम् | भा०क०स्व० | डॉ० विन्ध्येश्वरी प्रसादत्रिपाठी |
| 29- मनुस्मृति: | म०स्मृ० | चौखम्बा प्रकाशन |
| 30- माध्यन्दिनसंहिता (उवटमहीधरभाष्यम्) | मा०सं० | मोतीलाल बनारसीदास |
| 31- मैत्रायणीसंहिता | मै०सं० | औन्ध, महाराष्ट्र |
| 32- यजुर्वेद: (भाष्यम्) | यजु० | स्वामी दयानन्द |
| 33- यज्ञतत्त्वप्रकाश: | य०प्र० | सं० पं० पट्टाभिरामशास्त्री |
| 34- याज्ञवल्क्यस्मृति: | या०स्मृ० | चौखम्बा संस्कृत सीरीज, वारा० |
| 35- लाट्यायनश्रौतसूत्रम् | ला०श्रौ०सू० | चौखम्बा प्रकाशन, वाराणसी |
| 36- वेदशाखापर्यालोचनम् | वे०प० | डॉ० श्रीकिशोरमिश्र: |
| 37- वैखानसश्रौतसूत्रम् | वै०श्रौ०सू० | |
| 38- वैदिककोश: | वै०को० | बनारस हिन्दू युनिवर्सिटी |
| 39- वैदिककोष: | वै०को० | इंग्लो ओरियन्टल प्रेस, लाहौर |
| 40- वैदिकसाहित्य और संस्कृति | वै०सा०सं० | आचार्य बलदेव उपाध्याय |
| 41- वेदाङ्ग (लगध) ज्योतिषम् | वे०ज्यो० | कलकत्ता संस्कृत कालेज |
| 42- शतपथब्राह्मणम् | श०ब्रा० | अच्युत ग्रन्थमाला वाराणसी |
| 43- शाङ्खायनब्राह्मणम् | शा०ब्रा० | कलकत्ता संस्कृत कालेज |
| 44- श्वेताश्वतरोपनिषद | श्वे०उ० | गीता प्रेस, गोरखपुर |
| 45- शुक्लयजुर्वेदप्रातिशाख्यम् ज्योत्स्नावृत्ति: | शु०प्रा० | सं० डा० युगलकिशोरमिश्र: |

| | | |
|---|---|---|
| 46- श्रीमद्भागवतम् | भा० | गीताप्रेस, गोरखपुर |
| 47- सत्याषाढश्रौतसूत्रम् | स०श्रौ०सू० | आनन्दाश्रम, पूना |
| 48- सम्प्रदायप्रबोधिनीशिक्षा | सं०प्र०शि० | प्रो०डॉ० गोपालचन्द्रमिश्रः |
| 49- सामवेदः | सा०सं० | सं० श्रीपाद दामोदरसातवलेकर |
| 50- स्मृतीनां समुच्चयः | स्मृ० सं० | आनन्दाश्रम, पूना |
| 51- सिद्धान्तकौमुदी | सि०कौ० | निर्णयसागर, बम्बई |
| 52- हिन्दू संस्कृति का दृष्टिकोण | हि०दृ० | श्रीगोपालचन्द्रमिश्रः, काशी |




—

